# श्रीभगवद्भक्तिरसायनम्

## उल्लासत्रयोल्लसितम्

### टीकाटिप्पण्यादिभिरुपशोभितम्

आनन्दास्पदमब्जनेत्रमतसीमालामलश्यामळ-
ङ्काञ्चीकङ्कणहारकुण्डलतुलाकोटीकिरीटाङ्कितम् ।
आधिव्याधिहरम्परश्चरणयोरापातुकानान्नृणा-
मासेवे गुरुवायुमन्दिरगतन्तेजो मनोमोहनम् ॥



स्मर्तव्यस्सततङ्कृष्णो विस्मर्तव्यो न जातुचित् ।
सर्वे विधिनिषेधास्स्युरेतयोरेव किङ्कराः ॥

( एतयोरेव = कृष्णस्मरणविस्मरणविधिनिषेधयोरेव )

—:o:—

बहिस्त्वं वैयग्र्यम्प्रकटय परं लौकिकविधि-
ष्ववर्ज्येषु, स्थैर्यम्भज भगवतः पादकमले ।
विटेषु स्निह्यन्तीमिव मुहुरसारैरभिनयै-
र्धने बद्धाशान्ताङ्गणय धिषणे वारवनिताम् ॥

—:o:—

अरुणाधरामृतविशेषितस्मितं
वरुणालयानुगतवर्णवैभवम् ।
तरुणारविन्ददळदीर्घलोचन-
ङ्करुणामयङ्कमपि बालमाश्रये ॥

—:o:—

अंसालम्बितवामकुण्डलभरम्मन्दोन्नतभ्रूलत-
ङ्किञ्चित्कु[illegible]कोमळाधरपुटं साचिप्रसारेक्षणम् ।
आलोलाङ्गुलिपल्लवैर्मुरळिकामापूरयन्तम्मुदा
मूले कल्पतरोस्त्रिभङ्गिललितन्ध्याने जगन्मोहनम् ॥

—:**:—

स्मर्तव्यस्सततङ्कृष्णो विस्मर्तव्यो न जातुचित् ।
सर्वे विधिनिषेधास्स्युरेतयोरेव किङ्कराः ॥

( एतयोरेव = कृष्णस्मरणविस्मरणविधिनिषेधयोरेव )

—:o:—

बहिस्त्वं वैयग्र्यम्प्रकटय परं लौकिकविधि-
ष्ववर्ज्येषु, स्थैर्यम्भज भगवतः पादकमले ।
विटेषु स्निह्यन्तीमिव मुहुरसारैरभिनयै-
र्धने बद्धाशान्ताङ्गणय धिषणे वारवनिताम् ॥

—:o:—

अरुणाधरामृतविशेषितस्मितं
वरुणालयानुगतवर्णवैभवम् ।
तरुणारविन्ददळदीर्घलोचन-
ङ्करुणामयङ्कमपि बालमाश्रये ॥

—:o:—

अंसालम्बितवामकुण्डलभरम्मन्दोन्नतभ्रूलत-
ङ्किञ्चित्कु[illegible]कोमळाधरपुटं साचिप्रसारेक्षणम् ।
आलोलाङ्गुलिपल्लवैर्मुरळिकामापूरयन्तम्मुदा
मूले कल्पतरोस्त्रिभङ्गिलळितन्ध्याने जगन्मोहनम् ॥

—:**:—

॥ श्रीः ॥

# श्रीभगवद्भक्तिरसायनम्

श्रीपरमहंसपरिव्राजकाचार्यवर्य-विश्वविश्रुतसर्वतन्त्र-स्वतन्त्रताक-श्रीमधुसूदनसरस्वतीयतिवराविरचितम्,

प्रथमोल्लासे स्वकर्तृकृतटीकोपस्कृतम्, शेषयोश्चो-ल्लासयोः "पोल्पाक्करमनय्क्कल् अनुजनम्पूतिरिप्पाट्, दामोदरन्नम्पूतिरिप्पाट्" इति वा निर्दिश्यमानेन समस्तशास्त्रसमुपकारकन्यायशास्त्रप्रभृतौ श्रीपरीक्षिदित्य-परनामविराजमान - महामहामहिम - श्रीरामवर्मनाम-धेय-गोश्रीमहाराज,महामहोपाध्याय-भट्ट- श्रीगोदवर्म-नामक -कोटिलिङ्गराज,शाब्दिकतिलक-श्रीमद्य्याशा-स्त्रिमहीसुरमहोदयादिशिष्येण वेदान्तितिलकबिरु-दभाजा श्रीदामोदरशर्मणा निर्मितया किञ्चिद्व्याख्यया सहित,मुल्लासत्रितयेऽपि सविवृतिके तत्प्रणीतटिप्पणी-मिळितञ्च ।

तच्च तेषां श्रीमन्नम्पूतिरिप्पाट्महोदयानामन्तेवासिना "कुन्नम्परम्प् शङ्करन्नम्पूतिरि" इत्युच्यमानेन शङ्करशर्मणा श्रीवाराणस्यान्ताराख्यमुद्रणयन्त्रालये मुद्रयित्वा प्रकाशितम् ।

कोळम्बाब्दाः ११२९ . क्रैस्ताब्दाः १९५० .



मूल्यं सपादरूप्यकद्वयम् ।

यतस्सर्वं जातं वियदनिलमुख्यञ्जगदिदं
स्थितौ निश्शेषँय्योऽवति निजसुखांशेन मधुहा ।
लये सर्वं स्वस्मिन् हरति कलया यस्तु, स विभु-
श्शरण्यो लोकेशो मम भवतु कृष्णोऽक्षिविषयः ॥ '

( परब्रह्मैकरूपत्वमैन्द्रियकत्वञ्च श्रीकृष्णविग्रहस्य ग्रन्थान्ते दर्शयिष्यते )

असूनायम्यादौ यमनियममुख्यैस्सुकरणै-
र्निरुध्येदञ्चित्तं हृदि विलयमानीय सकलम् ।
यमीड्यम्पश्यन्ति प्रवरमतयो मायिन,मसौ
शरण्यो लोकेशो मम भवतु कृष्णोऽक्षिविषयः ॥
पृथिव्यान्तिष्ठन् यो यमयति महीं, वेद न धरा
यमित्यादौ वेदो वदति जगतामीशममलम् ।
नियन्तारन्ध्येयम्मुनिसुरनृणाम्मोक्षद,मसौ
शरण्यो लोकेशो मम भवतु कृष्णोऽक्षिविषयः ॥
विना यस्य ध्यानं व्रजति पशुतां सूकरमुखां
विना यस्य ज्ञानञ्जनिमृतिभयँय्याति जनता ।
विना यस्य स्मृत्या कृमिशतजनिं याति स विभु-
श्शरण्यो लोकेशो मम भवतु कृष्णोऽक्षिविषयः ॥
नरातङ्कोत्तङ्कश्शरणशरणो भ्रान्तिहरणो
घनश्यामो वामो व्रजशिशुवयस्योऽर्जुनसखः ।
स्वयम्भूर्भूतानाञ्जनक उचिताचारसुखद-
श्शरण्यो लोकेशो मम भवतु कृष्णोऽक्षिविषयः ॥
यदा धर्मग्लानिर्भवति जगताङ्क्षोभकरणी
तदा लोकस्वामी प्रकटितवपुस्सेतुधृगजः ।
सतान्धाता स्वच्छो निगमगणगीतो व्रजपति-
श्शरण्यो लोकेशो मम भवतु कृष्णोऽक्षिविषयः '

इत्यादिभगवत्पादप्रार्थितं व्रजवल्लभम् ।
भजे भक्तिरसालम्बविभावमतिशोभनम् ॥

॥ श्रीगुरुश्शरणम् ॥

## ॥ प्रस्तावना ॥

अथ श्रीभगवद्भक्तिरसायनमधिकृत्य किञ्चित् प्रस्तूयते— यदाकारे मनसि निरावरणमानन्दांशो भवति तदाकारमप्रयत्नम्मनस्तिष्ठतीति योगि-भोगि-वियोगिसाधारणोऽनुभवः। कथन्तर्हि योगिनो भोगिनो वा व्युत्थानं, वियोगिनश्च वियोगव्यथेति चेत्, भोगिनो विषयाद्यल्पत्वात्, वियोगिनो विषयासन्निधानात्, योगिनोऽसिद्धस्य पुनरावरणात्, सिद्धस्य तु प्रारब्धादेव, प्रारब्धात्तु सर्वेषाम्। "अथ यदल्पन्तन्मर्त्यं, यो वै भूमा तत् सुख"मिति श्रुतेर्योगिष्वपि भगवति युक्तो युक्ततमः। तदुक्तम्—

"योगिनामपि सर्वेषाम्मद्गतेनान्तरात्मना।
श्रद्धावान् भजते यो मां स मे युक्ततमो मतः" ॥ इति।

युक्तश्चैतत्, यो वाऽल्पम्भुङ्क्तेऽल्पे वा मनो युङ्क्ते, स भूमार्थं व्युत्तिष्ठते। भूम्नि युक्तो युञ्जानो वा कुतो व्युत्तिष्ठताम्? अत एवोक्तम्—

"त्रिभुवनविभवहेतवेऽप्यकुण्ठ-
स्मृतिरजितात्मसुरादिभिर्विमृग्यात्।
न चलति भगवत्पदारविन्दा-
ल्लवनिमिषार्धमपि यस्स वैष्णवाग्र्यः" ॥ इति।

अक्षय्यो निधिरेष भूमा भगवान्, यत्रैकार्थाभिनिवेशिताऽपि नारिलक्षणतामादधाति। प्रत्युत—

"सर्वभूतात्मके तात ! जगन्नाथे जगन्मये ।
परमात्मनि गोविन्दे मित्रामित्रकथा कुतः" ॥

इति महाभागवतलक्षणमेवाद्धाति । सर्वाधिकारिकोऽयम्भक्तिरसस्तादृशो यत्—

"धावन्निमील्य वा नेत्रे न स्खलेन्न पतेदिह" । इति ।

यथायथं सर्वपार्षदोऽप्ययम्प्राधान्येन सर्वपार्षदक एव,

"अकामस्सर्वकामो वा मोक्षकाम उदारधीः ।
तीव्रेण भक्तियोगेन यजेत पुरुषम्परम्" ॥

इत्युक्तेऽपि,

"दानव्रततपोहोमजपस्वाध्यायसँय्यमैः ।
श्रेयोभिर्विविधैश्चान्यैः कृष्णे भक्तिर्हि साध्यते" ॥

इत्युक्तेः । न हि भूम्नि योगस्साधनम्भवितुमर्हति, सर्वस्यापि ततोऽल्पत्वात् । अत एवाह ध्रुवः—

"स्वाराज्यँय्यच्छतो मौढ्यान्मानो मे भिक्षितो वत ।
ईश्वरात् क्षीणपुण्येन फलीकारमिवाधनः" ॥ इति ।

तस्यैव हि मात्रामन्येऽन्यदिव मन्यमाना उपजीवन्ति । केनापि रसेन भगवति योगो भगवद्भक्तियोग एव । केन तु रसेनेति निरूपितमत्रैव ग्रन्थकर्तृभिः ।

ननु क्षिप्त-विक्षिप्त-मूढवृत्तयो मात्रामात्रविहितवृत्तयः कामं हीयन्ताम्, निरुद्धैकाग्रवृत्त्योरनवच्छिन्नभूमन्येव विहितवृत्तिकयोः कुतः कतरो विशेष इति चे,न्निरुद्धाद्व्युत्थाय तत एकाग्रे रमन्त आत्मारामाः, हरेरित्थम्भूतगुणत्वात् । एकाग्रमप्येकाग्रतां निरुद्धं समाहितानाम् । तदुक्तम्—

"आत्मारामाश्च मुनयो निर्ग्रन्था अप्युरुक्रमे ।
कुर्वन्त्यहैतुकीम्भक्तिमित्थम्भूतगुणो हरिः" ॥ इति ।

यतो मुक्तिपदे स दायभाग्भवतीत्युच्यते, ततो न मुक्त्यै यतेत, अन्यथैवार्थसिद्धेः,

"तस्यैव हेतोः प्रयतेत कोविदो
न लभ्यते यद्भ्रमतामुपर्यधः" ।

इति न्यायस्यात्रापि तुल्यत्वात् । वैपरीत्यन्तु न,

"श्रेयस्स्रुतिम्भक्तिमुदस्य ते विभो !
क्लिश्यन्ति ये केवलबोधलब्धये ।
तेषामसौ क्लेशल एव शिष्यते
नान्य,द्यथा स्थूलतुषावघातिनाम्" ॥

"मुक्तिन्ददाति कर्हिचित् स्म न भक्तियोगम्" ।

इत्यादेः ।

तर्हि किङ्कैवल्यञ्च ज्ञानादेव? क एवमाह ? न ज्ञानादेवेति, ज्ञानस्यैवाज्ञानविरोधित्वात् । ज्ञानादेव तु कैवल्यम् । भक्त्यर्थमेव ज्ञानेऽपि प्रयतेत । भक्त्यर्थमेव च सर्वत्र प्रयतेत । तदेव ज्ञानम्प्रसङ्गात् कैवल्यार्थमुपकरोति । किमनवबोध्यैवात्मानम्भगवान् भक्ताय मुक्तिन्ददातीति कोऽप्युपपादयति ? तस्मान्निरपेक्षा भक्तित्वेन भक्तिमुक्त्योस्साक्षात्कार्यकारणभावः । भक्त्यर्थमेव च साधीयसी प्रयतनीयता । भक्त्या एव चानन्यथासाध्यत्वरूपम्मुख्यत्वम् । नैतादृशम्मुख्यत्वं ज्ञाने, भक्तस्य मुक्तौ प्रसङ्गसिद्धेरुपपादनात् । किन्तु कैवल्यम्प्रति साक्षात्कारणत्वरूपन्तदन्यदेव । अत एव मुक्ता अपि लीलया विग्रहङ्कृत्वा भजन्त इति भगवत्पादाः, तस्यैवानन्यलभ्यत्वेन प्रयतनीयत्वात् । सर्वदुर्वासनानिवर्तकत्वमपि तस्यैव,

"सर्वभूतात्मके तात ! जगन्नाथे जगन्मये ।
परमात्मनि गोविन्दे मित्रामित्रकथा कुतः" ॥

इति महाभागवतलक्षणमेवादधाति । सर्वाधिकारिकोऽयम्भक्तिरसस्तादृशो यत्—

"धावन्निमील्य वा नेत्रे न स्खलेन्न पतेदिह" । इति ।

यथायथं सर्वपार्षदोऽप्ययम्प्राधान्येन सर्वपार्षदक एव,

"अकामस्सर्वकामो वा मोक्षकाम उदारधीः ।
तीव्रेण भक्तियोगेन यजेत पुरुषम्परम्" ॥

इत्युक्तेऽपि,

"दानव्रततपोहोमजपस्वाध्यायसँय्यमैः ।
श्रेयोभिर्विविधैश्चान्यैः कृष्णे भक्तिर्हि साध्यते" ॥

इत्युक्तेः । न हि भूम्नि योगस्साधनम्भवितुमर्हति, सर्वस्यापि ततोऽल्पत्वात् । अत एवाह ध्रुवः—

"स्वाराज्यँय्यच्छतो मौढ्यान्मानो मे भिक्षितो बत ।
ईश्वरात् क्षीणपुण्येन फलीकारमिवाधनः" ॥ इति ।

तस्यैव हि मात्रामन्येऽन्यदिव मन्यमाना उपजीवन्ति । केनापि रसेन भगवति योगो भगवद्भक्तियोग एव । केन नु पस्येति निरूपितमत्रैव ग्रन्थकर्तृभिः ।

ननु क्षिप्त-विक्षिप्त-मूढवृत्तयो मालामालविहितवृत्तयः कामं हीयन्ताम् , निरुद्धैकाग्रवृत्त्योरनवच्छिन्नभूमन्येव विहितवृत्तिकयोः कुतः कतरो विशेष इति चे,न्निरुद्धाद्व्युत्थाय तत एकाग्रे रमन्त आत्मारामाः, हरेरित्थम्भूतगुणत्वात् । एकाग्रम्मनश्चक्रकान्निरुद्धं समाहितानाम् । तदुक्तम्—

"आत्मारामाश्च मुनयो निर्ग्रन्था अप्युरुक्रमे ।
कुर्वन्त्यहैतुकीम्भक्तिमित्थम्भूतगुणो हरिः" ॥ इति ।

यतो मुक्तिपदं स दायभाग्भवतीत्युच्यते, ततो न मुक्त्यै यतेत, अन्यथैवार्थसिद्धेः;

"तस्यैव हेतोः प्रयतेत कोविदो
न लभ्यते यद्भ्रमतामुपर्यधः"।

इति न्यायस्यात्रापि तुल्यत्वात्। वैपरीत्यन्तु न,

"श्रेयस्सृतिम्भक्तिमुदस्य ते विभो!
क्लिश्यन्ति ये केवलबोधलब्धये।
तेषामसौ क्लेशल एव शिष्यते
नान्य,द्यथा स्थूलतुषावघातिनाम्"॥

"मुक्तिन्ददाति कर्हिचित् स्म न भक्तियोगम्"।

इत्यादेः।

तर्हि किङ्कैवल्यन्न ज्ञानादेव? क एवमाह? न ज्ञानादेवेति, ज्ञानस्यैवाज्ञानविरोधित्वात्। ज्ञानादेव तु कैवल्यम्। भक्त्यर्थमेव ज्ञानेऽपि प्रयतेत। भक्त्यर्थमेव च सर्वत्र प्रयतेत। तदेव ज्ञानम्प्रसङ्गात् कैवल्यार्थमुपकरोति। किमनवबोध्यैवात्मानम्भगवान् भक्ताय मुक्तिन्ददातीति कोऽप्युपपादयति? तस्मान्निरपेक्षो भक्तित्वेन भक्तिमुक्त्योस्साक्षात्कार्यकारणभावः। भक्त्यर्थमेव च साधीयसी प्रयतनीयता। भक्त्या एव चानन्यथासाध्यत्वरूपम्मुख्यत्वम्। नैतादृशम्मुख्यत्वं ज्ञाने, भक्तस्य मुक्तौ प्रसङ्गसिद्धेरुपपादनात्। किन्तु कैवल्यम्प्रति साक्षात्कारणत्वरूपन्तदन्यदेव। अत एव मुक्ता अपि लीलया विग्रहङ्कृत्वा भजन्त इति भगवत्पादाः, तस्यैवानन्यलभ्यत्वेन प्रयतनीयत्वात्। सर्वदुर्वासनानिर्वासकत्वमपि तस्यैव,

"यत्पादपङ्कजपलाशविलासतृप्ताः
कर्माशयङ्ग्रथितमुद्ग्रथयन्ति सन्तः ।
तद्वन्न रिक्तमतयो यतयो निरुद्ध-
स्रोतोगणास्तमरणम्भज वासुदेवम्" ॥

इत्युक्तेः । सर्वविदग्धव्यवहारदोग्धृत्वमपि तत्रैव,

"योगो ज्ञानन्तथा साङ्ख्यं विद्याश्शिल्पादिकर्म च ।
वेदाश्शास्त्राणि विज्ञानमेतत् सर्वंजनार्दनात्" ॥

इत्युक्तेः ।

ननु "मनसो भगवदाकारता सविकल्पकवृत्तिरूपा भक्तिः, द्रवीभावानुपेताऽद्वितीयात्ममात्रगोचरा निर्विकल्पकमनोवृत्तिर्ब्रह्मविद्ये"ति वैलक्षण्यप्रतिपादनेन निर्विकल्पकब्रह्मविद्याया लक्ष्यत्वस्य, "सर्वेशे मनसो वृत्ति"रिति लक्षणे केवलेशस्वरूपमात्राकाराया, ईशत्वविशिष्टाकारायाश्श्रीकृष्णादिदिव्यरूपाकाराया, वा भगवदाकाराया वृत्तेर्लक्ष्यत्वानिवारणेऽपि, वारणात् कथमद्वैतात्मज्ञाने भक्त्यर्थम्प्रयतनीयता ? तत्रोपयोगासम्भवा,त्तस्य भक्तित्वासम्भवाच्चेति चेत्—अस्वाभाविकी शास्त्रादिप्रमाणजन्याऽद्वैताकारा वृत्तिर्विषयेष्वध्यस्तत्वधियम्प्रयोजयति । सेयमेवं यथापूर्वविषयाकारतां विरुणद्धि । ततश्च सर्वंच प्रेमाणम्भगवत्येव प्रतिष्ठापयति । सर्वमेव जगदेवं भगवद्गुणतयाऽवगाह्य सविकल्पाम्भगवदाकारतया चोक्तरूपाम्भक्तिन्निर्वाहयत्यपि । प्रपञ्चसत्यत्वभानसहितस्तु भक्तस्स्वरूपाधिगतेरर्वाक्तनः । तस्योत्पन्नाया अपि रतेरनिर्वाह उक्तः ।

नन्वेव"न्तृतीयम्प्रकारद्वयेनापि प्रपञ्चभानरहित""न्नापश्यमुमयम्मुन" इत्युदाहृतं सविकल्पकत्वासम्भवात् कथम्भक्ति-

रिति चे,न्नहि सविकल्पकत्वं लक्षणे प्रविष्टम्,किन्तु द्रवीभाव-पूर्वकधारावाहिकभगवदाकारमनोवृत्तित्वस्यैव लक्षणत्वात्। सविकल्पकत्वस्य वैलक्षण्ये सम्भवमात्रप्रदर्शनात्। कामादिहेतुकसत्त्वोद्रेकेण द्रवीभावेनोपेते मनसि ब्रह्मविद्याया-स्भक्तित्वमपि, स्वरूपाधिगतेः फलभक्तावनुप्रवेशप्रदर्शनात्। यदि च स्वरूपाधिगतिरनुयाजवत् फलनिर्वाहकमुत्तराङ्गमेवेति मन्यते तथापि फलभूतायां रतौ निरुपमसुखसंविद्रूपेत्युक्तायां रागत्ववत् संवित्त्वं, सम्भवित्वञ्चाखण्डार्थे नापलपितुं शक्यम्। अत एवाद्वैतज्ञानमखण्डार्थे सन्तृप्ताख्ये प्रेम्णि कारणमेवेति सप्रपञ्चम्प्रपञ्चितम्भक्तिचन्द्रिकायान्नारायणतीर्थैः। एवमप्युत,स्पत्त,ल्लौंळित,न्दळित,स्मिळित,-ङ्कुलित,ञ्छुलित,ञ्चलित,ङ्क्रान्तं,विहृत,ङ्कळितञ्चेत्येवङ्गळितान्तप्रेम्णोऽवच्छिन्नविषयकत्वादेवंविधप्रेमभिर्निर्गुणस्था अपि रमन्ते स्म गुणानुकथन एव हरेरिति नानुपपन्नम्। नापि भक्तिरनिरुद्धतो गतिमण्वीम्प्रयुङ्क्त इत्यनुपपन्नम्। भजनीयस्वरूपनिर्णयार्थम्भक्तानामपि तद्विचारस्यावश्यकत्वादित्यत एवोक्तम्। उक्तद्रवीभावानुपेतानान्तदधिकारिणाम्ब्रह्मविद्या तु भक्तितो विलक्षणैवेति। इत्थञ्च भक्त्यर्थत्वम्ब्रह्मविद्याया अपि समीचीन,स्भक्तित्वमपि समीचीन,मनुषङ्गतो मुक्तिजनकत्वमपि समीचीनमेव।

ननु भगवत्स्वरूपमात्राकारा वृत्तिरेवम्भक्तिरप्यास्ताम्, प्रत्यगात्माभेदज्ञान"मेवं शुद्धे त्वम्पदलक्ष्येऽवगते तत्पदलक्ष्येण सहाभेदज्ञानम्भवती"त्युक्त,ङ्कुथन्न भक्तिं व्याहन्ति? द्वैतेनैव भक्तेरुपकारसम्भवादिति चे,दात्मनोऽन्यत्र परमप्रेमास्पदत्वासम्भवा"दात्मनस्तु कामाय सर्वम्प्रियम्भवती"ति श्रुते,रनुभवाच्च, प्रत्यगात्माद्वैतज्ञानमेव परा या भक्तेः परमस्प-

"यत्पादपङ्कजपलाशविलासतृप्ताः
कर्माशयङ्ग्रथितमुद्ग्रथयन्ति सन्तः ।
तद्वन्न रिक्तमतयो यतयो निरुद्ध-
स्रोतोगणास्तमरणम्भज वासुदेवम्" ॥

इत्युक्तेः । सर्वविदग्धव्यवहारदोग्धृत्वमपि तत्रैव,

"योगो ज्ञानन्तथा साङ्ख्यं विद्याशिल्पादिकर्म च ।
वेदाश्शास्त्राणि विज्ञानमेतत् सर्वञ्जनार्दनात्" ॥

इत्युक्तेः ।

ननु "मनसो भगवदाकारता सविकल्पकवृत्तिरूपा भक्तिः, द्रवीभावानुपेताऽद्वितीयात्ममात्रगोचरा निर्विकल्पकमनोवृत्तिर्ब्रह्मविद्ये"ति वैलक्षण्यप्रतिपादनेन निर्विकल्पकब्रह्मविद्याया लक्ष्यत्वस्य, "सर्वेशे मनसो वृत्ति"रिति लक्षणे केवलेशस्वरूपमात्राकाराया, ईशत्वविशिष्टाकारायाश्श्रीकृष्णादिदिव्यरूपाकाराया, वा भगवदाकाराया वृत्तेर्लक्ष्यत्वानिवारणेऽपि, वारणात् कथमद्वैतात्मज्ञाने भक्त्यर्थम्प्रयतनीयता ? तत्रोपयोगासम्भवा,त्तस्य भक्तित्वासम्भवाच्चेति चेत्–अस्वाभाविकी शास्त्रादिप्रमाणजन्याऽद्वैताकारा वृत्तिर्विषयेष्वध्यस्तत्वधियम्प्रयोजयति । सेयमेवं यथापूर्वविषयाकारतां विरुणद्धि । ततश्च सर्वञ्च प्रेमाणम्भगवत्येव प्रतिष्ठापयति । सर्वमेव जगदेवं भगवद्गुणतयाऽवगाह्य सविकल्पाम्भगवदाकारतया चोक्तरूपाम्भक्तिन्निर्वाहयत्यपि । प्रपञ्चसत्यत्वभानसहितस्तु भक्तस्स्वरूपाधिगतेरर्वाक्तनः । तस्योत्पन्नाया अपि रतेरनिर्वाह उक्तः ।

नन्वेव"न्तृतीयम्प्रकारद्वयेनापि प्रपञ्चभानरहित""न्नापश्यमुमयममुन" इत्युदाहृतं सविकल्पकत्वासम्भवात् कथम्भक्ति-

रिति चे,न्नहि सविकल्पकत्वं लक्षणे प्रविष्टम्,किन्तु द्रवीभावपूर्वकधारावाहिकभगवदाकारमनोवृत्तित्वस्यैव लक्षणत्वात्। सविकल्पकत्वस्य वैलक्षण्ये सम्भवमात्रप्रदर्शनात्। कामादिहेतुकसत्त्वोद्रेकेण द्रवीभावेनोपेते मनसि ब्रह्मविद्याया-म्भक्तित्वमपि, स्वरूपाधिगतेः फलभक्तावनुप्रवेशप्रदर्शनात्। यदि च स्वरूपाधिगतिरनुयाजवत् फलनिर्वाहकमुत्तराङ्गमेवेति मन्यते तथापि फलभूतायां रतौ निरुपमसुखसंविद्रूपेत्युक्तायां रागत्ववत् संवित्त्वं, सम्भवित्वञ्चाखण्डार्थे नापलपितुं शक्यम्। अत एवाद्वैतज्ञानमखण्डार्थे सन्तृप्ताख्ये प्रेम्णि कारणमेवेति सप्रपञ्चम्प्रपञ्चितम्भक्तिचन्द्रिकायान्नारायणतीर्थैः। एवमप्युत,म्पत्त,ह्लादित,न्दलित,म्मिलित,-कुलित,ञ्छलित,श्चलित,क्रान्त,विहृत,ङ्कलितञ्चेत्येवङ्कलितान्तप्रेम्णोऽवच्छिन्नविषयकत्वादेवंविधप्रेमभिर्नैर्गुण्यस्था अपि रमन्ते स्म गुणानुकथन एव हरेरिति नानुपपन्नम्। नापि भक्तिरनिच्छतो गतिमण्वीम्प्रयुङ्क्त इत्यनुपपन्नम्। भजनीयस्वरूपनिर्णयार्थम्भक्तानामपि तद्विचारस्यावश्यकत्वादित्यत एवोक्तम्। उक्तद्रवीभावानुपेतानान्तदधिकारिणाम्ब्रह्मविद्या तु भक्तितो विलक्षणैवेति। इत्थञ्च भक्त्यर्थत्वम्ब्रह्मविद्याया अपि समीचीन,म्भक्तित्वमपि समीचीन,मनुषङ्गतो मुक्तिजनकत्वमपि समीचीनमेव।

ननु भगवत्स्वरूपमात्राकारा वृत्तिरेवम्भक्तिरप्यास्ताम्, प्रत्यगात्माभेदज्ञान"मेवं शुद्धे त्वम्पदलक्ष्येऽवगते तत्पदलक्ष्येण सहाभेदज्ञानम्भवती"त्युक्त,ङ्कथन्न भक्तिं व्याहन्ति? द्वैतेनैव भक्तेरुपकारसम्भवादिति चे,दात्मनोऽन्यत्र परमप्रेमास्पदत्वासम्भवा"दात्मनस्तु कामाय सर्वम्प्रियम्भवती"ति श्रुते,रनुभवाच्च, प्रत्यगात्माद्वैतज्ञानमेव परायाः भक्तेः परमप्र-

तिष्ठापकम्। न हि द्वैतेनोपमृदिता भक्तिस्स्वार्थमन्तराऽहैतुकी भवितुमर्हति, स्वात्मनि प्रेम्ण एवाहैतुकत्वसम्भवात्। अत एव "कृष्णोऽहम्पश्यत गति"मित्याह गोपी। यद्येवन्तर्हि कथन्नेशादपेतत्वमिति चे,त्तत्र भगवत्पादीयं समाधानम्—

"सत्यपि भेदापगमे
नाथ तवाहन्न मामकीनस्त्वम्।
सामुद्रो हि तरङ्गः
क्वचन समुद्रो न तारङ्गः"॥ इति।

अवच्छिन्नो निरवच्छिन्नस्यांशो, निरवच्छिन्नो नावच्छिन्नस्येति तदर्थः। तस्मादद्वैतमन्तरा परा भक्तिरिति रिक्तं वचः।

तदेवन्द्रुतचित्ते प्रविष्टस्य भूम्नो भगवत आकारस्य दुरुच्छेद्यतया लीलया विग्रहङ्कृत्वा मुक्ता अपि भगवदाकारस्वात्मवृत्तिसातत्ये रमन्त इत्येवम्महामहिमनि सर्वात्मसम्पदुदये भक्तिरसे स्थिते

×दौर्भाग्यमिन्द्रियाणा-
ङ्कृष्णे विषये हि शाश्वतिके।
क्षणिकेषु पापकरणे-
ष्वपि सज्जन्ते यदन्यविषयेषु॥

इति स्थितिः।

एवंविधा सर्वोपजीव्या परमपुरुषार्थरूपा भगवद्भक्तिर्यदि शास्त्रदृष्ट्या न व्यञ्जिता स्यात्तर्हि शास्त्रव्यासङ्गिभिरुपेक्षिता सती तदुपेक्षामनु जगदेव ततो हीयेत। गुणाधिकैर्हि गृहीतोऽनुष्ठीयमानश्च धर्मः प्रचयङ्गमिष्यतीति हि वर्तते। अतो

---

× दौर्भाग्यमित्यादि। पद्यमिदम्भगवत्पादानाम्प्रकरणस्थम्।

जगदेव समुद्दिधीर्षवस्तत्रभवन्त आचार्याश्श्रीमधुसूदनसरस्वत्यो भगवद्भक्तिरसायनङ्ग्रन्थमरीरचन् । अनेन च ग्रन्थेन विशेषतोऽनुगृहीतम्पण्डितकुलमिति नास्ति सन्देहलेशोऽपि । कथमन्यथा तदीयमुत्तममधीतमभविष्य,द्यदि "भ्रष्टास्ततो भागवता भवन्ती"त्येवमवाक्षास्यत् ।

तदेवमनुग्रहीतॄनाचार्यान् प्रस्तुते प्रस्तावे चरित्रेण किञ्चिदिवानुस्मरेम ।

उपलब्धार्थप्रामाण्येन, तत्रभवताम्मूलपुरुषो राममिश्रो नाम वङ्गदेशाभिजनानाम्ब्राह्मणानां वंशोद्भवो वैदिको ब्राह्मण आसीत् । एतेन च फरीदपुरमण्डलान्तर्गत"कोटालीपाडा"नामको ग्रामो वासस्थानत्वेन कल्पित इति तद्वंशीयकुलपञ्जिकातस्समवगम्यते । आचार्याणाम्पितृपादास्तु प्रमोदनपुरन्दराचार्येत्याख्यया महतीम्प्रख्यातिञ्जग्मुः । तेषाञ्च श्रीनाथचूडामणि-यादवानन्दन्यायाचार्य-कमलजनयन-वागीशगोस्वामीति सुप्रसिद्धनामधेयाः परमविधेयाश्चत्वारस्तनया बभूवुः । तत्र यादवानन्दन्यायाचार्याः प्रतापादित्यस्य राज्ञस्सभाचूडामणिताम्प्रापुः । येषाञ्चापूर्वम्पाण्डित्यं समालोच्य तेन राज्ञा ते"ऽविलम्बसरस्वती"त्युपनाम्ना समलञ्चक्रिरे । माधवसरस्वतीत्याख्यया च तेषाम्परं सुप्रसिद्धिरासीत् ।

तृतीयः पुत्रः कमलजनयनस्तु नवद्वीपे न्यायशास्त्रमधीत्य प्रथमाश्रम एव संसारासारतामवगम्य समुपजातवैराग्यस्तुरीयमाश्रमम्प्रतिपेदे । एषां विद्यागुरवो माधवसरस्वत्यः परमगुरवश्च श्रीरामसरस्वत्य आसन् । आश्रमगुरवो विश्वेश्वरसरस्वत्यो मधुसूदनसरस्वतीत्यभिधानेन तदानीन्त-

न्यूषयामासुः । ततः प्रभृति त एत आचार्याः काश्याश्चतु-ष्पष्टिघट्टे गोपालमठे स्वावासम्प्राचीक्लृपन् ।

एत आचार्या ×गदाधरचक्रवर्तिभिस्सह हरिरामतर्क-वागीशमहाशयानामन्तिके न्यायशास्त्रमध्यगच्छन् । चतुर्थ एवाश्रमे वेदान्तादीनि शास्त्राणि समभ्यस्तान्याचार्यैः । प्रायस्सर्वे निबन्धना अप्येतैरन्तिमाश्रम एव निबद्धा इति प्रतीयते । इत्यादि विद्वद्गोष्ठीषु प्रसिद्धन्तच्चरितम् । तत्रैतौ श्लोकौ भवतः—

नवद्वीपे समायाते मधुसूदनवाक्पतौ ।
चकम्पे तर्कवागीशः कातरोऽभूद्गदाधरः ॥

मधुसूदसरस्वत्या वाचं वेत्ति सरस्वती ।
वाचं वेत्ति सरस्वत्या मधुसूदसरस्वती ॥ इति ।

इमौ च श्लोकौ ग्रन्थकृद्वरिमगरणप्रसङ्गे किञ्चिद्ग्रथाख्याख्य-नव्यव्याख्याकर्तृभिरेवोदाहृतौ ।

Indian Antiquary 1912 P. 10 Para 3 दर्शनतो ज्ञायते, यद्वृत्तरत्नाकरटीकाकर्तृनारायणभट्टसमकालीना आचार्या इति। वृत्तरत्नाकरटीका नारायणभट्टेन १६०२ विक्रमाब्दे ( 1545 A. D ) विर्मितेति—

---

× गदाधरचक्रवर्तिभिरिति ।

नत्वा नन्दतनूजसुन्दरपदं स्मृत्वा गुरोरादरा-
दुर्वीमण्डलमण्डनायितयशोराशेरशेषा गिरः ।
सङ्क्षिप्तोत्क्यतिदक्षदीधितिकृतः प्रत्यक्षचिन्तामणि-
व्याख्यां व्याकुरुते गदाधरसुधीर्मोदाय विद्वत्सताम् ॥

इत्युक्तवन्त एवैते ।

"याति विक्रमशके द्विखषड्भूसम्मित" इति टीकायाम-न्तिमनिर्देशेन ज्ञायते ।

किञ्च,

यत्प्रसादादधीनसिद्धि पुरुषार्थचतुष्टयम् ।
सरस्वत्यवतारन्तं वन्दे श्रीमधुसूदनम् ॥

इत्यनन्तरं, श्रीशेषपण्डितसुतशेषगोविन्दविरचिते सर्व-सिद्धान्तरहस्यविवरणे "गुरुणा मधुसूदनेन य"दिति निर्दिष्ट-त्वादाचार्यशिष्यत्वं शेषगोविन्दस्य प्रकटीकृतम् । अत्र निर्दि-ष्टशेषपण्डितो यदि भट्टोजीदीक्षितगुरुरेव शेषकृष्णपण्डि-तस्तर्हि, 1630 A. D. कालिकत्वस्य भट्टोजीदीक्षितभ्रातू-रङ्गोजीभट्टस्य सिद्धतया, ततः किञ्चित्प्राक्तनत्वन्तद्गुरो-श्श्रीनृसिंहाश्रमस्य समकालिकत्वञ्चाचार्याणां सिध्यतीति पू-र्वोक्तस्समय एव समर्थितो भवति ।

अपिच श्रीहरिभक्तावतंसगोस्वामितुळसीदासोऽपि स-त्सङ्गतमाचार्याणामधिगच्छति स्मेति गोस्वामितुळसी-दासनिर्मितरामायणमानसग्रन्थमधिकृत्याचार्यकृतमभिनन्द-नपद्यम्—

"आनन्दकानने ह्यस्मिंस्तुळसीजङ्गमस्तरुः ।
कवितामञ्जरी यस्य रामभ्रमरभूषिता" ॥

इति च प्रथिता किंवदन्ती । अनयापि समयतस्सम्भा-वितया पूर्वोक्त एवाचार्यसमयस्समर्थ्यते । श्रीतुळसीदास-समयश्च काशिकराजकीयसरस्वतीभवने विद्यमाने तद्धस्त-लिखिते रामायणपुस्तके "सं० १६४१ मार्गशीर्षसुदि ७ रवौ लिखितन्तुळसीदासेने"ति दर्शनात् क्रिस्तषोडशशता-ब्दीति निश्चित एव । अकबरस्य राज्यं राणाप्रतापादि-

त्यस्य च प्रतापकालोऽयमेवेति प्रथत एव। एवञ्च प्रतापादित्याकबरगदाधरभट्टाचार्यतुळसीदासनृसिंहाश्रममधुसूदनसरस्वतीनां समानः कालः ( 1540 A.D.—1623 A.D.) मध्ये सिध्यति। देशश्चाचार्याणान्तत्र तत्र परामृष्टः।

आचार्यरचिता ग्रन्था अद्वैतसिद्धिप्रभृतयो महान्तो लघवश्चान्ये बहवो विदुषामाधारभूता वर्तन्त एवेति किमु वक्तव्यम्। तेषु श्रीमद्भगवद्भक्तिरसायनमुल्लासत्रयसङ्कलितम्प्रथमोल्लासे स्वोपज्ञटीकोपेतम्। (शेषयोस्तदीयटीकाया अद्याप्यनुपलम्भात्) तत्र प्रथमोल्लासः पूर्वम्मुद्रितः। पुनश्श्रीमन्मध्वसम्प्रदायाचार्य-दार्शनिकसार्वभौम-साहित्यदर्शनाद्याचार्य-तर्करत्न-न्यायरत्न-गोस्वामिदामोदरशास्त्रिकृतशेषोल्लासटीकया सह मुद्रितमासीदेव। परमेतादृशस्य ग्रन्थरत्नस्य विशिष्यावधेयस्य प्रकाशने, मूलकर्तॄणामाचार्याणामाशयविवरणे चाद्ययावत्सञ्जातप्रयत्नेष्वपरितुष्यद्भिश्शुद्धतरम्प्रचिकाशयिषुभिः पि० एम्० श्रीदामोदरनम्पूतिरिप्पाट्महोदयैर्विशेषतोऽवधानेन प्रथमोल्लासादारभ्य काचन टिप्पणी, शेषयोः "किञ्चिद्व्याख्या" नाम्ना कापि व्याख्या च निर्माय्यात्र प्रकाश्यते।

व्याख्यातारश्चेमे केरळेषु

"प्रतीची च महानदी"

"निळायास्तु प्रतीरे श्रीनावाक्षेत्रमनुत्तमम्"

इति रीत्या श्रीमद्भागवतादिविश्रुतायाश्श्रीनिळानद्याः प्रतीच्यपरपर्यायायाःपश्चिमवाहिन्या अदूरदेशे शुकपुरग्रामे काश्यपगोत्रे "पोल्पाकरमन" इति सुप्रसिद्धे ब्रह्मोत्तमसदने श्रीवासुदेवनम्पूतिरिप्पाट्महोदयानां सहधर्मिणीषु श्रीपार्वत्यभिधायां कोळम्बवत्सरे १०५८ तमे, क्रैस्तवत्सरे च १८८३ तमे

सति वसुमतीमलमकार्षुः। इमे च बह्वृचा वेदविषये घटोत्कच-पुराख्यमुख्यपरीक्षास्थले कौमार एव वयसि विजयमासाद्य-श्रीपरीक्षिदित्यपरनामविभूषित - महामहामहिम-श्रीरामवर्म-नामधेय-गोश्रीमहाराजप्रमुखतस्तत्तच्छास्त्रमभ्यस्तवन्तः। एवन्ततो विद्यासु स्नातमात्रा एवैते निर्विद्यार्थार्जनादिव्यापारतो, बहुषूपच्छन्दयत्स्वप्यस्वच्छन्दत्वभिया व्यापारान्तरं व्यवच्छिद्य, श्रीवासुदेवस्य भगवतो भक्तवत्सलस्य चरणसरसिजसेवनसमुत्सुकमनसा, स्थिरचरपतेरपि विशिष्य भूलोकवैकुण्ठाख्यश्रीगुरुमरुत्पुरपतेश्श्रीकृष्णस्योपकण्ठे तद्भजनतत्परतया बहून् वत्सरानतिवाहयामासुः।

तदानीमारभ्य कृतस्य भक्तिशास्त्रपरिशीलनस्य परिपाकोऽयं लोकोपकाराय व्याख्यारूपेण प्रवृत्त इति। एते महानुभावास्सम्प्रति काश्यां भगवतश्श्रीविश्वनाथस्य चरणकमलान्तिकमन्ते नितान्तमप्रमादायेति प्राप्तवन्तो

×भगवति तव तीरे नीरमात्राशनोऽहं
विगतविषयतृष्णः कृष्णमाराधयामि।

इति वर्णिते भागवतसमाचारे विचरन्ति।

एतदीयाया अस्यास्सटिप्पणीकव्याख्याया अवलोकने ज्ञायते, यत्- प्रशस्ततरमवहितमत्र कार्यं महोदयैरेभिरिति। अद्ययावत्सञ्जातेषु भक्तिरसायनप्रकाशनेषु मूलकारिका अपि न संशुद्धाः प्रकाशिताः। तन्मार्जने प्रकृतव्याख्याकर्तृभिस्तु बह्ववहितन्दृश्यते। किञ्चिदत्रोदाहरामः— प्रथमोल्लासैकादशकारिकायाम्

कार्याकारतया भेदेऽप्याव‍ृ तम्मायया स्वतः।

---

× भगवतीत्यादि। इयञ्च श्रीगङ्गादेवीम्प्रति भगवत्पादानामुक्तिः। आराधयामि = श्रवणकीर्तनस्मरणादिना सन्तोषयामि।

त्यच्युतग्रन्थमालाप्रकाशिते दृश्यते, किन्तु मूलकारैरे-व स्वीयव्याख्यायान्तस्यांशस्याविरणविक्षेपस्वरूपप्रतिपाद-ने "ऽकार्यस्यापि कार्याकारेण भानं विक्षेप" इति वर्णयित्वा भेद-पदव घटकम्, किन्तु भानपदमिति प्रकटितम्। एवम्बहुषु स्थलेषु नम्भूतिरिप्पाट्महोदयैर्मूले मूलकारीयटीकायाञ्च यथा-वस्थितं संशोध्य प्रकाशितमिति विशेषो विदुषामत्र गोचरो-भवेदेव। स्थलेषु भूयस्स्वेभिस्स्वयं समूह्य संशोधितः पाठः प्राचीने कस्मिंश्चिदादर्शभूते करलिखितपुस्तके तथैव दृष्टोऽस्मा-भिरिति पाठसंशोधनकर्मणि नैपुण्यमेषां विशेषमावहति।

व्याख्यानकरणेऽप्येषाङ्कौशलं विदुषाम्मनस्तोषकरम्। तथाहि—

बाह्यपिण्डस्य नाशेऽपि तिष्ठत्येव मनोमयः।

( उल्लासः १ । कारिका २८ )

इति कारिकायामपिशब्दो "ऽपिशब्दाद्बाह्यस्य देशकाला-दिना व्यवधानेऽपि मनोमयोऽव्यवहित एवे"ति मूलकारैरेव व्याख्यातः। अत्र व्याख्याने "व्यवधानेऽपी"त्यपिशब्दो यदि कारिकायाङ्कण्ठोक्तस्य नाशस्य सङ्ग्राहकस्तर्हि तद्घटितार्थ-"स्यापिशब्दा"दित्युक्तापिशब्दार्थत्वञ्च घटत इति प्रश्न उदे-ति। तत्र चेमे व्याख्याकृतोऽव्यवधानस्य सङ्ग्राहकत्वान्तस्य प्रदर्श्य सामञ्जस्यं स्थापयन्ति टिप्पण्यां "व्यवहितत्वाव्यव-हितत्वरूपवैधर्म्यान्तरस्यापि मूलोक्ततां सम्पादयत्यपिशब्दा-दिती"ति।

एवं "म्मूपासिक्त"मित्याद्येकविंशकारिकायाम्मूषासिक्त-पद "म्मूषा = पुटपाकयन्त्रम्, तद्द्वारा द्रवीभूतन्ताम्रं, यत्र प्रतिमाचाकारघटितोदरे मृदादिसंस्थानविशेषे सिक्त"मिति मूलकारैर्व्याख्यातम्। तत्र सेकाधिकरणत्वञ्च मूषापदवाच्य-

स्य प्रदर्शितपुटपाकयन्त्रस्य, प्रतिमाद्याकारघटितोदरस्य मृदादिसंस्थानविशेषस्य चैकाधिकरणत्वेऽपि न तस्य मूषापदवाच्यत्वमतो मूषायां सिक्तमिति कथमुपपद्येतेत्यसामञ्जस्यमेभिर्व्याख्यातृभिः, पुटपाकयन्त्रमिति वाच्यार्थस्य, तद्द्वारा द्रवीभूतन्ताम्रमिति शक्यसम्बन्धस्य, प्रतिमाद्याकारघटितोदरे मृदादिसंस्थानविशेष इति लक्ष्यार्थस्य प्रदर्शनमिति विभज्य कौशल्येन परिहृतम्। तदेतद्विदुषाम्मनस्सुतरां विनोदयति। प्रथमोल्लासप्रथमकारिकाटीकायाश्चरमटिप्पण्याम्भगवत्पादीयोपनिषद्भाष्यवाक्योदाहरणेन पूर्णता टीकायास्सम्पादिता। एवं स्थलान्तरेष्वपि बहुषु द्रष्टुंय्योग्यम्।

सेयं सटिप्पणीकव्याख्या विद्वद्भिरपि सुतरामनुमोदिता स्वीयं वैशिष्ट्यं स्पष्टीकरोति। जगद्विख्यातवैदुषीकाणां शास्त्ररत्नाकर-सर्वतन्त्रस्वतन्त्र-पण्डितराज-श्रीराजेश्वरशास्त्रिद्राविडमहोदयानामत्र विषये ससाधुवादोऽभिप्रायो व्याख्याया अस्या विद्वत्सम्मतिम्प्रकटयति। पण्डितराजानामभिप्रायस्सहैव मुद्रापितस्सर्वेषामवलोकनाय। के वा पण्डितराजानां वैदुष्यन्न श्रुतवन्तः। न किमपि शास्त्रन्तैरनालोडितं विद्यत इति नातिशयितं वचः। सम्प्रति येष्वेव विचारसभासु सन्निहितेषु, क्वचन भारतवर्षमलङ्कुर्वत्स्वेव वा कामम्पण्डितकुलन्निराकुल, न्निरपवादस्सनातनवादः, शास्त्रपारदृश्वनामेषां सर्वमेव जीवनं सर्वथा धर्मस्थापन-विद्याप्रचारयोरभियोगेषु सफलीकृतमिति को वा न जानाति? । एषाम्माहात्म्यस्यैष सुश्लोको युज्यते—

"शास्त्राण्याकलितानि, शक्यविधयस्सर्वेऽपि सम्पादिता-
धर्मस्थापनशास्त्रवर्धनविधौ व्यस्तं समस्तं वयः।

सम्प्रत्युज्झितवासनं शिवपुरे योगैर्हरिस्सेव्यते
सर्वंपण्डितराजराजतिलकेनाकारि लोकोत्तरम्" ॥ इति ।

तेषामेषामभिप्रायो"ऽतीव चमत्कारपरिपूर्णो लेख" इत्युपक्रम्य यथा परपृष्ठे प्रकाशितस्तथा प्रस्तुतव्याख्याया विषये ततोऽन्यान्यपि बहूनि वैशिष्ट्यानि तन्मुखात् समाकर्णितान्यस्माभि,र्घनपाठिश्रीसुब्रह्मण्यशास्त्रिप्रभृतिभिश्च ।

"किमलभ्यम्भगवति प्रसन्ने श्रीनिकेतने" ।

तदेवं विद्वदभिनन्दितया विशेषसावधानेन सम्पादितया नूतनयाऽनया सटिप्पणीकव्याख्यया सह सोऽयङ्ग्रन्थः प्रकाश्यत इति परम्प्रमोदस्थानम् । अधुना कलिकलुषे काले भागवती भक्तिरेवैका लोकानामवलम्बनायेति, तस्याश्शास्त्रीयस्वरूपप्रचारो लोकोपकारको भगवत्प्रीतिकरश्च समाचार इति न हि वक्तव्यम् । तदत्र कार्ये कृतश्रमास्सर्वेऽप्येते ग्रन्थस्य व्याख्यायाश्च कर्तृ-प्रयोक्तृ-व्याख्यातृ-श्रोत्रध्येत्रनुमोदकाभिनन्दका महानुभावास्समादरणीया एवेत्यत्र नास्माकं संशयलेशोऽपि । तदेवमेवं श्रीकृष्णचरणयोर्निवेद्य विरमामः । इति—

विदुषां वशंवदः
श्रीकृष्णशर्मा

सर्वतन्त्रस्वतन्त्र-शास्त्ररत्नाकर-पण्डितराज-श्रीराजेश्वरशास्त्रिद्राविडमहोदयानामभिप्रायः—

श्रीमद्भिः प्रणीतम्भक्तिरसायनव्याख्यानमखिलमवलोकितम्। अतीव चमत्कारपरिपूर्णो लेखः। मूलस्य, मूलकृद्भिरचितटीकाया,स्तत्र समुदाहृतानाञ्च श्रीमद्भागवतश्लोकानां संशोधनमेकोऽत्र परमो विशेषः। पूर्वव्याख्याकाराणाङ्गोस्वामिश्रीदामोदरलालमहोदयानाञ्चर्चायामपि तत्र तत्र कृतायान्तत्त्वजिज्ञासैव प्रयोजिका, न पराभिभवेच्छेत्यपि वैशिष्ट्यमिह विलोकितम्। अपि च ×साङ्ख्यपातञ्जलवेदान्तादिसिद्धान्तानाँय्यथावत् प्रकाशनमिदमप्यपूर्वमस्माभिरस्मिन् ग्रन्थे दृष्टम्। आलङ्कारिकराद्धान्तप्रदर्शनमप्यत्युत्तमया सरण्या श्रीमद्भिरत्र कृतम्। विशेषतो रससामग्र्या अन्वयव्यभिचाररहितत्वनिरूपणं सर्वेषामेव नश्चेतश्चमत्करोति। सप्रमोदमस्माभिरस्मदीयसाङ्गवेदविद्यालये ग्रन्थोऽयमीशभक्तिविचारे पाठ्यतया निर्धारितोऽस्ति। भक्तिरसायनस्य समीचीनमुद्धरणं श्रीमद्भिः कृतमिति तानभिनन्दामः।

श्रीराजेश्वरशास्त्री
द्राविडः

---

× प्रथमोल्लाससप्तदशकारिकाटीकासम्बन्धिटिप्पण्यादावित्यादिः।

विषयसूची

## प्रथमोल्लासे


| सङ्ख्या | विषयः | | पृष्ठम् |
|---|---|---|---|
| १. | परमपुमर्थभक्तियोगनिरूपणप्रतिज्ञा। | .... | १ |
| २. | चत्वारो योगाः। .... | .... | २ |
| ३. | श्रीमद्भागवतश्रैष्ठ्यम्। .... | .... | ३ |
| ४. | कर्मयोगश्चित्तशुध्यवधिः। .... | .... | ९ |
| ५. | ततो द्रुतचित्तस्याष्टाङ्गयोग-साधनभक्तियोग-ज्ञानयोगैस्साध्यभक्तियोगः। | .... | १० |
| ६. | भक्तेर्विभावादिभीरसनीयत्वम्। | .... | १३ |
| ७. | भक्तियोगस्य पुमर्थत्वम्। .... | .... | १४ |
| ८. | भक्तियोगस्य पुमर्थत्ववादाः। | .... | १९ |
| ९. | भक्तेस्साधनत्ववादाः। .... | .... | २० |
| १०. | साधनसाध्यभेदेन द्वैविध्यम्। | .... | २१ |
| ११. | भक्तियोगस्य ब्रह्मविद्यातो भेदः। | .... | २६ |
| १२. | भक्तियोगस्य निरतिशयपुमर्थत्वम्। | .... | २८ |
| १३. | भक्तियोगस्य ब्रह्मविद्यापेक्षा। | .... | २९ |
| १४. | संसाररोगेणेति कारिकार्थः। | .... | ३१ |
| १५. | भक्तियोगस्य लक्षणम्। .... | ... | ३३ |
| १६. | चित्तद्रुतिर्जतुवत्तापकैः। ... | .... | ३६ |
| १७. | कामादयस्तापकाः। ... | .... | ३७ |
| १८. | संस्काराादिशब्दार्थः। .... | .... | ३७ |
| १९. | अल्पद्रुतौ वासनाभासत्वम्। | .... | ३७ |
| २०. | द्रवतायामप्रविष्टस्यामोक्षः। | .... | ३८ |
| २१. | द्रवतावैषम्येण भक्तत्रैविध्यम्। | .... | ४१ |
| २२. | द्रवावस्थैव प्रणयरशना। .... | .... | ४३ |

| सङ्ख्या | विषयः | पृष्ठम् |
| --- | --- | --- |
| २३. | तत्राप्युत्तमभक्तत्रैविध्यम् । .... | ४३ |
| २४. | द्रवताप्रविष्टो भगवदाकारः स्थिरत्वात् स्थायिभावः । .... .... | ४४ |
| २५. | अस्य परमानन्दरसत्वोपपत्तिः । .... | ४५ |
| २६. | कान्तादिष्वपि रसत्व आवृतन्तदेव कारणम् । | ४६ |
| २७. | आवृतन्तत् प्रमाणवृत्त्या गृह्यते । .... | ४७ |
| २८. | आवृतत्वादेव भक्तिरसापेक्षया न्यूनः परः । | ४८ |
| २९. | साङ्ख्यमते त्रिगुणप्रकृतिमयत्वञ्जगतः । .... | ४९ |
| ३०. | अतः प्रतिवस्तु त्र्याकारदर्शनम् । .... | ५१ |
| ३१. | तत्र मनसि प्रविष्टसुखाकारः स्थायिभावः । | ५३ |
| ३२. | चित्तस्य निरवयवत्वनिराकरणम् । .... | ५३ |
| ३३. | साङ्ख्यवेदान्तयोर्मनो विषयाकारङ्गृह्णाति । | ५५ |
| ३४. | तत्र भाष्यकारवचनोदाहरणम् । .... | ५६ |
| ३५. | अत्र मूषासिक्तपदटीका लक्षणाप्रदर्शनपरा । | ५६ |
| ३६. | भाष्यकारोक्तौ युक्तिप्रदर्शनम् । .... | ५७ |
| ३७. | अत्रार्थे वार्तिककारवाक्योदाहरणम् । .... | ५८ |
| ३८. | एवं सत्येकत्वानेकत्वोपपत्तिः । .... | ५९ |
| ३९. | विनाशित्वाविनाशित्वोपपत्तिः । .... | ६० |
| ४०. | गृहीतभगवदाकारस्य कृतकृत्यत्वम् । .. | ६१ |
| ४१. | कठिनशिथिलचित्तयोस्संस्कारानाधायकत्वाद्भगवद्विषये तयोर्निन्दा । .... .... | ६२ |
| ४२. | संस्कारजनकतायाञ्न्यायवार्तिककृन्मतम् । | ६३ |
| ४३. | चित्तस्य भगवदाकारतासम्पादने सर्वशास्त्राणां व्यापारभेदेन पर्यवसानम् । .... | ६३ |
| ४४. | चित्तस्य विषयाकारस्वभावताखण्डनम् । .... | ६४ |

| सङ्ख्या | विषयः | पृष्ठम् |
|---|---|---|
| ४५. | भगवदाकारस्वभावतोपपादनम् । .... | ६६ |
| ४६. | तथापि शास्त्रस्योपयोगो विषयाकारताविरोधिभगवदाकारतासम्पत्तौ । .... | ६६ |
| ४७. | अत्र प्रमाणानि । .... .... | ६७ |
| ४८. | स्वाकारसमर्पकाणां विषयाणाम्भगवत्यध्यस्तत्वेन ज्ञाने तत्र भगवत्स्फूर्त्या विषयप्रेम्णाम्भगवति पर्यवसानम् । .... .... | ७० |
| ४९. | विषयेषु तुच्छत्वानुसन्धानेन ततो वैराग्यश्चतुर्विधम् । .... .... | ७१ |
| ५०. | चतुर्थस्य परापरभेदः । .... .... | ७२ |
| ५१. | दृष्टानुश्रविकेत्यादियोगसूत्रद्वयव्याख्याने विशेषः । .... .... | ७२—७३ |
| ५२. | अपरवैराग्योदाहरणम् । .... .... | ,, ,, |
| ५३. | परवैराग्योदाहरणम् । .... .... | ७४ |
| ५४. | तस्य ज्ञानापेक्षायाम्प्रमाणानि । .... | ७७ |
| ५५. | कीदृशभगवद्धर्मानुष्ठातुर्ज्ञानवैराग्यपूर्विका भक्तिरुदेतीत्यत्र प्रमाणानि । .... | ८० |
| ५६. | एतादृशभगवद्धर्माणाम्भूमिकाभेदेन निरूपणप्रतिज्ञा, भेदोद्देशाश्च । .... .... | ८३ |
| ५७. | महतां सेवोदाहरणम् । .... .... | ८५ |
| ५८. | तत्र द्वैविध्यम् । .... .... | ८६ |
| ५९. | तद्दयापात्रता । .... .... | ९० |
| ६०. | तत्र द्वैविध्यम् । .... .... | ९१ |
| ६१. | श्रद्धाऽथ तेषान्धर्मेषु । .... .... | ९९ |
| ६२. | श्रद्धाहीननिन्दा । .... .... | ९७ |

| सङ्ख्या | विषयः | पृष्ठम् |
| --- | --- | --- |
| ६३. | हरिगुणश्रुतिः । .... .... | ९९ |
| ६४ | हरिनामसङ्कीर्तने देशकालशौचाशौचनियमाभावः, सर्वसाधारणोऽधिकारः, हरिहरनाम्नोरभेदः, स्मार्तप्रायश्चित्तापेक्षयाऽपि शोधकतरत्वञ्च । .... .... | १००-११६ |
| ६५. | हरिगुणश्रुतिरिति श्रवणादेस्सर्वस्याप्युपलक्षणम् । .... .... | ११६-१२२ |
| ६६. | रत्यङ्कुरोत्पत्तिः । .... .... | १२२-१२३ |
| ६७. | स्वरूपाधिगतिः । .... .... | १२४ |
| ६८. | प्रेमवृद्धिः । .... .... | १२६ |
| ६९. | तस्य स्फुरणम् । .... .... | १२८ |
| ७०. | भगवद्धर्मनिष्ठा । .... .... | १२९ |
| ७१. | स्वस्मिंस्तद्गुणशालिता । .... .... | १३२ |
| ७२. | प्रेम्णः परमा काष्ठा । .... .... | १३२ |

## द्वितीयोल्लासे

| | | |
| --- | --- | --- |
| १. | भक्तिविशेषनिरूपणप्रतिज्ञा । | १३६ |
| २. | द्रुतिकारणकामादिभेदाद्भक्तिभेदः । .... | १३८ |
| ३. | कामस्तद्भेदौ च । .... .... | १४० |
| ४. | ताभ्यान्द्वे रती । .... .... | १४३ |
| ५. | क्रोधः । .... .... | १४७ |
| ६. | तज्जभक्तेर्द्वेषो रतिरिति भेदौ । .... | १४९ |
| ७. | भयम् । .... | ” |
| ८. | स्नेहो द्विविधः, तत्र द्वितीयविधस्य त्रैविध्यञ्च । | १५० |
| ९. | तद्विवरणम् । वत्सलप्रेयोरती च । .... | १५१ |

| सङ्ख्या | विषयः | पृष्ठम् |
|---|---|---|
| १०. | हर्षस्तच्चातुर्विध्यञ्च । | १५८ |
| ११. | परानन्दमयश्रीरामाहात्म्यकारणकहर्षोच्छुद्धरतिः । | ,, |
| १२ | हासः । | १५९ |
| १३. | विस्मयः । | ,, |
| १४. | उत्साहः । | १६० |
| १५. | शोकः । | १६१ |
| १६. | जुगुप्सा द्विधा । | १६२ |
| १७. | उद्वेगिनी, क्षोभिणी, शुद्धा । | १६३ |
| १८. | दयोत्साहः । | १६४ |
| १९. | दानोत्साहः । | १६५ |
| २०. | धर्मोत्साहः । | १६६ |
| २१. | शमः । | १६७ |
| २२. | चित्तद्रुतेरियत्तया स्थायिभावानामियत्ता । | १६८ |
| २३. | भक्तिरसतानर्हाःस्थायिभावाः । | १६९ |
| २४. | धर्मस्य भगवत्प्रसादजनकत्वेऽपि धर्मवीरो न भक्तिरसः । | १७० |
| २५. | ईर्ष्याजभयजद्वेषौ न भक्तिरसत्वं यातः । | १७३ |
| २६. | स्थायिनः प्रीत्यविरोधित्वे सति भगवद्विषयकत्वम्भक्तिरसत्वे तन्त्रम् । | १७४ |
| २७. | सप्तानां व्यामिश्रभावरूपत्वम् । | १७७ |
| २८. | तत्स्थायिकरसानाम्मिश्ररसत्वम् । | ,, |
| २९. | अमिश्रा रतयो रसाश्च । | १७९ |
| ३०. | श्रृङ्गारस्य मिश्रितत्वेऽपि बलवत्तरत्वम् । | १८० |
| ३१. | केवलसङ्कीर्णादिभेदाः । | १८३ |
| ३२. | राजस्यादिभेदाः । | १८६ |

| सङ्ख्या | विषयः | पृष्ठम् |
|---|---|---|
| ३३. | सर्वासां सत्त्वजत्वे भेदव्यवस्था। .... | ” |
| ३४. | राजसी तामसी च न रती। .... | १८८ |
| ३५. | भक्तिर्दृष्टादृष्टोभयैकैकफला। .... | १८९ |
| ३६. | उभयफलवत्त्वे प्रमाणम्। ... ... | १९२ |
| ३७. | दृष्टस्यादृष्टस्य वा प्रतिबन्धकानि। .... | १९३ |
| ३८. | दृष्टादृष्टपरिभाषा। .... .... | १९४ |
| ३९. | प्रतिबन्धस्सुखव्यक्तौ, न तु सुखे नित्ये। .. | १९५ |
| ४०. | रजस्तमःक्षये पूर्वस्प्रतिबद्धैव चित्तद्रुतिर्भक्तिरसत्वं याति। .... ... | १९८ |
| ४१. | द्रुतेरभावाद्वेनादौ नैव भक्तिः। .... | १९९ |
| ४२. | रजस्तमोविहीना तु मता रतिः। .... | ” |
| ४३. | रजस्तमोहानतारतम्यात् कारकाद्रुतितारतम्यम्। .... .... | २०० |
| ४४. | तज्ज्ञापकं विरहे दुःखतारतम्यम्। ... | २०१ |
| ४५. | वैकुण्ठादौ मृदुतीव्रादिरूपा रतिः। .... | २०२ |
| ४६. | श्रीमद्वृन्दावनमहिमा। ... | २०२-२१५ |
| ४७. | स्पर्शादिना षड्विधा भगवद्रुतिः। .... | ” |
| ४८. | सामान्यतो भगवद्रुतिः प्रकारान्तरेण द्विधा। | २१६ |
| ४९. | शुद्धाऽनुपाधिरेकरूपा। .... | २१७ |
| ५०. | कामसम्बन्धभयतस्सोपाधिस्त्रिधा। .... | २१८ |
| ५१. | चतुष्टयमेकदा व्यक्तत्वे परमो रसः। .... | २१९ |
| ५२. | अभिव्यक्तिभेदाद्भिन्ने तत्र क्वचिदभ्यासोपदेशः। .... .... | २२० |
| ५३. | व्रजदेवीषु दृष्टश्चतुष्टयमभ्यासेन सुसम्पादम्। | २२१ |
| ५४. | व्रजस्वरूपन्तद्देवीक्रीडा च। .... | २२१-२३५ |

| सङ्ख्या | विषयः | पृष्ठम् |
|---|---|---|
| ५५. | चित्ररसता। .... .... | २३७ |
| ५६. | दशमी रसता। .... .... | २३८ |
| ५७ | देवादिरतेर्भावत्वन्देवतान्तरेषु योज्यम्। .... | ,, |
| ५८ | परमानन्दात्मनि सर्वेभ्योऽपि परमरस एव। | ,, |


## तृतीयोल्लासे


| | | |
|---|---|---|
| १. | सामान्यतो रसस्वरूपाधारप्रत्यायकप्रतीतीनामुत्थापनम्। .... .... | २४४ |
| २. | तत्र रसस्वरूपम्। .... .... | २४५ |
| ३. | आनन्दस्यैवात्मनो रसत्वमते न तस्याधारः, तद्व्यञ्जकवृत्तेस्तथात्वे तु सामाजिकमनः। .... | २४७ |
| ४. | बोध्ये भावा लौकिका अलौकिकास्तु बोद्धरि। | ,, |
| ५. | अलौकिकानां सुखैकहेतुत्वम्। .... | २४८ |
| ६. | विभावादिव्यपदेश्याः कारणादयः प्रत्यायकाः। .... .... | २४९ |
| ७. | विभावादित्रयं समुच्चितम्प्रत्यायकम्। .... | २५० |
| ८ | साधारणात्मनाऽलौकिकभावप्रत्यायकम्। .... | ,, |
| . | विभावादिविषयिणी समूहालम्बनमतिः। .... | ,, |
| १०. | ततो व्यक्तमुत्तमं सुखमेव रसः। .... | २५१ |
| ११. | सैव वा मतो रसः, विभावादिप्रत्येकज्ञानञ्च वा तत्र कारणम्। .... .... | ,, |
| १२. | स्थायिभावो रस इत्युपचारः। .... | ,, |
| १३. | रसरूपो व्यङ्ग्योऽसल्लँक्ष्यक्रमः। .... | २५२ |
| १४. | वस्त्वलङ्कारात्मकौ तु व्यङ्ग्यौ सल्लँक्ष्यक्रमौ। | ,, |

| सङ्ख्या | विषयः | | पृष्ठम् |
|---|---|---|---|
| १५. | स्थाय्यादिरूपोऽप्यसंलक्ष्यक्रमः। | .... | २५३ |
| १६. | दोषाभावरीतिगुणालङ्काराः। | .... | „ |
| १७. | व्यञ्जनया शब्दादे रसव्यक्तिः। | .... | २५४ |
| १८. | शब्दादपि वृत्तिरपरोक्षा कार्या। | .... | „ |
| १९. | रसप्रतीतिर्निर्विकल्पसुखात्मिका। | ... | २५५ |
| २०. | कार्यज्ञाप्यवैधर्म्योपपत्तिः। | ... | „ |
| २१. | एवं शब्दतस्सुखाभिव्यक्तिर्भट्टैरप्युदाहृता। | | २५६ |
| २२. | कार्यान्वितत्ववादेऽप्यविरोधः। | .... | „ |
| २३. | अलौकिकनियोगपरत्वखण्डनम्। | .... | २५७ |
| २४. | कार्यपरस्यैव प्रामाण्यमित्यस्य निराकरणम्। | | „ |
| २५. | अन्यपरैरपि पदैरनधिगतादिलक्षणार्थप्रतीतिः। | .... | २५८ |
| २६. | सर्वथापि शब्दाद्रसव्यक्तिरुपपन्ना। | .... | „ |
| २७. | श्रीकृष्णमूर्तिः परम्ब्रह्मैव। .... | ... | २६२ |

॥श्रीः॥

# ❀ श्रीभगवद्भक्तिरसायनम् ❀

## सटीकः प्रथम उल्लासः ।

नवरसमिळितँव्वा[1] केवलँव्वा पुमर्थ-
म्परममिह[2] मुकुन्दे भक्तियोगँव्वदन्ति ।
निरुपमसुखसँव्विद्रूपमस्पृष्टदुःख,—
न्तमहमखिलतुष्ट्यै शास्त्रदृष्ट्या व्यनज्मि[3] ॥१॥

टिप्पणी

गङ्गाधरात्मकङ्गङ्गा*पदपादमहो महः ।
जयत्यतिमनोहारि मरुत्पुरविहारि यत् ॥

१ नवरसीत्येव साध्वित न शङ्कनीयम्, †त्रिविधा विद्या त्रिविद्ये-तिवन्नवविधो रसो नवरस इति शाकपार्थिवादिसमासस्य जागरूकत्वात् । २ इह=सर्वान्तर्यामित्वात् सर्वसन्निहिते । ३ व्यनज्मि=प्रकाशयामि ।

---

* पदम्=कारणत्वात् स्थानम् । अतएव

भगवति तव तीरे नीरमात्राशनोऽहं
विगतविषयतृष्णः कृष्णमाराधयामि ।

इति गङ्गास्तवे श्रीशङ्करभगवत्पादाः ।

औषधञ्जाह्नवीतोयं वैद्यो नारायणो हरिः ।

इत्यादिशास्त्रविस्तराश्च । गोविन्दाङ्घ्रिसमुद्भवा, वासुदेवाङ्घ्रिरेणुघ्नीत्येतद्घीतिकनामधेयानि च स्कान्दगतगङ्गासहस्रनामस्तोत्रे प्रसिद्धानि ।

† त्रैविध्यञ्च विद्याया ऋग्यजुस्सामभेदेन ।

## टीका

पदनखनिविष्टमूर्तिभिरेकादशतामिवावहन्निष्टाम् ।
यं समुपास्ते गिरिशस्तं वन्दे नन्दमन्दिरे कञ्चित् ॥

ग्रन्थारम्भे सम्भावितविघ्ननिवारणबुद्धया भगवदनुध्यानरूपं मङ्गलमङ्गीकुर्वन्नादौ प्रेक्षापूर्वकारिप्रवृत्त्यङ्गतयाऽभिधेयप्रयोजनसम्बन्धानाचष्टे शिष्टाग्रणीर्ग्रन्थकारो नवरसेति । कर्मयोगोऽष्टाङ्गयोगो ज्ञानयोगो भक्तियोग इति चत्वारः पुमर्थत्वेन प्रसिद्धा योगाः[2] ।

### टिप्पणी

१ भक्तिरसायनं व्याचिख्यासुर्विघ्नभयाद्भक्तिरसालम्बनविभावस्य सर्वेश्वरतां विशदयंस्तद्वन्दनलक्षणम्मङ्गलमनुतिष्ठति—पदनखेति । सर्वेश्वरत्वादेव मूले भक्तिलक्षणकारिकायां "द्रुतस्य भगवद्धर्मा"दित्यादिरूपायान्तस्य सर्वेशपदेनोक्तिः । गिरिशः इष्टाम् = अर्थात् स्वेष्टां एकादशतां आवहन्निव = आत्माभिमुख्येन वहन्निव । आत्मानं वहन्निवेति यावत् । वह प्रापणे । फले हेतौ शता । यं पदयोः = अर्थाद्यस्य चरणयोः नखेष्वतिस्वच्छेषु दशसु निविष्टाभिः = प्रतिबिम्बरूपेण प्रविष्टाभिर्मूर्तिभिर्दशभिरुपलक्षितस्सन् समुपास्ते = सम्यक्सेवते, अहं नन्दमन्दिरे विद्यमानं तं कञ्चित् = अनिर्वाच्यं वन्दे इत्यन्वयः । समुपासनस्य वस्तुत एकादशताऽऽवहनोद्देश्यकत्वविरहादिवेत्यनेन तदुद्देश्यकत्वं केवलमुत्प्रेक्षितम् न तु वास्तविकतया कथितम् । उत्प्रेक्षाबीजञ्चैकादशताया गिरिशेष्टत्वम् । अहं कञ्चिद्वन्दे इति प्रथमं सम्बन्धः । कथम्भूतम् ? गिरिशः = प्रशस्तो गिरिराश्रयतयाऽस्यास्तीत्येवंविधोऽपि धराधरसुताधवस्तमविगणय्यावगणय्य वा पशुपस्य विपिनजीविनो नन्दनामकस्य कस्यचन सदनमागम्य तत्र विलसन्तँय्यं सम्यगुपास्ते तमिति सङ्क्षेपः ।

२ योगाः = उपायाः ।

टीका

[1] योगास्त्रयो मया प्रोक्ता नृणां श्रेयोविधित्सया ।
ज्ञानं कर्म च भक्तिश्च नोपायोऽन्योऽस्ति कुत्रचित् ॥
( श्रीमद्भागवतम्—स्कन्धः ११ । अध्यायः २० । श्लोकः ६ )

टिप्पणी

१ "धर्मः प्रोज्झितकैतवोऽत्र परमो निर्मत्सराणां सतां
वेद्यं वास्तवमत्र वस्तु शिवदन्तापत्रयोन्मूलनम् ।
श्रीमद्भागवते §महामुनिकृते किं वा परैरीश्वर-
स्सद्यो हृद्यवरुध्यतेऽत्र कृतिभिश्शुश्रूषुभिस्तत्क्षणात् ॥
निगमकल्पतरोर्गलितं फलं
शुकमुखादमृतद्रवसँय्युतम् ।
पिबत भागवतं रसमालयं
मुहुरहो रसिका भुवि भावुकाः ॥"
"यस्स्वानुभावमखिलश्रुतिसारमेक-
मध्यात्मदीपमतितितीर्षतान्तमोऽन्धम् ।
संसारिणाङ्करुणयाऽऽह पुराणगुह्य-
न्तं व्याससूनुमुपयामि गुरुम्मुनीनाम् ॥"
"सर्ववेदान्तसारं हि श्रीभागवतमिष्यते ।
तद्रसामृततृप्तस्य नान्यत्र स्याद्रतिः क्वचित् ॥"
"तदिदङ्ग्राहयामास सुतमात्मवतां वरम् ।
सर्ववेदेतिहासानां सारं सारं समुद्धृतम् ॥

§"महामुनिश्श्रीनारायणस्तेन प्रथमं सङ्क्षेपतः कृते" इति श्रीधराचार्य-स्वामिश्रीचरणाः
अहं वेद्मि शुको वेत्ति व्यासो वेत्ति च नारदः ।
श्रीधरस्सकलं वेत्ति श्रीनृसिंहप्रसादतः ॥
इत्येवं श्रीकाशीविश्वनाथसुबहुमताः ।

## टीका

पदनखनिविष्टमूर्तिभिरेकादशतामिवावहन्निष्टाम् ।
यं समुपास्ते गिरिशस्तं वन्दे नन्दमन्दिरे कञ्चित् ॥

ग्रन्थारम्भे सम्भावितविघ्ननिवारणबुद्ध्या भगवदनुध्यानरूपं मङ्गलमङ्गीकुर्वन्नादौ प्रेक्षापूर्वकारिप्रवृत्त्यङ्गतयाऽभिधेयप्रयोजनसम्बन्धानाचष्टे शिष्टाग्रणीर्ग्रन्थकारो **नवरसेति** । कर्मयोगोऽष्टाङ्गयोगो ज्ञानयोगो भक्तियोग इति चत्वारः पुमर्थत्वेन प्रसिद्धा योगाः ।

टिप्पणी

१ भक्तिरसायनं व्याचिख्यासुर्विघ्नभयाद्भक्तिरसालम्बनविभावस्य सर्वेश्वरतां विशदयंस्तद्वन्दनलक्षणम्मङ्गलमनुतिष्ठति—पदनखेति । सर्वेश्वरत्वादेव मूले भक्तिलक्षणकारिकाया "द्रुतस्य भगवद्धर्मा"दित्यादिरूपायान्तस्य सर्वेशपदेनोक्तिः । गिरिशः इष्टाम् = अर्थात् स्वेष्टां एकादशतां आवहन्निव = आत्माभिमुख्येन वहन्निव । आत्मानं वहन्निवेति यावत् । वह प्रापणे । फले हेतौ शता । यं पदयोः = अर्थाद्यस्य चरणयोः नखेष्वतिस्वच्छेषु दशसु निविष्टाभिः = प्रतिबिम्बरूपेण प्रविष्टाभिर्मूर्तिभिर्दशभिरुपलक्षितस्सन् समुपास्ते = सम्यक्सेवते, अहं नन्दमन्दिरे विद्यमानं तं कञ्चित् = अनिर्वाच्यं वन्दे इत्यन्वयः । समुपासनस्य वस्तुत एकादशताऽऽवहनोद्देश्यकत्वविरहादिवेत्यनेन तदुद्देश्यकत्वं केवलमुत्प्रेक्षितम् न तु वास्तविकतया कथितम् । उत्प्रेक्षाबीजञ्चैकादशताया गिरिशेष्टत्वम् । अहं कञ्चिद्वन्दे इति प्रथमं सम्बन्धः । कथम्भूतम् ? गिरिशः = प्रशस्तो गिरिराश्रयतयाऽस्यास्तीत्येवंविधोऽपि धराधरसुताधवस्तमविगणय्यावगणय्य वा पशुपस्य विपिनजीविनो नन्दनामकस्य कस्यचन सदनमागम्य तत्र विलसन्तं यं सम्यगुपास्ते तमिति सङ्क्षेपः ।

२ योगाः = उपायाः ।

टीका

[1] योगास्त्रयो मया प्रोक्ता नृणां श्रेयोविधित्सया ।
ज्ञानं कर्म च भक्तिश्च नोपायोऽन्योऽस्ति कुत्रचित् ॥
( श्रीमद्भागवतम्—स्कन्धः ११ । अध्यायः २० । श्लोकः ६ )

टिप्पणी

१ "धर्मः प्रोज्झितकैतवोऽत्र परमो निर्मत्सराणां सतां
वेद्यं वास्तवमत्र वस्तु शिवदन्तापत्रयोन्मूलनम् ।
श्रीमद्भागवते §महामुनिकृते किं वा परैरीश्वर-
स्सद्यो हृद्यवरुध्यतेऽत्र कृतिभिश्शुश्रूषुभिस्तत्क्षणात् ॥
निगमकल्पतरोर्गलितं फलं
शुकमुखादमृतद्रवसंयुतम् ।
पिबत भागवतं रसमालयं
मुहुरहो रसिका भुवि भावुकाः ॥"
"यस्स्वानुभावमखिलश्रुतिसारमेक-
मध्यात्मदीपमतितितीर्षतान्तमोऽन्धम् ।
संसारिणाङ्करुणयाऽऽह पुराणगुह्य-
न्तं व्याससूनुमुपयामि गुरुम्मुनीनाम् ॥"
"सर्ववेदान्तसारं हि श्रीभागवतमिष्यते ।
तद्रसामृततृप्तस्य नान्यत्र स्याद्रतिः क्वचित् ॥"
"तदिदङ्ग्राहयामास सुतमात्मवतां वरम् ।
सर्ववेदेतिहासानां सारं सारं समुद्धृतम् ॥

§"महामुनिश्श्रीनारायणस्तेन प्रथमं सङ्क्षेपतः कृते" इति श्रीधराचार्यस्वामिश्रीचरणाः

अहं वेद्मि शुको वेत्ति व्यासो वेत्ति च नारदः ।
श्रीधरस्सकलं वेत्ति श्रीनृसिंहप्रसादतः ॥

इत्येवं श्रीकाशीविश्वनाथसुबहुमताः ।

टिप्पणी

स तु संश्रावयामास महाराजम्परीक्षितम् ।''
''¶कालव्याळमुखग्रासत्रासनिर्णाशहेतवे ।
श्रीमद्भागवतं शास्त्रङ्कलौ कीरेण भाषितम् ॥''
''क्व सुधा क्व कथा लोके क्व काचः क्व मणिर्महान् ।
ब्रह्मरातो विचार्यैवन्तदा देवाञ्जहास ह ॥
अभक्तांस्तांश्च विज्ञाय न ददौ स कथामृतम् ।
श्रीमद्भागवती वार्ता सुराणामपि दुर्लभा ॥''
''लघून्यन्यानि जातानि गौरवेण त्विदम्महत् ।
तदा ऋषिगणास्सर्वे विस्मयम्परमँय्ययुः ॥
मेनिरे भगवद्रूपं शास्त्रम्भागवतङ्कलौ ।
पठनाच्छ्रवणात्सद्यो वैकुण्ठफलदायकम् ॥''
''सत्कर्मसूचको नूनम्ज्ञानयज्ञस्स्मृतो बुधैः ।
श्रीमद्भागवतालापस्स तु गीतश्शुकादिभिः ॥''

''नारद उवाच—
वेदवेदान्तघोषैश्च गीतापाठैः प्रबोधितम् ।
भक्तिज्ञानविरागाणान्नोदतिष्ठत्त्रिकँय्यदा ॥
श्रीमद्भागवतालापात्तत् कथम्बोधमेष्यति ।
तत्कथासु तु वेदार्थश्श्लोके श्लोके पदे पदे ॥
छिन्दन्तु संशयं ह्येनम्भवन्तोऽमोघदर्शनाः ।
विलम्बो नात्र कर्तव्यश्शरणागतवत्सलाः ॥
कुमारा ऊचुः—
वेदोपनिषदां साराज्जाता भागवती कथा ।
अत्युत्तमा ततो भाति पृथग्भूता फलाकृतिः ॥

¶ शास्त्रान्तराणामपि वेदवेदाङ्गादिसमस्तशास्त्रसारसर्वस्वभूतश्रीमद्भागवतपरतान्दर्शयंस्तान्यप्युदाहरति—कालव्याळेत्यादि ।

टिप्पणी

आमूलाग्रं रसस्तिष्ठन्नास्ते न स्वदते यथा ।
स भूयस्सम्पृथग्भूतः* फले विश्वमनोहरः ॥
यथा दुग्धे स्थितं सर्पिर्न स्वादायोपकल्पते ।
पृथग्भूतं हि तद्द्रव्यन्देवानां रसवर्धनम् ॥
इक्षूणामपि मध्यान्तं शर्करा व्याप्य तिष्ठति ।
पृथग्भूता च सा मिष्टा तथा भागवती कथा ॥
इदम्भागवतन्नाम पुराणम्ब्रह्मसम्मितम् ।
भक्तिज्ञानविरागाणां स्थापनाय प्रकाशितम् ॥
वेदान्तवेदसुस्नाते गीताया अपि कर्तरि ।
परितापवति व्यासे मुह्यत्यज्ञानसागरे ॥
तदा त्वया पुरा प्रोक्तञ्चतुश्श्लोकसमन्वितम् ।
तदीयश्रवणात् सद्यो निर्बाधो बादरायणः ॥
तत्र ते विस्मयः केन, यतः प्रश्नकरो भवान् ।
श्रीमद्भागवतं श्राव्यं शोकदुःखविनाशनम् ॥'
'ग्रन्थोऽष्टादशसाहस्रो द्वादशस्कन्धसम्मितः ।
परीक्षिच्छुकसंवादश्शृणु भागवतञ्च तत् ॥'
"इत्युद्धववचश्श्रुत्वा प्रभासेऽचिन्तयद्धरिः ।
भक्तावलम्बनार्थाय किं विधेयम्मयेति च ॥
स्वकीयँय्यद्भवेत्तेजस्तच्च भागवतेऽदधात् ।
तिरोधाय प्रविष्टोऽयं श्रीमद्भागवतार्णवम् ॥
तेनेयं वाङ्मयी मूर्तिः प्रत्यक्षा वर्तते हरेः ।
सेवनाच्छ्रवणात् पाठाद्दर्शनात् पापनाशिनी ॥"
"भक्तिस्सुतौ तौ तरुणौ गृहीत्वा
प्रेमैकरूपा सहसाऽऽविरासीत् ।

* फले पृथक् सम्भूतस्सन् विश्वमनोहरो भवतीति सम्बन्धः ।

टिप्पणी

स तु संश्रावयामास महाराजम्परीक्षितम् ।"

"¶कालव्याळमुखग्रासत्रासनिर्णाशहेतवे ।

श्रीमद्भागवतं शास्त्रङ्कलौ कीरेण भाषितम् ॥"

"क्व सुधा क्व कथा लोके क्व काचः क्व मणिर्महान् ।

ब्रह्मरातो विचार्यैवन्तदा देवाञ्जहास ह ॥

अभक्तांस्तांश्च विज्ञाय न ददौ स कथामृतम् ।

श्रीमद्भागवती वार्ता सुराणामपि दुर्लभा ॥"

"लघून्यन्यानि जातानि गौरवेण त्विदम्महत् ।

तदा ऋषिगणास्सर्वे विस्मयम्परमँय्ययुः ॥

मेनिरे भगवद्रूपं शास्त्रम्भागवतङ्कलौ ।

पठनाच्छ्रवणात्सद्यो वैकुण्ठफलदायकम् ॥"

"सत्कर्मसूचको नूनम्ज्ञानयज्ञस्स्मृतो बुधैः ।

श्रीमद्भागवतालापस्स तु गीतश्शुकादिभिः ॥"

"नारद उवाच—

वेदवेदान्तघोषैश्च गीतापाठैः प्रबोधितम् ।

भक्तिज्ञानविरागाणान्नोदतिष्ठत्त्रिकँय्यदा ॥

श्रीमद्भागवतालापात्तत् कथम्बोधमेष्यति ।

तत्कथासु तु वेदार्थश्श्लोके श्लोके पदे पदे ॥

छिन्दन्तु संशयं ह्येनम्भवन्तोऽमोघदर्शनाः ।

विळम्बो नात्र कर्तव्यश्शरणागतवत्सलाः ॥

कुमारा ऊचुः—

वेदोपनिषदां साराज्जाता भागवती कथा ।

अत्युत्तमा ततो भाति पृथग्भूता फलाकृतिः ॥

---

¶ शास्त्रान्तराणामपि वेदवेदाङ्गादिसमस्तशास्त्रसारसर्वस्वभूतश्रीमद्भागवतपरतान्दर्शयंस्तान्यप्युदाहरति—कालव्याळेत्यादि ।

टिप्पणी

आमूलाग्रं रसस्तिष्ठन्नास्ते न स्वदते यथा ।
स भूयस्सम्पृथग्भूतः* फले विश्वमनोहरः ॥
यथा दुग्धे स्थितं सर्पिर्न स्वादायोपकल्पते ।
पृथग्भूतं हि तद्द्रव्यन्देवानां रसवर्धनम् ॥
इक्षूणामपि मध्यान्तं शर्करा व्याप्य तिष्ठति ।
पृथग्भूता च सा मिष्टा तथा भागवती कथा ॥
इदम्भागवतन्नाम पुराणम्ब्रह्मसम्मितम् ।
भक्तिज्ञानविरागाणां स्थापनाय प्रकाशितम् ॥
वेदान्तवेदसुस्नाते गीताया अपि कर्तरि ।
परितापवति व्यासे मुह्यत्यज्ञानसागरे ॥
तदा त्वया पुरा प्रोक्तञ्चतुश्श्लोकसमन्वितम् ।
तदीयश्रवणात् सद्यो निर्बाधो बादरायणः ॥
तत्र ते विस्मयः केन, यतः प्रश्नकरो भवान् ।
श्रीमद्भागवतं श्राव्यं शोकदुःखविनाशनम् ॥'
'ग्रन्थोऽष्टादशसाहस्रो द्वादशस्कन्धसम्मितः ।
परीक्षिच्छुकसंवादश्शृणु भागवतञ्च तत् ॥'
"इत्युद्धववचश्श्रुत्वा प्रभासेऽचिन्तयद्धरिः ।
भक्तावलम्बनार्थाय किं विधेयम्मयेति च ॥
स्वकीयँय्यद्भवेत्तेजस्तच्च भागवतेऽदधात् ।
तिरोधाय प्रविष्टोऽयं श्रीमद्भागवतार्णवम् ॥
तेनेयं वाङ्मयी मूर्तिः प्रत्यक्षा वर्तते हरेः ।
सेवनाच्छ्रवणात् पाठाद्दर्शनात् पापनाशिनी ॥"
"भक्तिस्सुतौ तौ तरुणौ गृहीत्वा
प्रेमैकरूपा सहसाऽऽविरासीत् ।

* फले पृथक् सम्भूतस्सन् विश्वमनोहरो भवतीति सम्बन्धः ।

टिप्पणी

श्रीकृष्ण गोविन्द हरे मुरारे
नाथेति नामानि मुहुर्वदन्ती ॥
ताश्चागतां भागवतार्थभूषां
सुचारुवेषां ददृशुस्सदस्याः ।
कथं प्रविष्टा कथमागतेयं
मध्ये मुनीनामिति तर्कयन्तः ॥"

"×श्रीमद्भागवताख्योऽयं प्रत्यक्षः कृष्ण एव हि ।
स्वीकृतोऽसि मया नाथ मुक्त्यर्थं भवसागरे ॥"

---

×श्रीमद्भागवताख्यत्वादेव प्रकृतशास्त्रस्य "भावार्थदीपिके"ति प्रसिद्धटीकायामुपक्रमे

श्रीमद्भागवताभिधस्सुरतरुस्ताराङ्कुरस्सज्जनि-
स्कन्धैर्द्वादशभिस्ततः प्रविलसद्भक्त्यालवालोदयः ।
द्वात्रिंशत्त्रिशतञ्च यस्य विलसच्छाखास्सहस्राण्यहो
पर्णान्यष्ट दशो ऽतिसुलभो वर्वर्ति सर्वोपरि ॥

इति श्लोकः । द्वात्रिंशत्त्रिशतञ्च यस्य विलसच्छाखा इति । अत एव

दैत्य[१८]ब्रह्म[१०]ण्डल[३३]धर[२९]–
ङ्गीरा [२६]न्यौक[१९]शिपौ[१९] वरे[२४] ।
स्वैरं[२४]स्निग्ध[९०]कुण्ड[३१]लिपे[१३]
श्रीगोलीनं[आहत्य ३३२] हरिम्भजे ॥

इति पुराणपद्यानुरोधेन द्वात्रिंशदधिकत्रिशततयैवाध्यायाः केरळेषु दृश्यन्ते । अत एव हरिलीलायां "प्रथमेऽष्टादशाध्यायाः, एकोनत्रिंशताध्यायैस्त्रिंशांस्तुर्यं ईरितः" इति च । श्रीगोभ्याम्=रमाक्षमाभ्यां सहलीनम् । पञ्चत्रिंशदधिकत्रिशतमध्याया इति तु मतभेदः ।

टिप्पणी

"अम्बरीष शुकप्रोक्तं नित्यं भागवतं शृणु ।
पठस्व स्वमुखेनैव यदीच्छसि भवक्षयम् ॥"
'श्रीमद्भागवतं शास्त्रं यत्र भागवतैर्यदा ।
कीर्त्यते श्रूयते चापि श्रीकृष्णस्तत्र निश्चितम् ॥
श्रीमद्भागवतं यत्र श्लोकं श्लोकार्धमेव वा ।
तत्रापि भगवान् कृष्णो वल्लवीभिर्विराजते ॥"
"श्रीमद्भागवतस्याथ‡ श्रीमद्भगवतस्सदा ।
स्वरूपमेकमेवास्ति सच्चिदानन्दलक्षणम् ।
श्रीकृष्णासक्तचित्तानान्तन्माधुर्यप्रकाशकम् ।
समुज्जृम्भति यद्वाक्यं विद्धि भागवतं हि तत् ॥
'मितबुद्ध्यादिवृत्तीनां मनुष्याणां हिताय च ।
परीक्षिच्छुकसंवादो योऽसौ व्यासेन कीर्तितः ॥
ग्रन्थोऽष्टादशसाहस्रो योऽसौ भागवताभिधः ।
कलिग्राहगृहीतानां स एव परमाश्रयः ॥'
"ऋते कृष्णप्रकाशात्तु स्वात्मबोधो न जायते ।
तत्प्रकाशस्तु जीवानां श्रीमद्भागवताद्भवेत् ॥"
"ये श्रीकृष्णविहारैकभाजनास्वादलोलुपाः ।
मुक्तावपि निराकाङ्क्षास्तेषां भागवतन्धनम् ॥"

इत्यादिश्रीमद्भागवत,पाद्म,स्कान्दप्रभृत्युक्तिसहस्रसंस्तुतश्रीमद्भागवत-श्लोकानेव प्रायेणोदाहरति—योगास्त्रयो मया, मन एकत्रेत्यादिना यावट्टी-कासमाप्ति ।

"स्वनामकीर्तनादेव सुलभं व्रजवल्लभम् ।
शुकशास्त्रेश्वरङ्कृष्णमाश्रये जगदाश्रयम् ॥"

‡ अथेति समुच्चये । श्रीमद्भगवत इत्यतः परं योज्यमेतत् ।

## टीका

इति भगवद्वचनेऽष्टाङ्गयोगोऽपि ज्ञानयोगान्तर्गतो द्रष्टव्यः ।

मन एकत्र सँय्युञ्ज्याज्जितश्वासो जितासनः ।
वैराग्याभ्यासयोगेन ध्रियमाणमतन्द्रितः ॥

(श्री० भा० ११।९।११)

इत्यादिना तस्यापि व्युत्पादनात् । तत्र "गर्भाधानपुंसवन-

टिप्पणी

१ तृतीयाया एवाऽऽदर्शपुस्तके दृष्टत्वेऽपि सप्तम्येव समञ्जसत्वादत्र लिखिता । २ तत्र = पुमर्थत्वेन प्रसिद्धेषु चतुर्षु योगेषु = तेषाम्मध्ये । अन्वयश्चास्य कर्मयोग इत्युपरितनेन । गर्भाधानेत्यादि । तथा चानुक्रान्तं "तव्काड् योगियार्" इति प्रथितेन तत्रभवता वैदिकवरेण विरचिते स्मार्तप्रायश्चित्तनामकग्रन्थे—

सेकपुंसवसीमन्तजातनामाशनक्रियाः ।
चौळोपनीती चत्वारि व्रतानि स्नानकर्म च ॥
विवाहः पञ्च यज्ञाश्च संस्थानां सप्तकत्रयम् ।
अष्टकाप्रतिपत्स्थालीपाकौ श्राद्धञ्च* मासिकम् ॥
तथा श्रावण्याग्रहायण्यथ चैत्र्याश्वयुज्यपि ।
इति सप्तोदिताः पाकयज्ञसंस्थास्स्मृतीरिताः ॥
अग्न्याधेयञ्चाग्निहोत्रं दर्शादीष्टिक्रियाद्वयम् ।
तथैवाऽऽग्रयणेष्टिश्च चातुर्मास्येष्टयः क्रमात् ॥
निरूढपशुबन्धश्च सौत्रामण्यपि सप्त ताः ।
समुद्दिष्टा हविर्यज्ञसंस्थाश्श्रुतिषु चोदिताः ॥
अग्निष्टोमस्तथाऽत्यग्निष्टोम उक्थ्यश्च षोडशी ।

* "वावुट्" इति केरळभाषया यदुच्यते, तदेव मासिकं श्राद्धम् ।

टीका

सीमन्तोन्नयनजातकर्मनामकरणान्नप्राशनचौळोपनयनानि चत्वारि वेदव्रतानि स्नानं सहधर्मचारिणीसँय्योगः पञ्चानां यज्ञानामनुष्ठानमष्टका पार्वणश्श्राद्धं श्रावण्याग्रहायणी चैत्र्याश्वयुजी चेति सप्त पाकयज्ञसंस्थाः, अग्न्याधेयमग्निहोत्रं दर्शपूर्णमासावाग्रयणं चातुर्मास्यानि निरूढपशुबन्धस्सौत्रामणी चेति सप्त हविर्यज्ञसंस्थाः, अग्निष्टोमोऽत्यग्निष्टोम उक्थ्यष्षोडशी वाजपेयोऽतिरात्रोऽप्तोर्याम इति सप्त सोमयज्ञसंस्थाश्चे"त्यादिशास्त्रविहितो वर्णाश्रमधर्मरूपः कर्मयोगोऽन्तःकरणशुद्धिसाधनत्वेन तावत्पर्यन्तमनुष्ठेयः,

तावत् कर्माणि कुर्वीत न निर्विद्येत यावता ।
मत्कथाश्रवणादौ वा श्रद्धा यावन्न जायते ॥
( श्री० भा० ११।२०।९ )

टिप्पणी

वाजपेयोऽतिरात्रोऽप्तोर्याम इत्यपि सप्त ताः ।
समीरितास्सोमयज्ञसंस्थाश्श्रुतिषु चोदिताः ॥ इति ।

१ सह धर्मश्चरितुं शीलं यस्याः पत्न्यास्तया सह सँय्योगस्सहधर्मचारिणीसँय्योगो विवाहः । २ तावदित्यादि ।

भगवन्नामकथारस-
रसिकतया नास्ति कर्मसु श्रद्धा ।
यस्य तु, तान्निन्दति य,-
स्तस्य *जळत्वन्निरुक्तमेतेन ॥

* जळत्वम् = जळो जळबुद्धिस्तस्य भावः । इदमुपलक्षणन्नरकशरणत्वस्यापि । विस्पष्टमेव तस्य तथात्वञ्चतुस्त्रिंशकारिकातृतीयचरणविवरणे ।

टीका

इति भगवद्वचनात्। अन्तःकरणशुद्धिसाधनत्वञ्च तस्य "धर्मेण पापमपनुदति तस्माद्धर्मं परमं वदन्ति" "येन केन यज्ञेनापि वा दर्विहोमेनानुपहतमना एव भवती"त्यादिश्रुतिसिद्धम्। ततश्चाद्रुतचित्तस्य निर्वेदपूर्वकं तत्त्वज्ञानं, द्रुतचित्तस्य तु भगवत्कथाश्रवणादिभागवतधर्मश्रद्धापूर्विका भक्तिरित्यवधित्वेन द्वयमप्युपात्तम्। ततोऽन्तःकरणशुद्ध्याऽष्टाङ्गयोगमनुष्ठाय तैलधारावदविच्छिन्नभगवदेकाकारप्रत्ययपरम्परात्मकैकाग्रतायोग्यं मनस्सम्पादयेत्,

यदारम्भेषु निर्विण्णो विरक्तस्सँय्यतेन्द्रियः।
अभ्यासेनात्मनो योगी धारयेदचलं मनः॥
धार्यमाणं मनो यर्हि भ्राम्यदाश्वनवस्थितम्।
अतन्द्रितोऽनुरोधेन मार्गेणात्मवशन्नयेत्॥
(श्री० भा० ११।२०।१८-१९)

टिप्पणी

१ न चाद्रुतचित्तस्य निर्विण्णस्यापि भक्त्यभावात् कथं तत्त्वज्ञानम्,

श्रेयस्रु(स्रु)तिं भक्तिमुदस्य ते विभो
क्लिश्यन्ति ये केवलबोधलब्धये।
तेषामसौ क्लेशल एव शिष्यते
नान्य, यथा स्थूलतुषावघातिनाम्॥
(श्री० भा० १०।१४।४)

इत्याद्युक्तिबलादिति वाच्यम् तस्य भक्तिसुखासम्भवेऽपि साधनभक्तिनिष्ठत्वे तत्त्वज्ञानसम्भवात्। यदि पुनरद्रुतचित्तोऽपि भक्तिसुखमखिलपुमर्थपुरन्दरमभिलषति तदा तदपि तस्य श्रवणकीर्तनाद्यनुष्ठाने चित्तद्रुतिपूर्वकं भविष्यति। अचिन्त्यो हि भागवतधर्मप्रभावः।

टीका

इत्यादिभगवद्वचनात् । तस्मिंश्च सति "अमानित्वमदम्भित्व"मित्यारभ्य "एतज्ज्ञानमिति प्रोक्त"मित्यन्तेन ग्रन्थेन ( अ० १३। श्लो० ७-११ ) [1]श्रीमद्भगवद्गीतोपनिषदु-

टिप्पणी

१ श्रीमद्भगवद्गीतोपनिषदां मुमुक्षुमुद्दिश्य प्रवृत्तानां सारार्थं स्वामिश्रीश्रीधराचार्यचरणास्स्वयुक्तिकमुक्तवन्तः—

भगवद्भक्तियुक्तस्य तत्प्रसादात्मबोधतः ।
सुखं बन्धविमुक्तिस्स्यादिति गीतार्थसङ्ग्रहः ॥

तथाहि *"पुरुषस्स परः पार्थ भक्त्या लभ्यस्त्वनन्यया" "भक्त्या त्वनन्यया शक्य अहमेवंविधोऽर्जुने"त्यादौ भगवद्भक्तेर्मोक्षम्प्रति साधकतमत्वश्रवणात्तदेकान्तभक्तिरेव तत्प्रसादोत्थज्ञानावान्तरव्यापारमात्रयुक्ता मोक्षहेतुरिति स्फुटम्प्रतीयते । ज्ञानस्य भक्त्यवान्तरव्यापारत्वमेव युक्तम्, "तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम् । ददामि बुद्धियोगन्तँय्येन मामुपयान्ति ते" "मद्भक्त एतद्विज्ञाय मद्भावायोपपद्यते" इत्यादिवचनात् । तत्त्वज्ञानमेव भक्तिरित्ययुक्तम्, 'समस्सर्वेषु भूतेषु मद्भक्तिं लभते पराम् । भक्त्या मामभिजानाति यावान् यश्चास्मि तत्त्वत:" इत्यादौ भेदेन निर्देशात् । न चैवं सति "तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाये"तिश्रुतिविरोधश्शङ्कनीयः, भक्त्यवान्तरव्यापारत्वाज्ज्ञानस्य । न हि "काष्ठैः पचती"त्युक्ते ज्वालानामसाधनत्वमुक्तं भवति। किञ्च "यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ । तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः" "देहान्ते देवः परं ब्रह्म तारकं व्याचष्टे" "यमेवैष वृणुते तेन लभ्यः" इत्यादिश्रुतिस्मृतिपुराणवचनान्येवं सति समञ्जसानि भवन्ति । तस्माद्भक्तिरेव मोक्षहेतुरिति सिद्धमिति । मोक्षादप्युत्कर्षस्तु भक्तिपुरुषार्थस्य बहुविधमुपरि दर्शयिष्यते ।

* स चाहं परः पुरुषोऽनन्यया = न विद्यतेऽन्यश्शरणत्वेन यस्यास्तयैकान्तभक्त्यैव लभ्यो नान्यथेत्यर्थः ।

## टीका

पदिष्टो ज्ञानयोगः प्रतिष्ठितो भवति देहेन्द्रियाद्यनासङ्गात्मकः। [1]अस्य च ज्ञानयोगस्य भक्तियोगोऽवधिः,

साङ्ख्येन सर्वभावानां प्रतिलोमानुलोमतः।
भवाप्ययावनुध्यायेन्मनो यावत् प्रसीदति॥
निर्विण्णस्य विरक्तस्य पुरुषस्योक्तवेदिनः।
मनस्त्यजति दौरात्म्यं चिन्तितस्यानुचिन्तया॥
यमादिभिर्योगपथैरान्वीक्षिक्या च विद्यया।
ममार्चोपासनाभिर्वा नान्यैर्योग्यं स्मरेन्मनः

(श्री० भा० ११।२०।२२-२४)

इत्यादिभगवद्वचनात्। अत्र "मनो यावत् प्रसीदती"ति भक्तियोग एव ज्ञानयोगावधित्वेनोक्तः, भक्तियोगं विना मनसस्सम्यक्प्रसादाभावात्। मनस्त्यजति दौरात्म्यमित्यत्रापि स एव योगः। ममार्चोपासनाभिर्वेति। [2]मयि चानन्ययोगेन भक्तिरव्यभिचारिणीति ज्ञानयोगान्तर्गतया साधनभक्त्येत्यर्थः [3]ततश्च

टिप्पणी

१ अस्य च ज्ञानयोगस्य भक्तियोगोऽवधिरिति भागो यद्यपि नाऽऽदर्शपुस्तके दृश्यते तथाप्यनन्वयनिरसनाय लिखितः। इत्थमग्रेप्यशुद्धयन्तराण्यपि तत्पुस्तके विविधतया विलोक्यन्ते। अथापि यथामति परिशोधयितुम्प्रयते। २ साधनभक्तेर्ज्ञानयोगान्तर्गतत्वे दर्शितभगवद्गीतोपनिषद्ग्रन्थप्रविष्टवचनं प्रमाणत्वेनाह-मयीति। अनेन तस्यास्तदन्तर्गतत्वसिद्धि "एतज्ज्ञानमिति प्रोक्त"मित्युदाहृतोक्तिसहकारेण भवतीति भावः। ३ ततश्चेति। कर्मयोगेन शुद्धमनस्कस्याष्टाङ्गयोगेन या मनसस्तैलधारावदविच्छिन्नभगवदेकाकारप्रत्ययपरम्परात्मकैकाग्रतायोग्यत्वसम्पत्तिस्तत्कालीनं यत् ज्ञान योगस्य प्रतिष्ठितत्वं, तदनन्तरमित्यर्थः।

## टीका

प्रोक्तेन भक्तियोगेन भजतो मासकृन्मुनेः ।
कामा हृदय्या नश्यन्ति सर्वे मयि हृदि स्थिते ॥
(श्री० भा० ११।२०।२९)

इत्यादिभगवद्वचनानुसारिण्या साधनभक्तिनिष्ठया निखिलमपि विषयनिष्ठप्रेमाणं भगवत्येव प्रतिष्ठापयतस्सकलविषयविमुखमनसो महाभागस्य कस्यचि[1]द्भगवद्गुणगरिमग्रन्थनरूपग्रन्थश्रवणजनितद्रुतिरूपायां मनोवृत्तौ[2] सर्वसाधनफलभूतायां गृहीतभगवदाकारायां वि[3]भावानुभावव्यभिचारिसंयोगेन रसरूपतयाऽभिव्यक्तो भगवदाकारतारूपो रत्याख्यस्थायिभावः परमानन्दसाक्षात्कारात्मकः प्रादुर्भवति । स[4] एव भक्तियोग इति तं परमम् = निरतिशयं पुरुषार्थं वदन्ति रसज्ञाः,

तस्मान्मद्भक्तियुक्तस्य योगिनो वै मदात्मनः ।
न ज्ञानं न च वैराग्यं प्रायश्श्रेयो भवेदिह ॥
यत् कर्मभिर्यत्तपसा ज्ञानवैराग्यतश्च यत् ।
योगेन दानधर्मेण श्रेयोभिरितरैरपि ॥

### टिप्पणी

१ भक्तिरसास्वादयितॄणां विरलत्वं दर्शयति कस्यचिदिति । २ मनोवृत्तौ = मनःपरिणामे । ३ विभावो द्विविधः—आलम्बनविभाव उद्दीपनविभावश्च । तत्रालम्बनविभावो भगवान् । उद्दीपनविभावस्तुळसीचन्दनादिः । अनुभावो नेत्रादिविक्रिया । व्यभिचारिभावा निर्वेदादयः । ४ स एव भक्तियोग इति । क्लेशमयकर्मादियोगानां भक्तियोगस्य च पुमर्थतयाप्रसिद्धयोगत्वेन साम्येऽपि भक्तियोगस्य *मधुरमधुरस्य मुक्तैरप्यनुपेक्ष्यमाणस्य नास्त्यवधिरिति सोसूचितमनेन ।

* मधुरमधुरस्य = अव्याजरमणीयादप्यव्याजरमणीयस्य ।

## टीका

सर्वं मद्भक्तियोगेन मद्भक्तो लभतेऽञ्जसा ।
स्वर्गापवर्गं मद्धाम कथञ्चिद्यदि वाञ्छति ॥
न किञ्चित् साधवो धीरा भक्ता ह्येकान्तिनो मम ।
गृह्णन्त्यपि मया दत्तं कैवल्यमपुनर्भवम् ॥
नैरपेक्ष्यं परं प्राहुर्निःश्रेयसमनल्पकम् ।
तस्मान्निराशिषो भक्तिर्निरपेक्षस्य मे भवेत् ॥
न मय्येकान्तभक्तानां गुणदोषोद्भवा गुणाः ।
साधूनां समचित्तानां बुद्धेः परमुपेयुषाम् ॥
(श्री० भा० ११।२०।३१-३६

इत्यादिवचनानि, तदनुभवितारश्च । दुःखासम्भिन्न
सुखं हि परमः पुरुषार्थ इति सर्वतन्त्रसिद्धान्तः । धर्मार्थका
ममोक्षाश्चत्वारः पुरुषार्था इति प्रसिद्धिस्तु लाङ्गलञ्जीवन
मितिवत् साधने फलत्ववचनादौपचारिकी । अतो न सुखमेव
पुरुषार्थ इति पक्षहानिः । सुखन्दुःखाभावश्च द्वौ पुरुषार्थाविति
तार्किकाः । तन्न, लाघवेन सुखमात्रस्यैव पुरुषार्थत्वकल्पनात्
इच्छाजनकत्वे हि ज्ञानस्य सुखविषयकत्वमेवावच्छेदकम्, न तु
सुखदुःखाभावान्यतरविषयकत्वम्, गौरवात् । दुःखाभावस्य तु

### टिप्पणी

१ गृह्णन्तीति । अयमेव पाठो दाक्षिणात्यो, युक्तो, भावार्थदीपिकाकारश्च, न तु वाञ्छन्तीति । २ तत्पदेन भक्तियोगः परामृश्यते, तस्यैव वदनक्रियाकर्मणस्समुपस्थितत्वात् । ३ ननु मोक्षस्यैव परमपुरुषार्थत्वात् कथमेतत् सङ्गच्छत इति यश्शङ्कते तं प्रति भक्तियोगस्य परमपुरुषार्थत्वमुपपादयितव्यमित्यतस्तदुपपादकतया "निरुपमसुखे"त्यादिरूपं तस्य विशेषणद्वयमवतारयति—दुःखासम्भिन्नसुखमित्यादिना ।

## टीका

[1]सुखपरिचायकत्वेनैवोपयोगः । यत्तु न्यायनिबन्धनकारैश्शङ्कितम्——दुःखाभावस्य सुखार्थत्वेनैवोपयोगेऽभिहिते सुखस्यापि दुःखाभावार्थत्वेनोपयोगो वक्तुं शक्यते, विनिगमनाविरहात् । तस्मात्तदुभयं पुरुषार्थ इति । तदयुक्तम्, व्याप्यव्यापकभावस्यैव विनिगमकत्वात् । यदा सुखन्तदा दुःखभाव इति हि व्याप्तिस्सर्वसम्मता, [2]निरुपाधिसहचारदर्शनात् । अतो दुःखाभावस्य सुखकालेऽवश्यम्भावित्वात् सुखपरिचायकत्वमुपपद्यते, तद्व्यापकत्वात्तस्य । यदा दुःखाभावस्तदा सुखमिति न [3]तद्व्याप्तिः, सुषुप्तिप्रळयादौ व्यभिचारात् । अतो दुःखाभावस्य सुखाव्याप्यत्वान्न तत्परिचायकत्वं सुखस्य । व्यापकं हि व्याप्यस्थितिहेतुत्वेनान्य[4]थासिद्धम्, सुखञ्च न दुःखाभावव्यापकमतस्तदेव स्वतन्त्रः पुरुषार्थः । दुःखाभावस्य सुखार्थत्वेनोपयोगे सर्वसुखशून्यस्य दुःखाभावस्य मोक्षस्य पुरुषार्थत्वं न स्यादिति चेद्दीयतां जलाञ्जलिस्तस्मै । परमानन्दरूपत्वेन तु तस्य पुरु-

### टिप्पणी

१ सुखपरिचायकत्वेनेति । स्वयं व्यापकरूपतया व्याप्यीभूतसुखस्थितिहेतुत्वेनेत्यर्थः । सुखोपाधित्वेनेति यावत् । उपाधेरेव परिचायकरूपत्वमभिहितं वेदान्तपरिभाषायान्तत्रैव द्रष्टव्यम् । २ निरुपाधीति । व्यभिचारज्ञानविरहसहकृतेत्यर्थः । ३ तद्व्याप्तिः=तयोः दुःखाभावसुखयोर्व्याप्तिः । यद्वा तद्व्याप्तिः=सुखव्याप्तिः । तस्येति पूर्ववाक्यादनुषङ्गः । ततश्च दुःखाभावः पक्षस्सुखव्याप्त्यभावस्साध्यो व्यभिचारो हेतुरिति सुगममनुमानम् । व्यभिचारात्=सुखव्यभिचारात् । ४ अन्यथासिद्धमिति । व्याप्यस्थितिविषयकेच्छयैवेष्टत्वसम्भवादिति भावः ।

## टीका

षार्थत्वं वेदान्तविदो वदन्ति। [१]अतो भगवद्भक्तियोगस्यापि दुःखासम्भिन्नसुखत्वेनैव परमपुरुषार्थत्वमित्याह—निरुपमसुखसंविद्रूपमस्पृष्टदुःखमिति। एतेन भक्तिर्न पुरुषार्थो धर्मार्थकाममोक्षेष्वनन्तर्भावादित्यादिकं सर्वमपास्तम्, [२]धर्मार्थकामानां स्वतःपुरुषार्थत्वाभावात्तज्जन्यसुखस्यैव पुरुषार्थत्वे गौरवादननुगमाच्च धर्मजन्यत्वादिविशेषणं परित्यज्य सुखमात्रं पुरुषार्थ इति स्थिते समाधिसुखस्येव भक्तिसुखस्यापि स्वतन्त्रपुरुषार्थत्वात्। तस्य मोक्षसमीपवर्तितया मोक्षान्तर्भूतत्वे योगजधर्मजन्यतया धर्मान्तर्भूतत्वे वा भक्तिसुखस्यापि भागवतधर्मजन्यतया धर्मान्तर्भावस्य [३]श्रद्धाजळान् प्रति वक्तुं शक्यत्वात्। भक्तस्य संसारमोक्षस्या[४]वश्यकत्वान्मोक्षान्तर्गतो वा भक्तियोगः।

### टीप्पणी

१ अतः = दुःखासम्भिन्नसुखस्यैव परमपुरुषार्थत्वात्। २ धर्मार्थकामानामिति। इन्द्रियप्रीतिफलक आत्मविचारौपयिकजीवनफलको वाऽन्नादिरूपो विषयोऽत्र कामः। तत्सम्पादनफलको धर्मफलको वा धनादिरर्थः। ३ श्रद्धाजळानिति। धर्मार्थकाममोक्षाश्चत्वारः पुरुषार्था इति वचने श्रद्धया = तद्वचनस्य यथाश्रुतार्थे दृढविश्वासेन जळान् = जळबुद्धीन्। सदुपपत्तिकमन्यस्यापि पुरुषार्थत्वमुच्यमानं ग्रहीतुमसमर्थबुद्धीनित्यर्थः। ४ आवश्यकत्वादिति।

"दैवी ह्येषा गुणमयी मम माया दुरत्यया।
मामेव ये प्रपद्यन्ते मायामेतान्तरन्ति ते॥"
"इति भागवतान्धर्मान्छिक्षन् भक्त्या तदुत्थया।
नारायणपरो मायामञ्जस्तरति दुस्तराम्॥"

## टीका

**तस्मात् पुरुषार्थचतुष्टयान्तर्गतत्वेन वा स्वातन्त्र्येण वा भक्तियोगः पुरुषार्थः परमानन्दरूपत्वादिति निर्विवादम् । तस्य परमानन्दरूपतामुपपादयन्नवान्तरविभागमाह—नवरसमिलितं वा केवलं वेति । स्पष्टमेतदुपरिष्टात् करिष्यते । मुकुन्द इति भक्तियोगस्य विषयनिर्देशः । सर्वान्तर्यामी सर्वेश्वर एव भक्तिरसालम्बनविभाव इति वक्ष्यते ।**

टिप्पणी

इत्येतत्प्रमुखश्रीमद्भगवद्गीताभागवतादिवचनशतेभ्य इति भावः । अत एव समनन्तरकारिकायां "तत्प्रशमेऽतिशिक्षित"मिति । १ सर्वान्तर्यामी सर्वेश्वर इति । तथाभूतस्य भगवतोऽन्तर्यामिब्राह्मणवेद्यत्वं स्वामिभगवत्पादप्रार्थनेन दर्शितम्—

पृथिव्यान्तिष्ठन् यो यमयति मही, वेद न धरा
यमित्यादौ वेदो वदति जगतामीशममलम् ।
नियन्तारन्ध्येयम्मुनिसुरनृणाम्मोक्षद,मसौ
शरण्यो लोकेशो मम भवतु कृष्णोऽक्षिविषयः ॥ इति ।

यमिति देहलीदीपन्यायेनान्वेति । मुक्तिन्ददातीति मौलिकमुकुन्दपदस्य योगार्थस्सकलफलप्रदत्वपर्यवसितस्सोपपत्तिकस्सप्रमाणमत्र मोक्षदमित्यन्तेन, रूढ्यर्थः कृष्णपदेन च सङ्कीर्तितः । शरणे रक्षणे साधुस्समर्थश्शरण्यः । दुर्वारमदनमहाग्रहगृहीततया समुल्लङ्घितसकलसेतूनाङ्गोकुलकामिनीना,मतिविषमरोषावेशविवशविश्रृङ्खलसकलकरणवृत्तीनाम्पूतनाप्रभृतीनामरातीना,मत्यन्तपराधीनचेतसाँय्यमुनावनपशुपक्षिसरीसृपाणा,मतिबहलमोहपटलीपिनद्धसर्वेन्द्रियाणां वृन्दावनतरुगुल्मलतावीरुधामपि मुक्तिसुखमनिवारितं वितरतो नित्यनिरस्तनीहारतया

टीका

ग्रन्थादौ मङ्गलाचरणञ्च

सर्वदा सर्वकार्येषु नास्ति तेषाममङ्गलम् ।
येषां हृदिस्थो भगवान् मङ्गलायतनं हरिः ॥

इति स्मृतेः । तमहं व्यनज्मीत्यभिधेयसम्बन्धनिर्देशः । शास्त्रदृष्टयेत्यमूलत्वनिवारणम् । अखिलतुष्ट्यायिति प्रयोजननिर्देशः । साधूनां हि तुष्टिस्स्वाभाविकी । अन्येषामप्येतद्ग्रन्थोक्तयुक्तिभिरसम्भावनाविपरीतभावनादिनिवृत्त्याऽन्तःकरणशुद्धेर्हेतोरित्यभिप्रायः । के पुनर्भक्तियोगस्य पुमर्थत्ववादाः ? शृणु तान्—

टिप्पणी

निरन्तरस्वमहिमसमुल्लसदनन्तानन्दस्य गोपालशिरोमणे"रिति भगवन्नामकौमुद्यामपि यशोदास्तनन्धयस्यैव मुक्तिदाने स्वातन्त्र्यमुपवर्णितमत स्तस्यैव सर्वान्तर्यामिणस्सर्वेश्वरस्य मूले मुकुन्दपदेन निर्देशः । १ कारिकावतारकवाक्ये "भगवदनुध्यानरूपं मङ्गलमङ्गीकुर्व"न्नित्युक्तम् । भगवद्ध्यानस्य मङ्गलत्वे प्रमाणमभिदधानस्तद्विशदयति—ग्रन्थादाविति । हृदिस्थः = ध्यानगोचरः । इति स्मृतेरिति । ज्ञापकहेतौ पञ्चमी । २ असम्भावना नामासम्भवस्य निर्युक्तिकत्वरूपस्य भावना । अभावभावना विपरीतभावना । प्रकृते च भक्तियोगस्य पुरुषार्थत्वं न* सम्भवतीत्यसम्भावनाया आकारः । तस्य तन्नास्तीति विपरीतभावनायाः । तस्य तदस्ति न वेती संशय आदिपदार्थः । ३ कारिकां प्रायशो व्याख्याय, पूर्वमाक्षेपनिरसनपूर्वकं निर्णीतमपि भक्तियोगस्य पुरुषार्थत्वं पुनराक्षेपान्तर निराकरणद्वारा स्थूणानिखननन्यायेन द्रढयितुमुपक्रमते—क इति ।

* न सम्भवति = सयुक्तिकं न भवति ।

टीका

न[1] ह्यतोऽन्यश्शिवः पन्था विशतस्संसृताविह ।
वासुदेवे भगवति भक्तियोगो यतो भवेत् ॥

(श्री० भा० २ । २ । ३३)

धर्मस्स्वनुष्ठितः पुंसां विष्वक्सेनकथासु यः ।
नोत्पादयेद्यदि रतिं श्रम एव हि केवलम् ॥

(श्री० भा० १ । २ । ८)

दानव्रततपोहोमजपस्वाध्यायसँय्यमैः ।
श्रेयोभिर्विविधैश्चान्यैः कृष्णे भक्तिर्हि साध्यते ॥

(श्री० भा० १० । ४७ । २४)

भगवान् ब्रह्म कात्स्न्र्येन त्रिरन्वीक्ष्य मनीषया
तदध्यवस्यत् कूटस्थो रतिरात्मन् यतो भवेत् ॥

(श्री० भा० २ । २ । ३४)

एतावानेव लोकेऽस्मिन् पुंसान्निश्श्रेयसोदयः ।
तीव्रेण भक्तियोगेन मनो मय्यर्पितं स्थिरम् ॥

(श्री० भा० ३ । २५ । ४४)

या निर्वृतिस्तनुभृतान्तव पादपद्म-
ध्यानाद्भवज्जनकथाश्रवणेन वा स्यात् ।

टिप्पणी

१ न ह्यत इति । अयं शिवः पन्था इत्येतावन्मात्रेणैव भक्तियोगस्य सुकृतसाध्यत्वलाभसम्भवेऽतोऽन्यश्शिवः पन्था न हीत्युक्तिस्तस्य सकल-सुकृतसाध्यत्वलाभाय ।

टीका

सा ब्रह्मणि स्वमहिमन्यपि नाथ मा भूत्
[1]किम्वन्तकासिलुळितात् पततां विमानात् ॥

(श्री० भा० ४ । ९ । १०)

इत्यादयः । अत्र हि सर्वसुकृतसाध्यत्वेन सर्ववेदतात्पर्यविषयत्वेन चार्था, न्निश्रेयसनिर्वृतिशब्दाभ्याञ्च साक्षादेव पुरुषार्थत्वन्दर्शितम् । श्रीमद्भगवद्गीतासु च—

योगिनामपि सर्वेषां मद्गतेनान्तरात्मना ।
श्रद्धावान् भजते यो मां स मे युक्ततमो मतः ॥

(अ० ६ । श्लो० ४७)

इत्यादिना । ननु भक्तियोगस्य साधनत्वमपि बोधयन्त्यन्ये वादाः ।

वासुदेवे भगवति भक्तियोगः प्रयोजितः ।
जनयत्याशु वैराग्यञ्ज्ञानञ्च, [2]यदहैतुकम् ॥

(श्री० भा० १ । २ । ७)

अकामस्सर्वकामो वा मोक्षकाम उदारधीः ।
तीव्रेण भक्तियोगेन यजेत पुरुषं परम् ॥

(श्री० भा० २ । ३ । १०)

टिप्पणी

१ किन्त्वित्यकेरळपुस्तकपाठः । विमानात् पततां सा नास्तीति किमु वक्तव्यमिति भावार्थदीपिका । २ यत्पदस्योत्तरवाक्यगतत्वान्न तत्पदप्रयोगः । अयमेव सुन्दरः पाठः । क्वचित् पुनरौत्तरपुस्तकेषु ज्ञानञ्च्यत्तदहैतुकमित्येव तुरीयपादतया दृश्यते ।

## टीका

केचित् केवलया भक्त्या वासुदेवपरायणाः ।
अघन्धुन्वन्ति कार्त्स्न्येन नीहारमिव भास्करः ॥

(श्री० भा० ६ । १ । १५)

श्रीमद्भगवद्गीतासु च—

भक्त्या मामभिजानाति यावान् यश्चास्मि तत्त्वतः ।
ततो मान्तत्त्वतो ज्ञात्वा विशते तदनन्तरम् ॥

(अ० १८ । श्लो० ५५)

इत्यादयः । [1] अत्रान्यसाधनत्वेन साक्षादपुरुषार्थत्वं स्पष्टमेवोक्तम् । अत्रोच्यते—फलसाधनभेदेन भक्तिद्वैविध्योपपत्तेरदोषः । तथा हि—[2] भजनमन्तःकरणस्य भगवदाकारतारूपं भक्तिरिति भावव्युत्पत्त्या भक्तिशब्देन फलमभिधीयते । तस्य च निरतिशयपुमर्थत्वात् पूर्वोक्तवादानां प्रामाण्यमव्याहतम् ।

### टिप्पणी

१ ननु तावता किमत आहात्रेति । अत्र=एषु वचनेषु साक्षादपुरुषार्थत्वम्=साक्षात्पुरुषार्थत्वस्येतरेच्छानधीनेच्छाविषयत्वरूपस्याभावः । स्पष्टमेवोक्तमित्यत्र हेतुरन्यसाधनत्वेनेति । धर्मादेरिव भक्तियोगस्य पुरुषार्थसाधनत्वेनैव पुरुषार्थत्वम् । यदि साक्षात् पुरुषार्थत्वं, तदोदाहृतवचनैस्तत्साध्यबोधनं विरुध्येतेत्यभिप्रायः । २ भजनमित्यादि । सिद्धान्तबिन्दुटीकायान्यायरत्नावल्यां भजनीयतुष्टिजनककायिकादिव्यापारविधया तु भक्तिनिर्वचनं धातूनामनेकार्थत्वान्न विरुध्यते । यद्वा तादृशव्यापारस्यान्तःकरणे भगवदाकारतासम्पादकत्वात् करणव्युत्पत्त्यभिप्रायकमेव तदिति न धात्वर्थभेदः । तर्हि तु "भक्तिर्भजन"मिति तत्रत्यभजनपदं करणल्युडन्तमेव । अव्याहतम्=अप्रतिबद्धम् । अविरुद्धमिति यावत् ।

## टीका

तथा, भज्यते=सेव्यते भगवदाकारमन्तःकरणं क्रियतेऽनयेति करणव्युत्पत्त्या भक्तिशब्देन श्रवणकीर्तनादि साधनमभिधीयते। तस्य च स्वयं पुरुषार्थत्वाभावात् साधनत्ववादानामपि प्रामाण्यमविरुद्धम्। [1]यथा "विज्ञप्तिर्विज्ञान"मिति भावव्युत्पत्त्या "विज्ञानमानन्दम्ब्रह्म" (बृ० आ० उ० ३।९।२८)-त्यत्र विज्ञानशब्दो ब्रह्मणि वर्तते, "विज्ञायतेऽनेने"ति करणव्युत्पत्त्या "विज्ञानँय्यज्ञन्तनुत" (तै० उ० २।५।१) इत्यादावन्तःकरणे वर्तते, तद्वत्। [2]एतच्च स्पष्टीकृतं प्रबुद्धेन—

> स्मरन्तस्स्मारयन्तश्च मिथोऽघौघहरं हरिम्।
> भक्त्या सञ्जातया भक्त्या बिभ्रत्युत्पुळकान्तनुम्॥ इति।
> (श्री० भा० ११।३।३१)

[3]अत्र करणव्युत्पत्त्या प्रथमभक्तिशब्दो भागवतधर्मेषु प्रयुक्तः। द्वितीयस्तु भावव्युत्पत्त्या फले,

> [4]इति भागवतान्धर्माञ्छिक्षन् भक्त्या तदुत्थया।
> नारायणपरो मायामञ्जस्तरति दुस्तराम्।
> (श्री० भा० ११।३।३३)

### टिप्पणी

१ एकस्यैव शब्दस्य भावकरणव्युत्पत्तिभेदेनार्थद्वये प्रयोगे दृष्टान्तमाह—यथेत्यादि। २ एतच्चेति। भावव्युत्पत्त्या फलस्य, करणव्युत्पत्त्या भागवतधर्मरूपसाधनस्य च भक्तिशब्दार्थत्वमित्यर्थः। ३ अत्रेत्यादि। भक्त्या सञ्जातयेत्यनेन प्रथमभक्तेर्द्वितीयभक्तिं प्रति साधनत्वं, द्वितीयभक्तेः फलत्वमुत्पुलकान्तनुं बिभ्रतीति रोमाञ्चरूपानुभावकथनमुखेन परमानन्दरूपत्वप्रदर्शनाद्विशदमिति भावः। ४ ननु प्रथमभक्तेस्साधनत्वलाभेऽपि भागवत-

टीका

इत्युपसंहारे प्रथमभक्तिपदस्थाने भागवतधर्मशब्दप्रयोगात् । न च यथाऽध्ययनस्याक्षरग्रहणात्मकस्याप्यक्षरग्रहणमेव फलम्, गुर्वधीनत्वतदनधीनत्वाभ्यां विशेषात् । एवमत्रापि भागवतधर्मरूपा भक्तिरेव गुर्वधीनत्वेन साधनं, [१] तदनधीनत्वेन च निष्ठां प्राप्ता सती सैव फलमिति न साधनफलभेदेन भक्तिद्वैविध्योपपत्तिरिति वाच्यम्,

[२] क्वचिद्रुदन्त्यच्युतचिन्तया क्वचि-
द्धसन्ति नन्दन्ति नम( वद )न्त्यलौकिकाः ।

टिप्पणी

धर्मरूपत्वालाभात् पद्यमिदम्भवदभिमतयोर्भक्त्योः कथम्प्रमाणं भवतीत्याशङ्क्य तस्यास्तद्रूपत्वलाभोपायमाहेतिभागवतानिति । अत्र भक्त्या मायान्तरतीत्युक्त्या भक्तेर्मायातरणं प्रति साक्षाद्धेतुत्वं लभ्यते । परम्परया हेतुत्वविवक्षणे तु तज्जन्यस्यान्यस्य साक्षाद्धेतोरकथनेन न्यूनतापत्तेः। इतः परं स वक्ष्यत इत्याक्षेपस्याप्यनवसर उपसंहार इत्यनेन दर्शितः । एवञ्चास्य श्लोकस्योपसंहारवाक्यत्वादत्रत्यभक्तिपदम्पूर्वं फलत्वेनोक्तभक्तिपर मित्यस्यावश्याभ्युपेयत्वादेतत्पद्यैकवाक्यतयोपक्रमपद्यगतभक्तिपदं भागवत धर्मपरमित्यवश्यमुररीकरणीयमिति भावः । १ तदनधीनत्वेनेति । फलमित्यनेनान्वयः । सैव फलमिति । तथा च बिभ्रत्युत्पुळकान्तनुमित्यनेन प्रतिपादितं रोमाञ्चं प्रति भागवतधर्मरूपभक्तेस्साक्षाद्धेतुत्वासम्भवात्तृतीयायाः प्रयोजकत्वार्थकत्वं, एवं इति भागवतान्धर्मानित्यत्रत्यभक्तिपदोत्तरतृतीयाया अपीत्याशयः । २ यद्युभयत्रापि भक्तिर्भागवतधर्मरूपैव गृह्यते, तदा तत्कार्यभूतं कृतकृत्यतां प्रति साक्षात्साधनमन्यद्वाच्यम् । तदनिगद्यैव पूर्वोक्तयोश्श्लोकयोर्मध्ये क्वचिद्रुदन्तीति श्लोकेन कृतकृत्यता प्रतिपादिता

## टीका

नृत्यन्ति गायन्त्यनुशीलयन्त्यजं
भवन्ति तूष्णीं परमेत्य निर्वृताः ॥

( श्री० भा० ११ । ३ । ३२ )

इति मध्ये कृतकृत्यत्वपरामर्शात्[1] । यदा ह्यध्ययनफलस्याक्षरग्रहणस्यार्थज्ञानानुष्ठानादिवद्भागवतधर्मजनिताया भक्तेरपि फलान्तरे साधनत्वमभविष्यत्, तदा परं पुरुषार्थं प्राप्य निर्वृतास्तूष्णीं भवन्तीति कृतार्थतान्नावक्ष्यत्, अपितु[2] तदनन्तरमनुष्ठेयान्तरन्निरदेक्ष्यत्, न च निर्दिशति । तस्मात् साधनफलभेदेन भक्तिद्वैविध्योपपत्तेस्साधनत्ववचनानां फलत्ववचनानाञ्च विषयविभागेन सर्वत्राविरोधस्सिद्धः । "अघन्धुन्वन्ति कार्त्स्न्येने"त्यादि तु[3] फलसाधनयोस्समानम्, फलरूपाया अपि भक्तेर्दृष्टादृष्टफलकताया वक्ष्यमाणत्वात् ।

### टिप्पणी

दृश्यते । तदन्यथानुपपत्त्या रोमाञ्चहेतुत्वेन मायातरणहेतुत्वेन च पूर्वोक्ता भक्तिरेव साक्षाद्धेतुरिति वक्तव्यम् । एवञ्च तस्या न भागवतधर्मरूपत्वमित्यभिप्रेत्याह—क्वचिद्रुदन्तीत्यादिना । यद्वोपक्रम उपसंहारे च भक्त्यनन्तरं साधनान्तरस्यानुष्ठेयत्वेनानुक्तावपि तन्मध्ये यत्रकुत्रापि तदुक्तौ तदनुसारेणोपक्रमोपसंहारयोर्नयनं स्यादपि । मध्ये यत्किञ्चनापि साधनान्तरमनभिधायैव कृतकृत्यत्वप्रतिपादनादुपक्रमवाक्यस्थद्वितीयभक्तिपदस्योपसंहारवाक्यगतभक्तिपदस्य च भागवतधर्मेतरभक्तिपरत्वमेवाश्रयितव्यमित्यभिसन्धानो दूषयति—क्वचिदित्यादिना । परामर्शात् = विवेचनात् । १ अर्थज्ञानानुष्ठानादिवत् = तदादाविव । २ तदनन्तरम् = भक्त्यनुष्ठानानन्तरम् । अनुष्ठेयान्तरमित्यत्रत्यानुष्ठानक्रियाविशेषणमेतत् । ३ फलसाधनयोस्समानमिति । फलरूपभक्तौ साधनात्मकभक्तौ च सम्बध्यत इत्यर्थः ।

टीका

[1] एवञ्च,

इदं हि पुंसस्तपसश्श्रुतस्य वा
स्विष्टस्य सूक्तस्य च [2] बुद्धदत्तयोः ।
अविच्युतोऽर्थः कविभिर्निरूपितो
यदुत्तमश्लोकगुणानुवर्णनम् ॥
(श्री० भा० १ । ५ । २२)

निवृत्ततर्षैरुपगीयमाना-
द्भवौषधाच्छ्रोत्रमनोभिरामात् ।
क उत्तमश्लोकगुणानुवादात्
पुमान् विरज्येत विना पशुघ्नात् ॥
(श्री० भा० १० । १ । ४)

इत्यादौ साधनवचनं फलपरतया योजनीयम्, "गोभिश्श्रीणीत मत्सर"मितिवत् । तत्र हि गोप्रभवैः क्षीरैर्मत्सरम्=सोमरसं मिश्रयेदित्यर्थस्थितः [3] पूर्वतन्त्रे । [4] उत्तरतन्त्रे च महतः परमव्यक्तमित्यत्राऽव्यक्तशब्दस्तत्प्रभवशरीरमाचष्ट इति

टिप्पणी

१ एवञ्चेति । फलसाधनभेदेन भक्तिद्वैविध्ये सिद्धे चेत्यर्थः । २ बुद्धेत्येव केरळतालपत्रपुस्तकेषु पाठो न तु प्रायिकतयोदीच्यपुस्तकस्थं मध्ये "बुद्धी"ति पाठवैरूप्यम् । श्रुतादयो भावे निष्ठा इति भावार्थदीपिका । तथा च बुद्धपदस्य बोधोऽर्थः । ३ पूर्वतन्त्रे=मीमांसात्वेन प्रसिद्धायां पूर्वमीमांसायाम् । ४ उत्तरतन्त्रे=वेदान्त × शास्त्रत्वेन प्रथितायामुत्तरमीमांसायाम् ।

× उपनिषद्ग्रन्थो नोत्तरमीमांसा भवति, अपितु तदुपकारकशारीरकमीमांसासूत्रभाष्यादिरेवेत्यतश्शास्त्रेत्यप्युक्तम्, न तु वेदान्तेत्येव ।

टीका

स्थितमानुमानिकाधिकरणे "सूक्ष्मन्तु तदर्थत्वा"दित्यत्र । एवमत्रापि गुणानुवर्णनगुणानुवादशब्दौ तज्जन्यप्रीतिपरतया योज्यौ, अन्यथा परमपुरुषार्थत्वायोगात् । ननु [1] तर्हि नामान्तरेण ब्रह्मविद्यैव भगवद्भक्तिरित्युक्तम् । तथा हि—तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेने- ( बृ० आ० उ० ४ । ४ । २२ ) त्यादिश्रुत्या सर्वसुकृतसाध्यत्वेन ब्रह्मविद्या प्रतिपादिता । सर्वापेक्षाधिकरणे च तथैव निर्णीता । [2] इहापि पूर्वोदाहृतवचनैस्सर्वसुकृतसाध्यत्वेन [3] लक्षणेन भगवद्भक्तेर्ब्रह्मविद्यारूपतायाः प्रतिपादनात्तस्याश्च निरतिशयपुमर्थत्वस्य चतुर्लक्षणमीमांसयाऽप्रतिपत्तिविप्रतिपत्तिनिवारणेन व्यवस्थापितत्वाद्व्यर्थोऽयं विचारारम्भ इति चेन्न, स्वरूपसाधनफलाधिकारिवैलक्षण्याद्भक्तिब्रह्मविद्ययोः । [4] द्रवीभावपूर्विका हि मनसो भगवदाकारता सविकल्पकवृत्तिरूपा भक्तिः । द्रवीभावानुपेताऽद्वितीयात्म[5]मात्रगोचरा निर्विकल्पकमनोवृत्तिर्ब्रह्मविद्या । भगवद्गुणगरिमग्रन्थनरूपग्रन्थश्रवणं भक्तिसाधनम् । तत्त्वमस्यादिवेदान्तमहावाक्यं ब्रह्मविद्यासाधनम् ।

टिप्पणी

१ तर्हि = भगवद्भक्तेः परमपुरुषार्थत्वे सति । २ इहापि = एतद्ग्रन्थेऽपि । ३ लक्षणेन = ब्रह्मविद्यालक्षणेन । ब्रह्मविद्यात्वज्ञापकेनेति यावत् । चतुर्लक्षणेति । इह तु लक्षणान्यध्यायाः । ४ द्रवीभावपूर्विका सविकल्पकवृत्तिरूपा मनसो भगवदाकारता भक्तिरित्यन्वयः । हिशब्दस्तु द्रवीभावपूर्विकेत्यादेः परमहंसपरिव्राजकस्येत्यन्तस्योक्तवैलक्षण्ये हेतुत्वन्दर्शयति । ५ भगवद्व्यतिरिक्तस्याद्वितीयात्मनो गगनकुसुमसहोदरतया भक्तिभूतसविकल्पकमनोवृत्तेरपि भगवद्गुणगोचराया अद्वितीयात्मगोचरत्वादत्र मात्रपदम् ।

## टीका

भगवद्विषयकप्रेमप्रकर्षो भक्तिफलम् । सर्वानर्थमूलाज्ञाननिवृत्तिर्ब्रह्मविद्याफलम् । प्राणिमात्रस्य भक्तावधिकारः । ब्रह्मविद्यायान्तु साधनचतुष्टयसम्पन्नस्य परमहंसपरिव्राजकस्य । [1]यज्ञदानादिसर्वसुकृतसाध्यत्वन्तु समानं भक्तिब्रह्मविद्ययो-[2]स्स्वर्गविविदिषयोरिव । [3]यथा "स्वर्गकामो दर्शपूर्णमासाभ्यां यजेते"ति [4]स्थित एव स्वर्गसाधनत्वे, "तमेतं वेदानुवचनेने"त्यादिना विविदिषासाधनत्वमपि संयोगपृथक्त्वन्यायेन बोध्यते, तथा भक्तिब्रह्मविद्ययोरपि भविष्यति । [5]सामग्र्यैक्ये हि कार्यैक्यं, न तु कारणमात्रैक्ये, अतिप्रसङ्गात् । [6]एवं भक्तिब्रह्मविद्ययोरपि स्वर्गविविदिषयोरिव फलसाधनभावाभावश्च तुल्यसाधनसाध्यत्वञ्च भविष्यति । [7]ननु ब्रह्मविद्यातिरिक्तत्वे भक्तेस्स्वर्गादिवन्निरतिशयपुरुषार्थत्वं न स्या-

### टिप्पणी

१ एवं वैधर्म्याण्युक्त्वा साधर्म्यमाह—यज्ञदानादीति । यद्वा ननु भगवद्भक्तेर्ब्रह्मविद्यातिरिक्तत्वे ब्रह्मविद्यालक्षणस्योक्तरूपस्य तत्रातिव्याप्तिरित्याशङ्क्य सर्वसुकृतसाध्यत्वप्रतिपादनं न लक्षणपरमित्यभिप्रायेण समाधत्ते—यज्ञेत्यादि । २ अतिमात्रविलक्षणयोरपि पदार्थयोरभिन्नैर्यज्ञादिसुकृतैस्साध्यत्वे दृष्टान्तमाह—स्वर्गविविदिषयोरिवेति । ३ दृष्टान्तं विवृण्वन्नाह—यथेत्यादि । ४ दर्शपूर्णमासयोस्स्वर्गसाधनत्वे निश्चित एवेत्यर्थः । ५ ननु कारणैक्ये घटकलशयोरिव कार्यैक्यं कथन्निरुध्यत इत्यत आह—सामग्र्यैक्य इति । ६ एकसाधनसाध्ययोरपूर्वस्वर्गयोरिव भक्तिब्रह्मविद्ययोरपि फलसाधनभावापत्तिं निवारयत्येवमिति । ७ भक्तिर्निरतिशयपुमर्थत्वरहिता, ब्रह्मविद्यातिरिक्तत्वात् । यथा स्वर्गादिः । एवञ्च भक्तियोगं परमं पुमर्थं वदन्तीति मूलमयुक्तमेवेति शङ्कते—नन्विति । ८ स्वर्गादिवत्—

### टीका

दिति चेन्न[1], स्वर्गादेर्नियतदेशकालशरीरेन्द्रियादिभोग्यत्वेन [2]सर्वत्रोपभोक्तुमशक्यत्वात् [3]क्षयित्वपारतन्त्र्यलक्षणदुःखद्वयानुविद्धत्वेन निरतिशयत्वाभावेऽपि भक्तिसुखधाराया-स्सर्वदेशकालशरीरेन्द्रियादि[4]साधारण्येन [5]ब्रह्मविद्याफलवदुपभोक्तुं शक्यत्वात् क्षयित्वपारतन्त्र्यलक्षणदुःखद्वयानुवेधाभावेन निरतिशयत्वोपपत्तेः। तदुक्तम्—

> त्यक्त्वा स्वधर्मञ्चरणाम्बुजं हरे-
> र्भजन्नपक्वोऽथ पतेत्ततो यदि।
> यत्र क्व वाऽभद्रमभूदमुष्य किं
> को वाऽर्थ आप्तोऽभजतां स्वधर्मतः॥

(श्री० भा० १।५।१७)

> न वै जनो जातु कथञ्चनाऽऽव्रजे-
> न्मुकुन्दसेव्यन्यवदङ्ग संसृतिम्।
> स्मरन्मुकुन्दाङ्घ्र्युपगूहनं पुन-
> र्विहातुमिच्छेन्न रसग्रहो यतः॥

(श्री० भा० १।५।१९)

#### टिप्पणी

स्वर्गादेरिव। १ अनुमाने दुःखानुविद्धत्वस्योपाधित्वमभिसन्धाय समाधत्ते—नेत्यादि। २ सर्वत्रेति। तत्तद्देशकालशरीरेन्द्रियाद्यभावस्थल इत्यर्थः। ३ क्षयित्वेति। यत्रोपभोगस्तत्स्थलवियोगदशायां क्षयस्य, वर्तमानसमयेऽपि क्षयालोचने भयादेश्चापरिहरणीयत्वादिति भावः। पारतन्त्र्येति। अस्यापि दुःखहेतुत्वं प्रसिद्धम्। समे स्पर्धया यद्दुःखं यच्चाधिकेऽसूयया, तयोरपि दुष्परिहरत्वमनेन दर्शितम्। ४ साधारण्येनेति। उपभोक्तुमित्यत्रान्वयः। ५ ब्रह्मविद्याफलवत्=ब्रह्मविद्यारूपफलस्येव।

टीका

सकृन्मनः कृष्णपदारविन्दयो-
र्निवेशितन्तद्गुणरागि यैरिह।
न ते यमं पाशभृतश्च तद्भटान्
स्वप्नेऽपि पश्यन्ति हि चीर्णनिष्कृताः॥

(श्री० भा० ६।१।१९)

[1]इत्यादि। अत एवाऽऽपत्तावपि दुःखासंस्पर्शित्वप्रतिपादनायास्पृष्टदुःखमिति विशेषणमुपात्तम्। [2]अत एव च न परिणतिविरसेन स्वर्गादिना साम्यम्। [3]एतेन लौकिकरसवैलक्षण्यमपि व्याख्यातम्, तस्यापि शास्त्राविहितत्वेन पापक्षयाहेतुत्वेनाऽऽपत्तौ दुःखसंस्पर्शित्वात्। भक्तेस्तु दृष्टादृष्टफलतया महान् विशेषो वक्ष्यते। [4]नन्वेवं सति भक्तिसुखाद्वैराग्यासम्भवेन मुमुक्षुत्वासम्भवात्[5]तदधिकारिकचतुर्लक्षणमीमांसारम्भो न स्यादिति चेत् सत्यम्, [6]भक्तिसुखासक्तान् प्रति तस्या अनारम्भात्। [7]भजनीयस्वरूपनिर्णयार्थं भक्ताना-

टिप्पणी

१ इत्यादीति। तदुक्तमित्यत्रत्योक्तिक्रियाविशेषणमेतत्। २ मूले भक्तिसुखस्य निरुपमत्वप्रदर्शनमप्यत एवेत्याहात एव चेति। ३ एतेन=दुःखाननुविद्धत्वकथनेन। ४ एवं सति=भक्तिसुखस्यैवंरूपत्वे सति। ५ तदधिकारिकेत्यादि। मुमुक्ष्वधिकारिकायां चतुर्लक्षणमीमांसायामधिकार्यसम्भवात्तदारम्भस्य वैयर्थ्यं स्यादित्यर्थः। ६ भक्तिसुखानासक्तानां मुमुक्षुत्वसम्भवाच्चैवमित्यभिप्रेत्य समाधत्ते—भक्तिसुखेति। ७ मुमुक्षूणामेव तदारम्भोद्देश्यत्वेऽपि भक्तान् प्रत्यपि न तदारम्भवैयर्थ्यमिति समाधानान्तरमाह—भजनीयेति। भजनीयस्य भगवतो यत् स्वरूपं तन्निर्णयार्थम्।

टीका

मपि तद्विचारस्याऽऽवश्यकत्वाच्च । [1]भक्तिसुखाद्वैराग्यं न स्यादिति त्विष्टमेव नाऽऽपादितम्,

[2]आत्मारामाश्च मुनयो निर्ग्रन्था अप्युरुक्रमे ।
कुर्वन्त्यहैतुकीं भक्तिमित्थम्भूतगुणो हरिः ॥

(श्री० भा० १ । ७ । १० )

इत्यादिना जीवन्मुक्तानामपि भगवद्भक्तिप्रतिपादनात् ॥१॥
इति वक्ष्यमाणसर्वार्थसङ्ग्रहरूपप्रथमकारिकाविवरणम् ।

टिप्पणी

तद्विचारस्य = भजनीयस्वरूपविचारस्य । १ भक्तिसुखाद्वैराग्यासम्भवेनेति पूर्वोक्त्या सूचितायामापत्ताविष्टापत्तिमाह—भक्तिसुखादिति । २ आत्मारामा इत्यादि । यं सर्वे देवा नमन्ति मुमुक्षवो ब्रह्मवादिनश्चेति नृसिंहतापनीयश्रुतिस्तद्भाष्यञ्च सर्वज्ञभगवत्पूज्यपादकृतमत्र स्मर्तव्यम् । श्रुतौ देवा इति । प्रकृष्टविषयभोक्तार इत्यर्थः । नमतिरजहत्स्वार्थलक्षणया भजनसामान्यपरः । ब्रह्मवादिनो मुक्ताः । ततश्च सर्वैरपि विषयिभि-र्मुमुक्षुभिर्मुक्तैश्च भगवद्भजनस्य निर्विशेषमनुपेक्षणीयत्वन्दर्शितम्भवति । जीवन्मुक्तानां भोगेन कर्मजकळेबरविगमेऽपि सायुज्यमुक्तिमनादृत्य स्वयं विग्रहसृष्टिपूर्वकभगवद्भजनं भाष्ये प्रतिपादितम्—मुक्ता अपि लीलया विग्रहं कृत्वा भजन्त इति ।

संसाररोगेण बलीयसा चिर-
न्निपीडितैस्तत्प्रशमेऽतिशिक्षितम् ।
इदम्भवद्भिर्बहुधा व्ययातिग-
न्निपीयताम्भक्तिरसायनम्बुधाः ॥ २ ॥

टीका

तस्मादस्य ग्रन्थस्य नामकथनद्वारा [२]प्रयोजनमुपदिशति—संसारेति । स्पष्टम् ॥ २ ॥

टिप्पणी

१ अखिलतुष्ट्यायेति ग्रन्थप्रयोजनस्य कथितचरत्वेऽपि संसारेत्यादिकारिका न विफला, श्रोतॄणामाभिमुख्यातिशयस्य फलत्वादिति ध्वनयंस्तामवतारयति—तस्मादिति । एतद्ग्रन्थाऽभिधेयभूतभक्तियोगस्य प्रदर्शितप्रकारत्वादित्यर्थः । अनेन तेषामतितरामभिमुखीकरणीयत्वमाविष्कृतम् ।
२ प्रयोजनं विधीयमानपानरूपम् ।

मूले संसारेति । हे बुधाः=बुद्धिमन्तः भवद्भिः भक्तिरसायनन्निपीयतामित्यन्वयः । अत्र भक्तिरसायनमेव भक्तिरसायनमिति श्लिष्टरूपकमस्ति । अत एव संसाररोगेणेति रूपकम् । इहाद्यस्य भक्तिरसायनपदस्य प्रकृतग्रन्थोऽर्थः । द्वितीयस्य तु भक्तिरसायनाख्यो रसायनविशेषः । भक्तिरसस्यायनमाश्रय इति व्युत्पत्त्या ग्रन्थस्य भक्तिरसायनसञ्ज्ञा । यथा भाजनविशेषे पीयूषरसोऽस्त्यमरलोके, तद्वदत्र ग्रन्थे भक्तिरसः प्रतिपादकतासंसर्गेण विद्यत इत्यर्थः । इहेव ग्रन्थान्तरे भक्तिरसो न प्रतिपादितः प्रतिपादयितुमशक्यश्चेत्यस्य श्रवणादिकमवश्यमेव करणीयम्भक्तिरसजिज्ञासुभिरित्यप्ययनशब्दस्वारस्यात् प्रकाशते । तथा-च, भक्तिरसायननामकग्रन्थरूपस्य भक्तिरसायनसञ्ज्ञकरसायनस्य श्रवणादिरूपं पानं नितराम्=पुनः पुनः क्रियतामिति वाक्यार्थः । नाहमिजार्थ-

## टिप्पणी

मुद्दिश्य याचे किन्तु कृपयोपदिशामि, यतः पानस्य फलं भवतामेवेति दर्शितं भवन्तः पिबन्त्वित्यप्रयुज्य प्रयुक्तेनात्मनेपदेन। परप्रयोजनोद्देशेनैव पूर्वकारिकायां "व्यनज्मी"ति परस्मैपदमुपात्तम्। अतोऽत्र निपीयतामिति लोड्विधावेव, न प्रार्थनायाम्। यदि भवद्भिस्तन्न पीयेत, तर्हि बुद्धिमत्त्वं भवतां भज्येतेति सम्बोधनाभिप्रायः। ननु विनैव तस्य पानं कृतार्था एव वयमिति किं तत्पानेनेत्याशङ्कायां भवत्पदार्थं विशिनष्टि—संसाररोगेण निपीडितैरिति। संसारो नाम कृमिपर्यन्तेषु विविधयोनिषु जननमरण-प्रवाहः। यद्वा देहादिष्वहम्ममाध्यासहेतुमिथ्याज्ञानजन्यस्संस्कारः। स एव रोगः तेन नितराम्=दुस्सहतया पीडितैः=बाधितैः। कथम्भूतेन संसाररोगेण? बलीयसा। अतिशयेन बलवान् बलीयान्, तेन। अश्विनी-देवाभ्यामप्यथवा, "ब्रह्मा स्मृत्वाऽऽयुषो वेद"मित्येवं वैद्यशास्त्र-विश्रुतेनादिवैद्येनाप्यचिकित्स्येनेत्यर्थः। भगवद्भक्तिमृते मार्गान्तरैः कथम-प्यपरिहार्येणेति संसारपक्षीयोऽर्थः। अपिच चिरम्=अनादिकाले=तद-वच्छेदेन निपीडितैरिति कालाधिक्यादपि दुश्चिकित्सत्वमुच्यते। संसार-पीडाया अपि रागद्वेषादिवासनादार्ढ्यद्वारकमपरिहरणीयत्वं कालभूयिष्ठ-त्वाद्भवति। नन्वीदृशैरस्माभिरेतत्परिहारोपाय एव मार्गणीयो, न भक्ति-रसायनम्। दुष्परिहरत्वे त्वयमत्यसह्योऽप्यगत्या सोढव्य इत्यतो भक्ति-रसायनस्य विशेषणं वितरति—तत्प्रशमेऽतिशिक्षितमिति। तस्य=तादृ-शसंसाररोगस्य प्रशमे=प्रकर्षेण शमने विषयेऽतिशिक्षितमतिशयेनोपात्त-विद्यम्, शिक्ष—विद्योपादान इति धातुस्मरणात्। अत्यन्तदुस्सहदुर्वारसं-सारमहाव्याधिं प्रकर्षेण=समूलतया शमयितुमत्यर्थसमर्थमित्यर्थः। तथा-विधभक्तिरसायनस्य निर्मितिरतिदुश्शकेति मतिसङ्कोचो भवतां मा भूत्। कुत इति चेत्, इदम्। अस्माभिर्निर्मितमेव विद्यत इत्यर्थः। नन्वहो अस्य महामहिम्नो मूल्यमर्पयितुमकुशला वयमित्यपि न शङ्कनीयम्, यतो व्ययातिगम् व्ययमतीत्य गच्छतीति तथा। व्ययं विनैव लभ्यमित्यर्थः।

द्रुतस्य भगवद्धर्माद्धारावाहिकतां[1] गता ।
सर्वेशे[2] मनसो वृत्तिर्भक्तिरित्यभिधीयते ॥ ३ ॥

टीका

भगवद्भक्तेरसरूपतया पुमर्थतां वक्तुं प्रथमं सामान्य-

टिप्पणी

अनेन प्रसिद्धरसायनाद्वैधर्म्यमभिहितम् । पानस्यापि विशेषमाचष्टे—बहुधेति । लोके ह्येकं रसायनमेकधा पीयते, न बहुधा । अस्य पुनरपूर्वमेव यथासौकर्यं बहुप्रकारं पानम् । ग्रन्थपक्षेऽप्यध्ययनचिन्तनविलोकनकीर्तनाध्यापनादिरूपत्वाद्बहुविधत्वम् । निपीयतामित्यत्र नीत्युपसर्गस्तु पुनःपुनरित्यर्थको भक्तिरसायनस्य क्षणे क्षणे नवत्वन्द्योतयति । इदानीं व्ययातिगमिति रसायनविशेषणमितरथाऽपि विव्रियते——नन्वस्यैकस्य बहुकर्तृकं बहुप्रकारं पुनःपुनः पानं नैव सम्भवतीत्यत आह——व्ययातिगमिति । क्षयरहितमित्यर्थः । ग्रन्थस्य गम्भीरार्थत्वमक्षय्यफलकत्वञ्च दर्शितमनेन । अपि च पीयतां, न तु भुज्यताम् । तेन च क्लेशलेशस्याप्यनवकाशः प्रकाशितः । प्रकृतेऽपि ग्रन्थस्य प्रसादादिगुणशालित्वाद्विषयसौन्दर्याच्च सुखेनैव श्रवणमननादिकं कार्यमिति ।

१ धारावाहिकताम् = अविच्छिन्नप्रवाहयुक्तताम् । २ सर्वेश इति ।

नौमीड्य तेऽभ्रवपुषे तटि(डि)दम्बराय
गुञ्जावतंसपरिपिञ्छलसन्मुखाय ।
वन्यस्रजे कबलवेत्रविषाणवेणु-
लक्ष्मश्रिये मृदुपदे पशुपाङ्गजाय ॥

(श्री० भा० १० । १४ । १)

क्वाहन्तमोमहदहङ्खचराग्निवार्भू-
संवेष्टिताण्डघटसप्तवितस्तिकायः ।

टीका

लक्षणमाचष्टे—द्रुतस्येति । भगवद्धर्मोऽत्र भगवद्गुणश्रवणम् । [1]न तु धर्मबुध्या तदनुष्ठानपर्यन्तं विवक्षितम् ।
[2]तस्मात् केनाप्युपायेन मनः कृष्णे निवेशयेत् ।
(श्री० भा० ७ । १ । ३१)
इत्यत्रापि [3]केनाप्युपायेनेति धर्मबुद्ध्याऽनुष्ठितेनायत्नसि-

टिप्पणी

क्वेदृग्विधाविगणिताण्डपराणुचर्या-
वाताध्वरोमविवरस्य च ते महित्वम् ॥
(श्री० भा० १० । १४ । ११)

तस्मादिदञ्जगदशेषमसत्स्वरूपं
स्वप्नाभमस्तधिषणम्पुरुदुःखदुःखम् ।
त्वय्येव नित्यसुखबोधतनावनन्ते
मायात उद्यदपियत् सदिवावभाति ॥
(श्री० भा० १० । १४ । २२)

इति च कमलभूसमनुभूते श्रीवल्लवकुलतिलकतल्लज इत्यर्थः । अत एव समनन्तरोल्लासप्रक्रमे "गोविन्दे"त्यनुवादः । ततःपरमपि तुरीयादिकारिकासु विशदमिदम् । अत एव च टीकायां "केनाप्युपायेन मनः कृष्णे निवेशये"दित्युदाहरणं, "शिशुपालादौ नाव्याप्ति"रिति शिशुपालादिग्रहणञ्च । टीकायां रसरूपतयेति। पुमर्थतान्वयि प्रयोज्यत्वं तृतीयार्थः । लक्षणम्=स्वरुपम्। १ न त्वित्यादि । धर्मबुद्धिपूर्वकं यद्भगवद्गुणश्रवणानुष्ठानं, तत्पर्यन्तन्तु भगवद्धर्मपदेन न विवक्षितमित्यर्थः । २ सामान्यतो भगवद्गुणश्रवणस्य विवक्षायां शास्त्रसम्मतिमाह—तस्मादिति । ३ केनाप्युपायेनेतीति । तद्भागस्येत्यर्थः ।

## टीका

द्धेन वा भगवद्गुणश्रवणेनेत्यर्थः । [1] तेन शिशुपालादौ [2] नाव्याप्तिः । [3] भगवद्गुणश्रवणेन वक्ष्यमाणकामक्रोधाद्यु [4] द्दीपनद्वारा [5] द्रवावस्थां प्राप्तस्य चित्तस्य धारावाहिकी या सर्वेशविषया वृत्तिः । [6] भगवदाकारतेत्यर्थः । तदाकारतैव हि सर्वत्र वृत्तिशब्दार्थो [7] ऽस्माकं दर्शने । सा भक्तिरित्यभिधीयते [8] शास्त्रविद्भिः । तथा च शास्त्रम्—

मद्गुणश्रुतिमात्रेण मयि सर्वगुहाशये ।
[9] मनोगतिरविच्छिन्ना यथा गङ्गाम्भसोऽम्बुधौ ।

### टिप्पणी

१ तेनेति । अत्र भगवद्धर्मपदेन याथाकथञ्चित्कभगवद्गुणश्रवणमात्रविवक्षणेनेत्यर्थः । अत्रत्यस्य भगवद्धर्मपदस्यार्थे धर्मबुद्धिपूर्वकत्वानिवेशेनेति यावत् । २ नाव्याप्तिरिति । द्वेषभक्तिकशिशुपालादिगतस्य भगवद्गुणश्रवणस्य धर्मबुद्धिपूर्वकत्वविरहात्तन्निवेशे भक्तिसामान्यलक्षणस्याव्याप्तिः प्रसज्येतेति भावः । ३ भगवद्धर्मपदस्य विवक्षितार्थमुक्त्वा कारिकामन्वयमुखेन व्याचष्टे—भगवद्गुणश्रवणेनेत्यादि । ४ उद्दीपनमुद्रेकः । ५ द्रवावस्थाम्=द्रवस्यावस्थाम् । द्रवत्वरूपावस्थामिति यावत् । द्रवत्वस्य सांसिद्धिकत्वभ्रमपरिहारार्थमवस्थात्वमुक्तम् । अत एव प्राप्तिक्रियाकर्मत्वम् । एवमुपरि "द्रवीभावे"ति तत्र तत्र च्विप्रत्ययप्रयोगस्यापि तत्परिहारः फलम् । असांसिद्धिकस्य तु द्रवत्वस्य निमित्तमावश्यकम् । तच्च दर्शितं—भगवद्गुणश्रवणेन वक्ष्यमाणकामक्रोधाद्युद्दीपनद्वारेति । ६ भगवदाकारता=भगवत आकारो यस्मिंस्तत्ता । ७ अस्माकं दर्शने=वेदान्तशास्त्रे । ८ शास्त्रविद्भिरिति । तादृशमनोवृत्तेर्भक्तिलक्षणत्वं शास्त्रसिद्धमित्यर्थः । साधकं शास्त्रमाह—तथा चेत्यादि । ९ मनोगतिरिति । गतिफलभूतस्संयोगविशेषोऽत्र गतिपदेनोच्यते । स चाकारपदाभिधेयस्संस्थानविशेष एवाभिमतः ।

चित्तद्रव्यं हि जतुवत् स्वभावात् कठिनात्मकम् ।
तापकैर्विषयैर्योगे द्रवत्वम्प्रतिपद्यते ॥ ४ ॥

टीका

लक्षणं भक्तियोगस्य निर्गुणस्य ह्युदाहृतम् ॥

( श्री० भा० ३ । २९ । ११-१२ )

अत्राविच्छिन्नेति धारावाहिकता दर्शिता । यथा गङ्गाम्भस इति दृष्टान्तेन दार्ष्टान्तिकेऽपि मनसि द्रवावस्था । मयि सर्वगुहाशये मनोवृत्तिरिति सर्वेशाकारता । [1]तेनाद्रवावस्थायां धारावाहिक्यपि वृत्ति,र्द्रवावस्थायामप्याशुविनाशिनी [2]सा, द्रवत्वधारावाहिकत्वयुक्ताप्य[3]सर्वेशविषया न भक्तिरित्युक्तम् ॥ ३ ॥

[4]तदेव स्पष्टयितुं चित्तचेष्टितमाचष्टे—चित्तेति । [5]जतुनो हि दहनात्मकतापकयोगमन्तरेण काठिन्यशान्तिर्न भवति, सौरालोकादियोगे तु शिथिलीभावमात्रं न द्रुतिरिति सर्वसिद्धम् । एवं चित्तस्यापि वक्ष्यमाणकामादिविषयात्मकतापकसँय्योगं विना न द्रवीभावो, विषयमात्रसँय्योगे तु शिथिलीभावमात्रमिति तापकपदोपादानेन सूचितम् ॥ ४ ॥

टिप्पणी

१ द्रुतस्य, धारावाहिकताङ्गता, सर्वेश इत्येतेषां त्रयाणां मूलगतभागानां क्रमेण प्रयोजनमाह—तेनेति । भक्तेरुक्तमनोवृत्तिरूपत्वेनेत्यर्थः । २ सा=वृत्तिः । ३ न सर्वेशविषयेति विग्रहः । सेति विशेष्यपदमनुषज्यते । ४ तदेव=चित्तद्रुतिघटितं भक्तिलक्षणमेव । ५ तापकदहनसम्पर्के द्रवीभावस्ये,षत्तापकसौरालोकादिसंसर्गे शिथिलीभावमात्रस्य च जतुनि चित्तदृष्टान्ततया मूलगदिते सर्वसिद्धत्वात्तापकैर्विषयै-

[१] कामक्रोधभयस्नेहहर्षशोकदयादयः ।
तापकाश्चित्तजतुन,स्तच्छान्तौ कठिनन्तु तत् ॥ ५ ॥
द्रुते चित्ते विनिक्षिप्तस्स्वाकारो यस्तु वस्तुना ।
संस्कार-वासना-भाव-भावनाशब्दभागसौ ॥ ६ ॥
शिथिलीभावमात्रन्तु मनो गच्छत्यतापकैः ।
न तत्र वस्तु विशति वासनात्वेन किञ्चन ॥ ७ ॥

टीका

तानेव तापकानाह—कामेति । एषां प्रत्येकं लक्षणं भेदांश्च वक्ष्यति । [२] यद्विषये कामादीनामुद्रेकस्तद्विषये चित्तस्य द्रवीभावः । पुनर्विषयान्तरसञ्चारादिना कामादितिरोभावे काठिन्य[३]मेवेत्यर्थः ॥ ५ ॥

[४] द्रवीभावप्रयोजनमाह—द्रुत इति । [५] न तु विनश्यता ज्ञानेन जनितस्तार्किकादिपरिकल्पित आत्मगुण इत्यर्थः ॥ ६ ॥

नञीषदर्थे । अतापकैरीषत्तापकैस्सौरालोकादिस्थानीयै-

टिप्पणी

योग इति मूले तापकपदप्रयोगेण सूचितत्वमर्थविशेषस्य "द्रुते चित्ते विनिक्षिप्त" इत्यादिनाऽनुपदं दर्शयिष्यमाणयोर्वासनातदाभासयोरनुकूलस्याह—जतुनो हीत्यादि । १ कामक्रोधेत्यादि । अत्र चित्तस्य जतुत्वारोपात् कामादेर्दहनत्वारोपो गम्यः । तथा च, यथा दहनो जतुनस्तापकस्तद्वत् कामादयश्चित्तस्य तापका इति दृष्टान्तदार्ष्टान्तिकभावलाभः । २ सोद्रेका एव कामादयश्चित्तन्द्रावयन्ति नानुद्रेका अपि, कामाद्युद्रेकोऽपि स्वसमानविषयकमेव चित्तस्य द्रवीभावं जनयतीत्यर्थं दर्शयन् कारिकां विवृणोति—यद्विषय इत्यादि । ३ एवकारेण मूलस्थतुशब्दो विवृतः । ४ द्रवीभावस्य प्रयोजनं वासनोपपत्तिरूपम् । ५ वासना-

द्रवतायाम्प्रविष्टं सद्यत् काठिन्यदशाङ्गतम् ।
[1]चेतः, पुनर्द्रुतौ सत्यामपि तन्नैव मुञ्चति ॥ ८ ॥

**टीका**

विषयैर्योगे सति मनः [2]किञ्चिदवयवविशरणमात्रं प्राप्नोति। अतश्शिथिलीभूते जतुनीव तादृशे मनसि न किञ्चिद्वस्तु वासनात्वेन विशति, [3]किन्तु वासनावैलक्षण्येन तदाभासत्वेनैव विशतीत्यर्थः ॥ ७ ॥

चित्तद्रुतौ भवति वासना, शिथिलीभावे तु वासनाभास

**टिप्पणी**

यास्तार्किकादिपरिकल्पितरूपत्वे तदुपपत्तेर्द्रवीभावप्रयोजनत्वायोगात्तन्मतनिरासकमसावित्यस्य मूलगतस्य सावधारणत्वाद्विवक्षितमर्थमाह—नत्विति। तथा च, विनश्यता ज्ञानेन जनितस्संस्तार्किकादिपरिकल्पित आत्मगुणस्तु न संस्कारवासनादिपदाना*मास्पदमिति "गुण" इत्यन्तस्यार्थः। १ चेत इति देहळीदीपन्यायेन प्रवेशे कर्मतया मोचने कर्तृतया चान्वेति। २ किञ्चित् यत् अवयवानां विशरणम्=विश्लेषः=विभागः, तन्मात्रम्। ईषद्द्रवीभावमात्रमिति यावत्। वक्ष्यति चैकत्रिंशकारिकास्थल "ईषद्द्रवत्वं शैथिल्य"मिति। ३ निषेधस्य प्रसक्तिपुर्वकत्वनियमान्मूलसूचितमर्थं विशदयति—किन्त्विति। ×यत्किञ्चिदविनाश्यस्संस्कार एव स्थिरस्सन् स्थायिभाव इत्युच्यते, विनाश्यस्तु वासनाभास इति विवेकः। अपकृष्टो हेतुर्हेत्वाभास इव विनाशित्वेनापकृष्टा वासनैव वासनाभासपदेन व्यपदिश्यत इति बोध्यम्। इत्थञ्चेह वासनावैलक्षण्येनेत्यस्य स्थायिवासनावैलक्षण्येनेत्यर्थः पर्यवसन्नः।

---

* आस्पदम्=प्रतिपादयितुमर्हः। × यत्किञ्चिदविनाश्य इति। व्यवहारदशायाङ्केनचिदप्यविनाश्य इत्यर्थः। ब्रह्मप्रमातिरिक्तानाश्य इति यावत्। कालरोगादिना पुनरभिभव एव स्थायिनो भवेन्न तु नाशः।

## टीका

इत्यत्र विनिगमकमाह—द्रवतायामिति। [1]द्रवावस्थाप्रविष्टहिङ्गुलादिरङ्गस्य जतुनः पुनः [2]काठिन्यापनयनेन काष्ठादिसँय्योगे जायमाने यथा स एव रङ्गः [3]प्रतिभासते, [4]शैथिल्यावस्थाप्रविष्टस्तु रङ्गो न तथा। एवं [5]द्रवावस्थे चेतसि यद्वस्तुस्वरूपं प्रविष्टं सत् काठिन्यदशापर्यन्तं स्थितं, तत् पुनर्[6]द्रवीभावान्तरेण विषयान्तरे गृह्यमाणेऽपि [7]प्रकाशमानत्वाच्चेतसा न त्यज्यते। अतस्सा[8] वासनेत्युच्यते। [9]शैथिल्यावस्थाप्रविष्टन्तु काठिन्या-

### टिप्पणी

१ द्रवस्यावस्था द्रवावस्था। द्रुतिरूपावस्थेत्यर्थः। द्रवावस्थायां प्रविष्टो द्रवावस्थाप्रविष्टः। हिङ्गुलो नाम "चायिल्यम्" इति केरळभाषयाऽभिधीयमनो वर्णकद्रव्यविशेषः। हिङ्गुल आदिर्येषान्ते हिङ्गुलादयः। रङ्गः=चायम् इति तद्भाषया भाष्यमाणो रागः। हिङ्गुलादीनां रङ्गो हिङ्गुलादिरङ्गः। द्रवावस्थाप्रविष्टो हिङ्गुलादिरङ्गो यस्मिंस्तत्तथा। तस्य। यस्मिन्द्रवावस्थावच्छेदेन रङ्गः प्रविष्टः ततः परमग्निसँय्योगनाशात् काठिन्यावस्थां गतस्य तस्येत्यर्थः। २ काठिन्येत्यादि। काठिन्यावस्थापनयनपूर्वकं द्रवावस्थान्तरावच्छेदेन काष्ठादिसँय्योगे जायमाने सतीत्यर्थः। ३ प्रतिभासते=स्फुरति। काष्ठादावित्यादिः। तथा च स रङ्गो जतुनि स्थिरतया तिष्ठतीति भावः। ४ शैथिल्यावस्थावच्छेदेन जतुनि प्रविष्टस्त्वित्यर्थः। न तथेति। काष्ठादौ न प्रतिभासत इत्यर्थः। पुनरित्यादि जायमान इत्यन्तमनुषज्यते। ५ द्रवस्यावस्था यस्य तस्मिन्नित्यर्थः। यद्वा द्रवपदं भावप्रधानमिति द्रवो द्रवत्वमेवावस्था यस्य तस्मिन्निति। ६ द्रवीभावान्तरेणेति करणे तृतीया, चेतस एव कर्तृत्वात्। ७ प्रकाशमानत्वादिति ज्ञापकहेतौ पञ्चमी। ८ सा=तादृशं वस्तुस्वरूपम्। स्त्रीलिङ्गप्रयोगस्तु विधेयपदानुसारी। इत्थमग्रे स इति पुंस्त्वमपि तथैव। ९ शैथिल्यावस्थाप्रविष्टन्त्विति। चेतसीति वस्तुस्वरूपमिति चानुषज्यते।

टीका

[1] तस्य ब्रह्मविदो द्रवावस्थाया अनपेक्षितत्वेनोत्तममध्यमप्राकृतभक्तेष्वगणनीयत्वात्। अत्र तु द्रवावस्थापरिपुष्टौ "सर्वभूतेषु यः पश्ये"दित्यवस्थायां भागवतोत्तम उक्तः। ईषद्द्रवावस्थायान्तु वासनाभासेन—

ईश्वरे तदधीनेषु बालिशेषु द्विषत्सु च।
प्रेममैत्रीकृपोपेक्षा यः करोति स मध्यमः॥
(श्री० भा० ११। २। ४६)

इत्युक्तः, एतादृगवस्थावतोऽग्रे द्रवावस्थाया उत्पत्स्यमानत्वादित्यर्थः। यस्य तु चित्ते न द्रवावस्था पुष्टा, नापीषदुत्पन्ना, किन्तु स्वयं [2] तदर्थं भागवतधर्माञ्छ्रद्धयाऽनुतिष्ठति, स [3] काठिन्यावस्थाविनाशसामग्र्यविशिष्टः—

[4] अर्चायामेव हरये पूजां यः श्रद्धयेहते।
न तद्भक्तेषु चान्येषु स भक्तः प्राकृतस्स्मृतः॥
(श्री० भा० ११। २। ४७)

टिपण्णी

भागवतोत्तमः। १ भागवतोत्तमस्योक्तलक्षणस्य ब्रह्मविद्रूपत्वाभावमुपपादयन्नाह-तस्येत्यादि। ब्रह्मविद इति तस्येत्यस्य विवरणम्। द्रवावस्थापरिपुष्टावित्यादि। वर्तमानः पुरुष इति शेषः। द्रवावस्थापरिपुष्टौ सत्यां या सर्वभूतेषु यः पश्येदित्यवस्था, तस्यां वर्तमानः पुरुषो भागवतोत्तम उक्त इत्यन्वयः। ईषदित्यादि। ईषद्द्रवावस्थायां सत्यान्तु वासनाभासेन सह वर्तमानस्स मध्यम इत्युक्त इति सम्बन्धः। मध्यम इत्यस्य भागवतानां मध्ये मध्यम इत्यर्थः। उत्तरश्लोकाद्वा भक्त इत्याकर्षः। इत्यर्थं इति। इति भाव इत्यर्थः। २ तदर्थम्=द्रवावस्थालाभार्थम्। ३ काठिन्येत्यादि। कारणपदं विहाय सामग्रीपदोपादानात् सोऽपि क्रमेणोत्तमो भविष्यतीति ध्वनितम्। ४ अर्चायाम्=प्रतिमायाम्। अर्चा

## टीका

इत्युक्तः । प्रकृतिरारम्भस्तस्यां वर्तमानः प्राकृतः । [1] साम्प्रतं प्रारब्धभक्तिसाधनानुष्ठान इत्यर्थः । [2] इयमेव च द्रवावस्था [3] प्रणयानुरागस्नेहादिशब्दैरपि सङ्कीर्त्यते । यथा—

### टिप्पणी

पूजाप्रतिमयोरिति मेदिनी। पूजामिति पूजापदेन न केवलं जलगन्धादिसमर्पणमेवोच्यते, किन्तु प्रदक्षिणनमस्कारस्तवनादिकमपि। गौरवितनिष्ठप्रीतिजनकव्यापारो हि पूजा नाम। १ प्राकृतपदं व्याख्याय प्राकृतो भक्त इत्यस्यार्थमाह—साम्प्रतम्प्रारब्धेति। सुप्सुपेति समासः। वस्तुतः पुनरेकदेशान्वयस्य क्वचिददोषत्वात् साम्प्रतमिति पृथक् पदम्। २ ननु द्रवावस्थाया भक्तापेक्षितत्वे कुत इयं शास्त्रे नोद्घुष्यत इत्यत आहेयमेव चेति। ३ प्रणयेत्यादि।

"श्रुतमप्यौपनिषदन्दूरे, हरिकथामृतात्।
यत्र सन्ति द्रवच्चित्तप्रेमाश्रुपुळकोद्गमाः॥"
"कथं विना रोमहर्षन्द्रवता चेतसा विना।
विनाऽऽनन्दाश्रुकलया शुध्येद्भक्त्या विनाऽऽशयः॥"
× "एवंव्रतस्स्वप्रियनामकीर्त्या
जातानुरागो द्रुतचित्त उच्चैः।
हसत्यथो रोदिति रौति गाय-
त्युन्मत्तवन्नृत्यति लोकबाह्यः॥"

इति प्रथमादिस्कन्धोक्तिष्वतिस्फुटतयेयं सङ्कीर्त्यत इत्यवगन्तव्यम्।

---

× एकादशस्कन्धद्वितीयाध्यायचत्वारिंशश्लोकेऽस्मिन्नुन्मत्तवदित्येव पाठो भावार्थदीपिकायामनुवादश्च तालपत्रपुस्तकेषु केरळगतेषु, न तु लाक्षणिक"उन्मादव"दिति। तत्पुस्तकीयमेव पाठमवष्टभ्य नारायणीयस्तोत्र एकनवतितमदशकपञ्चमपद्य "उन्मादीवे"ति पठितम्। उन्मादाख्यो ग्रहभेदस्तु नैव दृष्टान्ततयोपादेयः। विलोक्यते च विवरणं"ग्रहगृहीतव"—दिति, न तु ग्रहभेदवदिति।

टीका

विसृजति हृदयन्न यस्य साक्षा-
द्धरिरवशाभिहितोऽप्यघौघनाशः ।
प्रणयरशनया धृताङ्घ्रिपद्म-
स्स भवति भागवतप्रधान उक्तः ॥

(श्री० भा० ११ । २ । ५५)

प्रणयो द्रवावस्था स एव रशना रज्जुवद्बन्धनसाधनम्, तस्यान्द्रवावस्थायां प्रविष्टस्य पुनर्निर्गमनाभावादित्यर्थः । द्रवावस्थाप्रविष्टभगवत्स्वरूपभानस्य त्रिविधत्वादुत्तमभागवतोऽपि त्रिविधः । [1]तत्राद्यं [2]प्रपञ्चसत्यत्वभानसहितं यथा—

खं वायुमग्निं सलिलं महीञ्च
ज्योतींषि सत्त्वानि दिशो द्रुमादीन् ।
सरित्समुद्रांश्च हरेश्शरीरं
यत्किञ्च भूतं प्रणमेदनन्यः ॥

(श्री० भा० ११ । २ । ४१)

[3]इत्यादि । अनेन प्राकृतो भागवतोत्तमः[4] । द्वितीयं प्रपञ्चमिथ्यात्वभानसहितं यथा—

तस्मादिदञ्जगदशेषमसत्स्वरूपं
स्वप्नाभमस्तधिषणं पुरुदुःखदुःखम् ।
त्वय्येव नित्यसुखबोधतनावनन्ते
मायात उद्य-दपियत् सदिवावभाति ॥

(श्री० भा० १० । १४ । २२)

टिप्पणी

१ तत्र=त्रिविधस्य द्रवावस्थाप्रविष्टभगवत्स्वरूपभानस्य मध्ये । २ प्रपञ्चसत्यत्वभानेति । सत्यत्वेन प्रपञ्चभानेत्यर्थः । एवमग्रेऽपि । ३ इत्यादीति । इत्यादिनाप्रदर्शितमित्यर्थः । ४ दर्शित इति शेषः ।

स्थायिभावगिरा[1]ऽतोऽसौ वस्त्वाकारोऽभिधीयते।
व्यक्तश्च रसतामेति परानन्दतया पुनः ॥ ६ ॥

टीका

अनेन मध्यमो भागवतोत्तमः। तृतीयं [2]प्रकारद्वयेनापि प्रपञ्चभानरहितं यथा—

ध्यायतश्चरणाम्भोजं भावनिर्जितचेतसा।
औत्कण्ठ्याश्रुकलाक्षस्य हृद्यासीन्मे शनैर्हरिः ॥
प्रेमातिभरनिर्भिन्नपुळकाङ्गोऽतिनिर्वृतः।
आनन्दसम्प्लवे लीनो नापश्यमुभयम्मुने ॥
(श्री० भा० १ । ६ । १७—१८)

अनेनोत्तमो भागवतोत्तमः। निरन्तरसाधनाभ्यासपरिपाकेणोत्तमभूमिलाभः ॥ ८ ॥

[3]द्रवावस्थाप्रविष्टविषयाकारस्यानपायित्वे स्थायिशब्दोऽपि तत्र मुख्य एव न पारिभाषिक इत्याह—स्थायीति। [4]विभावानुभावव्यभिचारिसँय्योगेनाभिव्यक्तस्थायिभाव एव [5]सभ्याभिनेययोर्भेदतिरोधानेन सभ्यगत एव सन् परमानन्द-

टिप्पणी

१ अतः = पूर्वकारिकाकथितान्मोचनाभावात्। २ प्रकारद्वयेनापीति। न केवलं सत्यत्वेनैव, किन्तु मिथ्यात्वेनापीत्यर्थः। ३ रसशास्त्रप्रसिद्धस्य स्थायिशब्दस्य मुख्यार्थपरत्वोपपत्तिरपि द्रवीभावप्रयोजनमित्येतत्प्रदर्शकतया मूलमवतारयति—द्रवावस्थाप्रविष्टेति। अपिना संस्कारवासनादिशब्दसमुच्चयः। ४ व्यक्त इत्यादिमूलं व्यञ्जककथनपूर्वकं व्याचष्टे—विभावेत्यादि। ५ सभ्याभिनेययोरिति। नाट्यशास्त्ररीत्यैवमुक्तम्। इह सभ्यपदं काव्यश्रोतुरप्यभिनेयपदं काव्यवर्ण्यस्याप्युपलक्षणम्।

[1]भगवान् परमानन्दस्वरूपस्स्वयमेव हि ।
मनो गतस्तदाकारो रसतामेति पुष्कलम् ॥१०॥

टीका

साक्षात्काररूपेण रसतामाप्नोतीति रसविदां[2] मर्यादा। तदुक्तमाचार्यभरतेन—विभावानुभावव्यभिचारिसँय्येगाद्रसनिष्पत्तिरिति । [3]अतो भक्तेरपि रसतां वक्तुं स्थायिभावो निरूप्यत इति भावः ॥ ९ ॥

स्थायिभावस्य रसत्वोपपत्तये परमानन्दरूपतामुपपादयति—भगवानिति । बिम्बमेव ह्युपाधिनिष्ठत्वेन प्रतीयमानं प्रतिबिम्बमित्युच्यते । परमानन्दश्च भगवान् मनसि प्रतिबिम्बितस्थायिभावतामासाद्य रसतामासादयतीति भक्तिरसस्य परमानन्दरूपत्वन्निर्विवादम् । नाप्यालम्बनविभावस्थायिभावयोरैक्यम्, बिम्बप्रतिबिम्बभावेन भेदस्य व्यवहारसिद्धत्वादीशजीवयोरिव ॥ १० ॥

टिप्पणी

१ भगवच्छब्दार्थोऽनन्तरोल्लासदशमकारिकाव्याख्यायामाख्यास्यते ।
२ मर्यादेति । व्यवस्थात्मको निरूढलक्षणाबीजभूतानादितात्पर्यरूपसङ्केत इत्यर्थः । न तु स्थायिभावे मुख्या रसपदस्य वृत्तिः, रसो वै स इत्यादिश्रुतिविरोधात् । विशदीभविष्यति चेदमन्तिमोल्लासे रसनिरूपके ।
३ भगवानित्याद्याभिरेकोनविंशत्या कारिकाभिस्स्थायिभावनिरूपणे सङ्गतिन्दर्शयन् भावमाहात इति । उक्तरीत्या स्थायिभावेनैव रसत्वस्य प्राप्तेरित्यर्थः ।

[1] कान्तादिविषयेऽप्यस्ति कारणं सुखचिद्घनम् ।
कार्याकारतया भानेऽप्यावृतम्मायया स्वतः॥११॥

टीका

नन्वेवं भगवदाकारस्य परमानन्दरूपस्य स्थायिभावत्वेन भक्तिरसस्य परमानन्दरूपत्वमस्तु । कान्तादिविषयाणां शृङ्गारादिरसाना[2]मतथात्वात् कथम्परमानन्दरूपतेत्यत आह—कान्तादीति । आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते । आनन्देन जातानि जीवन्ति । आनन्दम्प्रयन्त्यभिसंविशन्तीत्यादिश्रुत्या हि परमानन्दरूपम्ब्रह्म जगदुपादानमिति प्रतिपादितम् । जन्माद्यस्य यत इति न्यायेन तथैव निर्णीतम् । उपादानाभिन्नञ्च सर्वङ्कार्यं मृदभिन्नघटवत् सर्वत्र दृष्टम् । "सर्वङ्खल्विदम्ब्रह्म" "इदं सर्वय्यँदयमात्मा" "सदेव सोम्येदमग्र आसी"दित्यादिच्छान्दोग्यादिश्रुतिभिश्च तथैव प्रतिपादितम् । तदनन्यत्वमारम्भणशब्दादिभ्य इति न्यायेन च निर्णीतम् ।

टिप्पणी

१ मायया हेतुभूतया कार्याकारतया = कार्यभूतेनाकारेण भाने सत्यपि स्वतः = स्वेन रूपेणाऽऽवृतं सुखचिद्घनम् = घनीभूतस्वप्रकाशानन्दरूपं कारणम् = उपादानकारणं कान्तादिविषये = कान्तादिरूपविषयेष्वप्यस्ति = अभेदेन विद्यते । ननु तर्हि तत् कुतो न भाति ? न च कार्यभूतकान्तादिरूपेण भात्येव तदिति वाच्यम्, घटशरावादिकारणीभूतमृद इव कार्यरूपेण भाने स्वरूपेणापि भानावश्यकत्वादित्याशङ्कायां, ब्रह्म तु जगतो विवर्तोपादानमेव, दृष्टं हि विवर्तोपादानस्य कार्यरूपेण भानं स्वरूपेणाभानञ्च रज्जुसर्पस्थल इत्यभिप्रायेणोत्तरार्धम्प्रवृत्तम् । अत एव टीकायामावरणविक्षेपप्रदर्शकतया तदवतारणम् । २ अतथात्वादिति । भक्तिरसवत् परमानन्दरूपस्थायिकत्वाभावादित्यर्थः ।

[1]सदज्ञातश्च तद्ब्रह्म मेयङ्कान्तादिमानतः ।
मायावृतितिरोभावे वृत्त्या सत्त्वस्थया क्षणम् ॥१२॥

टीका

एवं सत्यप्यखण्डानन्दाद्वयाकारेण [2]तदभाने हेतू मायानिमित्तावावरणविक्षेपावित्याह—कार्येति । अकार्यस्यापि कार्याकारेण भानं विक्षेपः । अखण्डानन्दाकारेण [3]स्वतोऽ[4]भानमावरणम् । तदुक्तम्—

ऋतेऽर्थं यत् प्रतीयेत न प्रतीयेत चात्मनि ।
तद्विद्यादात्मनो मायां यथाऽऽभासो यथा तमः ॥ इति ॥११॥
(श्री० भा० २ । ९ । ३३)

[5]कथन्तर्हि तस्य भानमित्यत आह—सदिति । अज्ञातज्ञापकत्वेनैव हि सर्वेषाम्मानानाम्मानता, अन्यथा स्मृतेरपि [6]मानतापत्तेः । अज्ञातश्च [7]स्वप्रकाशतया भासमानचैतन्यमेव न जडम्, तस्य भानाप्रसक्त्या तत्रावरणकृत्याभावात् । [8]अतः

टिप्पणी

१ सत् = अबाधितम् । अज्ञातश्चेति । अत एवानधिगताबाधितेत्युक्तं वेदन्तपरिभाषायां प्रमालक्षणे । २ तदभान इति । तस्य परमानन्दरूपब्रह्मणो यद्भानं तदभावे । ३ स्वत इत्यस्यैव मूलाद्धृतस्य विवरणमखण्डानन्दाकारेणेति । ४ अभानम् = तिरोभावः । विरोधार्थे नञ् । ५ कथमिति । तस्य भानं लौकिकरसस्यापि परमानन्दरूपत्वोपपत्त्यर्थमावश्यकमिति भावः । ६ मानतापत्तेः = मितितापत्तेः । यद्वा स्मृतिपदं स्मृतिकरणपरम् । ७ प्रकाशते भासत इति प्रकाशम् । स्वेन प्रकाशं स्वप्रकाशम्, तत्तया । भासकान्तरमनपेक्ष्येति यावत् । ८ अतः = जडस्याज्ञातत्वाभावात् ।

[1]कान्तादिविषयेऽप्यस्ति कारणं सुखचिद्घनम् ।
कार्याकारतया भानेऽप्यावृतम्मायया स्वतः॥११॥

टीका

नन्वेवं भगवदाकारस्य परमानन्दरूपस्य स्थायिभावत्वेन भक्तिरसस्य परमानन्दरूपत्वमस्तु । कान्तादिविषयाणां शृङ्गारादिरसाना[2]मतथात्वात् कथम्परमानन्दरूपतेत्यत आह— कान्तादीति । आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते । आनन्देन जातानि जीवन्ति । आनन्दम्प्रयन्त्यभिसंविशन्तीत्यादिश्रुत्या हि परमानन्दरूपम्ब्रह्म जगदुपादानमिति प्रतिपादितम् । जन्माद्यस्य यत इति न्यायेन तथैव निर्णीतम् । उपादानाभिन्नञ्च सर्वङ्कार्यं मृदभिन्नघटवत् सर्वत्र दृष्टम् । "सर्वङ्खल्विदम्ब्रह्म" "इदं सर्वंय्यँदयमात्मा" "सदेव सोम्येदमग्र आसी"दित्यादिच्छान्दोग्यादिश्रुतिभिश्च तथैव प्रतिपादितम् । तदनन्यत्वमारम्भणशब्दादिभ्य इति न्यायेन च निर्णीतम् ।

टिप्पणी

१ मायया हेतुभूतया कार्याकारतया = कार्यभूतेनाकारेण भाने सत्यपि स्वतः = स्वेन रूपेणाऽऽवृतं सुखचिद्घनम् = घनीभूतस्वप्रकाशानन्दरूपं कारणम् = उपादानकारणं कान्तादिविषये = कान्तादिरूपविषयेष्वप्यस्ति = अभेदेन विद्यते । ननु तर्हि तत् कुतो न भाति ? न च कार्यभूतकान्तादिरूपेण भात्येव तदिति वाच्यम्, घटशरावादिकारणीभूतमृद इव कार्यरूपेण भाने स्वरूपेणापि भानावश्यकत्वादित्याशङ्कायां, ब्रह्म तु जगतो विवर्तोपादानमेव, दृष्टं हि विवर्तोपादानस्य कार्यरूपेण भानं स्वरूपेणाभानञ्च रज्जुसर्पस्थल इत्यभिप्रायेणोत्तरार्धम्प्रवृत्तम् । अत एव शक्तिद्वयामावरणविक्षेपप्रदर्शकतया तदवतारणम् । २ अतथात्वादिति । भक्तिरसवत् परमानन्दरूपस्थायिकत्वाभावादित्यर्थः ।

[1]सदज्ञातश्च तद्ब्रह्म मेयङ्कान्तादिमानतः ।
मायावृतितिरोभावे वृत्त्या सत्त्वस्थया क्षणम् ॥१२॥

टीका

एवं सत्यप्यखण्डानन्दाद्वयाकारेण [2]तदभाने हेतू मायानिमित्तावावरणविक्षेपावित्याह—कार्येति । अकार्यस्यापि कार्याकारेण भानं विक्षेपः । अखण्डानन्दाकारेण [3]स्वतोऽ[4]भानमावरणम् । तदुक्तम्—

ऋतेऽर्थं यत् प्रतीयेत न प्रतीयेत चात्मनि ।
तद्विद्यादात्मनो मायां यथाऽऽभासो यथा तमः ॥ इति ॥११॥
(श्री० भा० २ । ९ । ३३)

[5]कथन्तर्हि तस्य भानमित्यत आह—सदिति । अज्ञातज्ञापकत्वेनैव हि सर्वेषाम्मानानाम्मानता, अन्यथा स्मृतेरपि [6]मानतापत्तेः । अज्ञातश्च [7]स्वप्रकाशतया भासमानचैतन्यमेव न जडम्, तस्य भानाप्रसक्त्या तत्रावरणकृत्याभावात् । [8]अतः

टिप्पणी

१ सत्=अबाधितम् । अज्ञातश्चेति । अत एवानधिगताबाधितेत्युक्तं वेदन्तपरिभाषायां प्रमालक्षणे । २ तदभान इति । तस्य परमानन्दरूपब्रह्मणो यद्भानं तदभावे । ३ स्वत इत्यस्यैव मूलाद्धृतस्य विवरणमखण्डानन्दाकारेणेति । ४ अभानम्=तिरोभावः । विरोधार्थे नञ् । ५ कथमिति । तस्य भानं लौकिकरसस्यापि परमानन्दरूपत्वोपपत्त्यर्थमावश्यकमिति भावः । ६ मानतापत्तेः=मितितापत्तेः । यद्वा स्मृतिपदं स्मृतिकरणपरम् । ७ प्रकाशते भासत इति प्रकाशम् । स्वेन प्रकाशं स्वप्रकाशम्, तत्तया । भासकान्तरमनपेक्ष्येति यावत् । ८ अतः=जडस्याज्ञातत्वाभावात् ।

[1]अतस्तदेव भावत्वम्मनसि प्रतिपद्यते ।
किञ्च [2]न्यूनाञ्च रसताँय्याति जाड्यविमिश्रणात् ॥१३॥

टीका

कान्तादिगोचरमानानामज्ञातज्ञापकत्वेन प्रामाण्याय तत्तदवच्छिन्नचैतन्यमेव विषयो वाच्यः, अन्यथा [3]तदयोगात्। [4]तथा च सात्त्विक्या प्रमाणजनितापरोक्षवृत्त्याऽऽवरणतिरोभावे सति तत्तद्विषयावच्छिन्नत्वेन भासते वस्तुतःपरमानन्दरूपं विषयोपादानचैतन्यम्। [5]अनवच्छिन्नस्वरूपाभानाच्च न सद्योमुक्तिस्स्वप्रकाशत्वभङ्गो वा ॥ १२ ॥

ततः किमत आह—अत इति। विषयावच्छिन्नचैतन्यमेव द्रवावस्थमनोवृत्त्यारूढतया भावत्वम्प्राप्य रसताम्प्राप्नोतीति न लौकिकरसस्यापि परमानन्दरूपत्वानुपपत्तिः। अत एवानवच्छिन्नचिदानन्दघनस्य भगवतस्स्फुरणाद्भक्तिरसेऽत्यन्ताधिक्यमानन्दस्य। लौकिकरसे तु विषयावच्छिन्नस्यैव चिदानन्दांशस्य स्फुरणात्तत्रानन्दस्य [6]न्यूनतैव। तस्माद्भक्तिरस एव लौकिकरसानुपेक्ष्य सेव्य इत्यर्थः ॥ १३ ॥

टिप्पणी

१ अतः=कान्ताद्यवच्छिन्नचैतन्यस्यैव कान्तादिमानेन मेयत्वात्। २ न्यूनाम्=नितरामूनाम्। जाड्यस्य विशेषतो मिश्रणं हि कारणत्वेनोच्यते। अत एव टीकायां "भक्तिरसेऽत्यन्ताधिक्यमानन्दस्ये"ति। ३ तदयोगात्=प्रामाण्यायोगात्। कान्तादिगोचरमानानामित्यनुषङ्गः। ४ तथा च=तत्तदवच्छिन्नचैतन्यस्यैव कान्तादिगोचरमानविषयताया वाच्यत्वे च। ५ ननु कान्तादिमानेन भाने चैतन्यस्य स्वप्रकाशत्वभङ्गप्रसङ्गः, कान्तादिमातुस्सद्योमुक्त्यापत्तिश्चेत्यत आहानवच्छिन्नेति। स्वप्रकाशेति। प्रकाशकान्तरमनपेक्ष्य प्रकाशमानेत्यर्थः। ६ न्यूनतैव=उत्कर्षात्स्वल्पतैव।

इति वेदान्तसिद्धान्ते स्थायिनो रसतोदिता।
[1]साङ्ख्यसिद्धान्तमाश्रित्याप्यधुना प्रतिपाद्यते ॥ १४ ॥
तमोरजस्सत्त्वगुणा मोहदुःखसुखात्मकाः।
[2]तन्मयी प्रकृतिर्हेतु,स्सर्वङ्कार्यञ्च तन्मयम् ॥ १५ ॥

टीका

प्रतिपाद्यत इति। स्थायिनो रसतेत्यनुषङ्गः ॥ १४ ॥

[3]एतावदेवोपपादयितुं साङ्ख्यसिद्धान्तं व्युत्पादयति— तमोरजस्सत्त्वेति। तथा हि—साङ्ख्या एवमाचक्षते— [4]सर्वं

टिप्पणी

१ सङ्ख्यायन्ते तत्त्वान्यस्मिन्निति साङ्ख्यं शास्त्रम्। सम्यक्=विविच्य ख्यायन्ते=प्रकटीक्रियन्ते तत्त्वानि=प्रकृतिपुरुषमहदहङ्कारप्रभृतयः पदार्था अस्मिञ्छास्त्र इति विग्रहवाक्यविवरणम्। तस्य शास्त्रस्य सिद्धान्तः= इदमित्थमिति निश्चितोऽर्थनिकरः तम्। अनन्तरकारिकाविवरणे "साङ्ख्या" इत्यस्य साङ्ख्यशास्त्रविद इत्यर्थः। २ तन्मयी=तमोरजस्सत्त्वगुणरूपा प्रकृतिः=प्रधानं हेतुः=सर्वस्यापि कार्यस्योपादानकारणम्। प्रधानं प्रकृतिस्त्रियामित्यमरः। सर्वङ्कार्यञ्च तन्मयम्=प्रकृतिरूपम्। चकारः कार्याणामेव परस्परं समुच्चायकः। स्वरूपार्थे मयटौ। यद्यपि तन्मयमित्यत्र मयड्विकारार्थे सम्भवति तथापि वैरूप्यभयात्, कार्यपदेनैव विकारत्वसिद्धेः, कार्याणां सुखदुःखमोहात्मकत्वे कारणस्यापि तदात्मकत्वमावश्यकमिति दर्शयितुमभेदसमर्पणस्यावश्यकत्वेऽपि विकारत्वनिवेदनस्य वैयर्थ्याच्च न तदादरः। ३ ननु साङ्ख्यशास्त्ररीत्या स्थायिनो रसताप्रतिपादनं प्रतिज्ञाय तदुज्झित्वा तमोरज इत्यादिमूलेन साङ्ख्यमतप्रतिपादनमसङ्गतमित्याशङ्कांनिराकुर्वंस्तन्मूलमवतारयत्येतावदेवेति। ४ मूलोक्तं सर्वेषाङ्कार्याणां सुखदुःखमोहात्मकसत्त्वरजस्तमोगुणात्मक-

टीका

भावास्सुखदुःखमोहात्मकैकसामान्यप्रकृतिकाः, सुखदुःखमोहात्मकत्वेन प्रतीयमानत्वात्। ये यदात्मकत्वेन प्रतीयन्ते, ते तदात्मकसामान्यप्रकृतिकाः। यथा मृदात्मकतया प्रतीयमाना मृत्सामान्यप्रकृतिका घटशरावादयः।[1] अनुगतकारणातिरिक्तसामान्यानभ्युपगमान्न घटत्वादिना व्यभिचारः। सुखदुःखमोहात्मकत्वेन चैते प्रतीयन्ते। तस्मात्तत्सामान्यप्रकृतिका इत्यनुमानेन[2] सुखदुःखमोहात्मकप्रकृतिसिद्धिः। तत्र यत् सुखं तत् सत्त्वम्, यद्दुःखं तद्रजो, यो मोहो विषादस्स तम इति[3] तस्यास्त्रिगुणात्मकत्वसिद्धिः। न च परमाणुभिर्ब्रह्मणा वा[4] र्थान्तरता, परमाणुवादे कार्यकारणयोर्भेदाभ्युपगमेन तेषामतीन्द्रियत्वेन च तदात्मकतया कस्यापि कार्यस्य प्रतीय-

टिप्पणी

प्रधानोपादानकत्वं साधयितुमनुमानन्दर्शयति सर्वे भावा इत्यारभ्य तस्यास्त्रिगुणात्मकत्वसिद्धिरित्यन्तेन। सुखदुःखमोहात्मिका, एका, सामान्या = अनुगता प्रकृतिः = उपादानकारणं येषां ते तथोक्ताः। अत्रैकेति भागः परमाणूनपेक्ष्य लाघवन्ध्वनयितुम्। १ ननु घटत्वाद्यात्मकत्वेन प्रतीयमाने तदनुपादानके घटादौ व्यभिचार इत्यत आहानुगतेति। अनुगतकारणात् = कपालादितोऽतिरिक्तस्य सामान्यस्य = घटत्वादेरनभ्युपगमात्। उपनयनिगमने दर्शयति—सुखदुःखमोहात्मकत्वेनेत्यादि। २ सुखदुःखमोहात्मिकायाः प्रकृतेः = सर्वकार्योपादानकारणीभूतप्रधानस्य सिद्धिः। ३ तस्याः = सुखदुःखमोहात्मकप्रकृतेः त्रिगुणात्मकत्वसिद्धिः। अत्रैवमनुमानप्रयोगः—प्रकृतिस्सत्त्वरजस्तमोगुणात्मिका, सत्त्वरजस्तमोगुणभूतसुखदुःखमोहात्मकत्वात्। यत् यद्भूतवस्त्वात्मकं, तत् तदात्मकम्, यथा पृथिवीभूतमृदात्मको घटः पृथिव्यात्मक इति। ४ अन्यः = अभिमतादतिरिक्तः अर्थः अर्थान्तरम्,

त्रिगुणात्मकमेकैकँव्वस्तु त्र्याकारमीक्ष्यते ।
निजमानससङ्कल्पभेदेन पुरुषैस्त्रिभिः ॥ १६ ॥

टीका

मानत्वाभावात् परमाणुषु प्रमाणाभावाच्च । सर्गाद्यकालीनकार्योपादानानुमानस्य लाघवतर्कसहकारेणैकोपादानविषयकत्वात्, क्षित्यादिकर्त्रनुमानस्यैककर्तृविषयकत्ववत् । ब्रह्मवादिनां कार्यकारणयोरभेदाभ्युपगमेऽपि न जगतो ब्रह्मात्मना प्रतीयमानत्वं सम्भवति, ब्रह्मणस्सर्वलौकिकमानागोचरत्वाभ्युपगमात् । सद्रूपेण ब्रह्मापि सर्वप्रमाणगोचरः । तथा च तदात्मना कार्यस्य प्रतीयमानत्वमस्त्येवेति चेत् किमनेनाकाण्डताण्डवेन ? [1]ब्रह्मणो निस्सामान्यविशेषत्वेन नानारूपासम्भव इति [2]साङ्ख्यसङ्ख्यावतामभिमानः ॥ १५ ॥

ननु भवतामप्यसिद्धो हेतुः, सुखदुःखमोहानामान्तराणां बाह्यघटादितादात्म्यासम्भवात् । सम्भवे वा सर्वं वस्तु सर्वं प्रमातारं प्रति त्र्याकारतया [3]प्रथेतेत्यत आह—त्रिगुणेति । [4]न तावदान्तरबाह्ययोस्तादात्म्यासम्भवः, बाह्यानामेव मनः-

टिप्पणी

त्ता, साध्यस्येत्यादिः । १ ब्रह्मण इत्यादि । मृत्सुवर्णादिसञ्ज्ञकमेकं सामान्यं रूपं, घटशराव-कटककुण्डलादिनामकं विशेषरूपमनेकमिति हि समस्ति मृत्सुवर्णादेर्नानारूपम् । एवं मूलप्रकृतेरपि । ब्रह्मणस्तु जगदधिष्ठानस्य निस्सामान्यविशेषत्वात्तदसम्भव एवेत्यर्थः । अनुमानप्रविष्टतादात्म्येऽनाध्यासिकत्वं निविष्टमिति भावः । २ साङ्ख्यसङ्ख्यावताम् = साङ्ख्यशास्त्रज्ञानाम् । ज्ञः प्राज्ञस्सङ्ख्यावानित्यमरः । यद्वा साङ्ख्यशास्त्रविचारवतामिति तदर्थः । चर्चा सङ्ख्या विचारणेत्यमरः । ३ प्रथेत = प्रकाशेत । ४ सुखादितादात्म्येनेक्षणं प्रति मनस्सङ्कल्पभेदस्य हेतुत्वं वदता मूलेन सूचितं

[1]कामिन्यास्सुखता भर्त्रा, सपत्न्या दुःखरूपता ।
तदलाभाचथाऽन्येन मोहत्वमनुभूयते ॥ १७ ॥

## टीका

प्रतिबिम्बितत्वेनाऽऽन्तरत्वात् । नापि सर्वान् प्रति तुल्यभानप्रसङ्गः, तत्तद्वासनारूपसहकारिभेदात् ॥ १६ ॥

एतदेवोदाहरति--कामिन्या इति । [2]भर्तारं प्रति हि कामिन्यास्सत्त्वांश एवोद्रिच्यते । सपत्नीं प्रति तु रजोंश एव । ताङ्कामयमानमन्यञ्च तामविन्दन्तम्प्रति तमोंश एव । अतः क्रमेण तेषु सुखदुःखविषादाः प्रादुर्भवन्त्यतो व्यवस्थोपपत्तिः । वासनाभेदेनैकस्मिन्नपि भानभेदो भट्टाचार्यैरप्युक्तः—

परिव्राट्कामुकशुनामेकस्याम्प्रमदातनौ ।
[3]कुणपः कामिनी भक्ष्यमिति तिस्रो विकल्पनाः ॥ इति ॥ १७॥

## टिप्पणी

समाधानन्दर्शयति–न तावदिति । १ कामिन्या इत्यादि । तथा हीत्यादिः । २ भर्तारं प्रतीत्यादि । अत्र साङ्ख्यानां मतमित्थं भाति—यस्य पुरुषस्य यस्मिन् विषय इष्टलाभादिहेतुकसङ्कल्पजन्या वासना विद्यते, तेन स तादृशवासनातस्स × त्वांशोद्रेकद्वारा सुखत्वेनैवेक्ष्यते । यस्य तु मत्सरादिहेतुकसङ्कल्पजन्या, तेन रजोंशोद्रेकद्वारा दुःखत्वेनैव । यस्य पुनरिष्टालाभादिनिबन्धनसङ्कल्पजन्या, तेन तमोंशोद्रेकद्वारा मोहत्वेनैव । यस्य तु यस्मिन्नुक्तवासनानां मध्ये काचिदपि नास्ति, तेन स सुखत्वेन दुःखत्वेन मोहत्वेन वा नेक्ष्यते किन्तूदासीनतयैवेति । ३ कुणपश्शवः । शव इति यावत् ।

× सत्त्वांशोद्रेकेति । स्वं प्रतीत्यादिः । एवमग्रेऽपि ।

[1]एवं सति सुखाकारः प्रविष्टो मानसे यदा ।
तदा स स्थायिभावत्वम्प्रतिपद्य रसो भवेत् ॥१८॥
परमाण्वेकरूपन्तु चित्तन्न विषयाकृति ।
इत्यादि मतमन्येषामप्रामाण्यादुपेक्षितम् ॥ १९ ॥

टीका

फलितमाह—एवं सतीति । [2]क्रोधादिभावस्यापि रजस्तमोमिश्रितसत्त्वोद्रेकनिबन्धनचित्तद्रुतिफलितत्वात् सुखमयत्वमित्यभिप्रायः । द्रवीभावस्य सत्त्वधर्मत्वात्तं विना च स्थायिभावासम्भवात् सत्त्वगुणस्य च सुखमयत्वात् सर्वेषाम्भावानां सुखमयत्वेऽपि रजस्तमोंशमिश्रणात्तारतम्यमवगन्तव्यम् । अतो न सर्वेषु रसेषु तुल्यसुखानुभवः । उपरिष्टाच्च स्पष्टीकरिष्यते ॥ १८ ॥

अत्राहुस्तार्किकाः—नित्यन्निरवयवमणुपरिमाणं मनः । तस्य कथं सावयवजतुदृष्टान्तेन द्रवीभावद्वारा विषयाकारपरिणामो वक्तुं शक्यते ? न हि निरवयवस्य ह्रासवृद्धी सम्भवतः । तस्मादुक्तस्थायिभावनिरूपणमसङ्गतमिति । तत्राह—परमेति । आदिशब्दाद्विभु मन इति प्राभाकराणां, [3]समनन्तरप्रत्यय एवोत्तरज्ञानकारणतया मन इति सौगतानाञ्च मतं सङ्गृहीतम् । अयं भावः—करणत्वात् परश्वादिव,दिन्द्रियत्वाच्चक्षुरादिवन्मनसो मध्यमपरिमाणत्वमनुमीयते । न चाणुत्वानुमाने कि-

टिप्पणी

१ एवं सति=सर्वस्यापि वस्तुनः प्रत्येकं सुखदुःखमोहात्मकत्वे विद्यमाने । सुखाकारः=सुखमेवाकारः । २ क्रोधो नामेर्ष्याभयान्यतरेन्धनकश्चित्तज्वलनम् । ३ समनन्तरेति । अव्यवहितपूर्वेत्यर्थः ।

टीका

श्चिल्लिङ्गमस्ति । नापि नित्येन्द्रियत्वाच्छ्रोत्रवद्विभुत्वानुमानम्, नित्यत्वस्यासिद्धत्वात् । आकाशस्यापि नित्यत्वाभावेन तत्कार्यश्रोत्रस्य सुतरान्नित्यत्वाभावाच्च । अत एव जन्यस्य विभुत्वाभावान्मध्यमपरिमाणत्वानुमानस्य श्रोत्रे न व्यभिचारः । यदिन्द्रियँय्यद्गुणग्राहकं, तदिन्द्रियन्तद्गुणवद्भूतारब्धमिति व्याप्तेर्यथा चक्षुरादेस्स्वग्राह्यगुणवद्भूतारभ्यत्वं साध्यते, तथा मनसोऽपि पञ्चमहाभूतगुणग्राहकत्वेन स्वग्राह्यगुणवत्पञ्चभूतारभ्यत्वं साध्यताम्, विशेषाभावात् । न च विजातीयानामनारम्भकत्वं विशेषः, सुवर्णसूत्रैः पट्टसूत्रैः कार्पाससूत्रैश्च विजातीयैरेकपटारम्भदर्शनात् । तत्रावयव्यनङ्गीकारेऽन्यत्रापि तथानङ्गीकारसम्भवादवयविनो दत्तजलाञ्जलिताप्रसङ्गात् । [1]तस्मादपञ्चीकृतपञ्चमहाभूतारब्धं [2]सत्त्वप्रधानं सङ्कोचविकासशीलं स्वच्छद्रव्यं चक्षुर्वन्मू[3]र्तद्रव्याभिघातयोग्यञ्च देहपरिमाणं मनोऽभ्युपगन्तव्यम्, [4]सिद्धान्ते सुखदुःखेच्छाज्ञानादीनां तदाश्रयत्वाभ्युपगमात्तेषाञ्च सर्वशरीरव्यापित्वेनोपलम्भा-

टिप्पणी

१ यस्मान्मनो नाणुपरिमाणन्नापि विभु किन्तु मध्यमपरिमाणम्, तस्माच्च निरवयवत्वप्रयुक्तमुक्तस्थायिभावनिरूपणासाङ्गत्यमित्यभिप्रेत्याह—तस्मादिति। २ सावयवत्वेऽपि लघुत्वाभावे सङ्कोचविकासयोरयोगाल्लघुत्वद्वारा तच्छीलत्वे, स्वच्छत्वे च प्रतिबिम्बनयोग्यताभूते हेतुस्सत्त्वप्रधानमिति । ३ मूर्तद्रव्यस्याभिघातः=गतिप्रतिबन्धकसँय्योगः तद्योग्यम् । तथा च देहेन गतिप्रतिबन्धान्न स्वातन्त्र्येण बहिस्सम्बन्धः, अपितु चक्षुरादिद्वारैवेति भावः । ४ ननु मध्यमपरिमाणत्वेऽपि देहापेक्षया न्यूनमेवास्तु परिमाणमनवयवत्वादित्यत आह—सिद्धान्त इत्यादि । तदाश्रयत्वेति । मनआश्रयकत्वेत्यर्थः ।

गृह्णाति विषयाकारम्मनो विषययोगतः ।
इति वेदान्तिभिस्साङ्ख्यैरपि सम्यङ्निरूपितम् ॥ २० ॥

## टीका

तदाश्रयस्य मनसोऽपि सर्वशरीरव्यापित्वात् । अणुत्वाभावे युगपत् सर्वेन्द्रियसम्बन्धसम्भवाद्युगपज्ज्ञानाज्ञानोत्पत्तिप्रसङ्ग इति चेन्न, एकेनेन्द्रियेणैकदैकमेव ज्ञानञ्जन्यत इति नियमस्तावदावयोस्समः । अन्यथा युगपच्चाक्षुषज्ञानद्वयोत्पत्तिः किन्न स्यात् ? नानेन्द्रियजन्यज्ञानानान्तु युगपदुत्पत्तिरिष्यत एव, दीर्घां शष्कुलीम्भक्षयतश्शब्दस्पर्शरूपरसगन्धानाँय्युगपदनुभवात् । [1]सुषुप्त्यन्यथानुपपत्त्या त्वङ्मनस्संय्योगस्य ज्ञानमात्रे कारणत्वेन त्वयाभ्युपगमाद्रसनावच्छिन्नत्वक्संय्युक्तस्य गुळस्य युगपद्रसस्पर्शोपलम्भस्तवापि दुर्निवारः । [2]तस्मान्नास्मदभ्युपगते मनसि श्रुतिस्मृतिन्यायसिद्धे विमतिस्सम्भवति । समनन्तरप्रत्ययस्त्वतिनिर्युक्तिकत्वादुपेक्षितः । विस्तरस्त्वस्मदीयवेदान्तकल्पलतायामनुसन्धेयः ॥ १९ ॥

[3]अतस्स्वच्छस्वभावस्य सावयवस्य मनसो दर्पणादिवद्विषयाकारग्राहकत्वं वेदान्तशास्त्रे साङ्ख्यशास्त्रे च यन्निरूपि-

## टिप्पणी

तदाश्रयस्य = तेषामाश्रयस्य । १ सुषुप्त्यवस्थायां ज्ञानाभावस्यान्यथानुपपत्त्येत्यर्थः । २ उपसंहरति—तस्मादिति । युगपज्ज्ञानाज्ञानोत्पत्तिप्रसङ्गरूपबाधकाभावादित्यर्थः । साधकमप्याह—श्रुतीति । ३ अतः = उक्तस्यान्येषां मतस्याप्रामाणिकत्वात् । इतीत्यन्तं मूलगतमनुवाद्यमवशिष्टन्तु विधेयमिति भ्रमस्य, यन्निरूपितं तत् सम्यगिति यत्तत्पदाध्याहारादनवसरः ।

मूषासिक्तँय्यथा ताम्रन्तन्निभन्दृश्यते, तथा ।
घटादि व्याप्नुवच्चित्तन्तन्निभञ्ज्ञायते ध्रुवम् ॥ २१ ॥

टीका

तं, तत् प्रामाणिकत्वात् समीचीनमेवेत्याह—गृह्णातीति । यद्यपि साङ्ख्यानामाहङ्कारिकं मनः, ब्रह्मवादिनान्तु मते भौतिकमिति महान् विशेषस्तथापि विषयाकारग्राहकत्वं समानमिति तुल्यवदुभयोरुपन्यासः ॥ २० ॥

द्रवीभावपूर्वकश्चित्तस्य विषयाकारभजनमित्यत्र भाष्यकारवचनमुदाहरति—मूषेति । [2]मूषा = पुटपाकयन्त्रम् । तद्द्वारा द्रवीभूतं ताम्रँय्यत्र प्रतिमाद्याकारघटितोदरे मृदादिसंस्थानविशेषे सिक्तम्भवति, [3]तत्तदुदरस्थसंस्थानाकारं भवति द्रुतत्वात् । एवं रागद्वेषादिना द्रवीभूतश्चित्तश्चक्षुरादिद्वारा [4]यत्र सिक्तम्भवति, स्तत्रमपि तद्विषयाकारं भवतीति कारिकार्थः । यद्यप्यस्मिन् वाक्ये सामान्यत एव द्रवीभाव उक्तस्तथाप्यनुभवबलाद्रागद्वेषादिविषये व्यवस्थाप्यते, तदभावे तु शिथिलीभावमात्रमित्युक्तमधस्तात् ॥ २१ ॥

टिप्पणी

१ तुल्यवत्=तुल्ययोरिव । २ ननु ताम्रस्याद्रवद्रव्यत्वात् कथन्तस्य सेचनमित्याशङ्कय सिञ्चतिसमभिव्याहृतमूषापदसूचितं तत्पदवाच्यार्थभूतभाजनविशेषद्वारा तस्य द्रवीभूतत्वं मुखतो वदन् मूलं व्याचष्टे—मूषेत्यादिना । यत्र क्षिप्त्वा ताम्रादिकं द्रवीक्रियते स पात्रविशेष एव मूषापदवाच्यतयोक्तं पुटपाकयन्त्रम् । मूषायां सिक्तम्मूषासिक्तमिति सेकाधिकरणतया विवक्षितं "करु" इति केरळभाषायाङ्ख्यातं मूषापदस्य लक्ष्यार्थन्दर्शयन्नाह—यत्रेत्यादि । मुख्यार्थभूतपुटपाकयन्त्रद्वारा ताम्रस्य द्रवीभूतत्वद्योतनमेव लक्षणाप्रयोजनम् । ३ तत्ताम्रम् । ४ यत्र विषये ।

व्यञ्जको वा यथाऽऽलोको व्यङ्ग्यस्या[1]कारतामियात् ।
सर्वार्थव्यञ्जकत्वाद्धीरर्थाकारा प्रदृश्यते ॥ २२ ॥
[2]भगवत्पूज्यपादानामियमुक्तिस्सयुक्तिका ।
तथा वार्तिककारैरप्ययमर्थो निरूपितः ॥ २३ ॥

टीका

मनो विषयाकारम्, विषयगतावरणनिवर्तकत्वादालोकवदित्यनुमानमस्मिन्नर्थे प्रमाणमाह—व्यञ्जको वेति । [3]व्यञ्जकस्य तदाकारत्वाभावे तद्गतावरणनिवृत्तेरदर्शनादित्यर्थः ॥ २२ ॥

[4]व्यञ्जको वेत्याद्युक्तिर्वार्तिककाराणामपि । युक्तिरनुमानरूपा द[5]र्शिता ॥ २३ ॥

टिप्पणी

१ आकारोऽस्यास्तीत्याकारः । अर्शआद्यच् । तत्ताम्=आकारवत्ताम् । आकारयोस्सादृश्यादभेदारोपः । २ भगवदिति । सयुक्तिकेयमुक्तिर्मूषासिक्तमित्यादिकारिकाद्वयरूपा भगवत्पूज्यपादानाम्, तथा वार्तिककारैरप्ययमर्थो निरूपित इत्यन्वयः । ३ उक्तानुमानेऽनुकूलतर्कस्य हेतुसाध्ययोः प्रयोज्यप्रयोजकभावस्य कल्पकं साध्याभावे हेत्वदर्शनं मूलस्य भावार्थत्वेनाह—व्यञ्जकस्येति । ४ मूले वार्तिककाराणामपीत्यनुक्त्वा वार्तिककारैरप्ययमर्थो निरूपित इत्युक्तौ हेतुराद्यकारिकाया वार्तिककारीयत्वाभावो द्वितीयाया वार्तिककारसाधारण्यञ्चेति दर्शितमेतद्वाक्येन । ५ दर्शितेति । व्यञ्जको वेत्यादिपूर्वकारिकाविवरण इति भावः ।

मातुर्मानाभिनिष्पत्ति,र्निष्पन्नम्मेयमेति तत् ।
मेयाभिसङ्गतन्तच्च मेयाभत्वम्प्रपद्यते ॥ २४ ॥

एवमेतादृशँव्वाक्यमुदाहार्यमनेकशः ।
चित्तस्य विषयाकारग्राहकत्वोपपादने ॥ २५ ॥

टीका

वार्तिककाराणां [2]वाक्यान्तरमुदाहरति—मातुरिति । मातुश्चि[3]दचिद्ग्रन्थिरूपात् सचित्कादन्तःकरणात् वृत्तिज्ञानाख्यस्य द्रवीभावपूर्वकस्य मानशब्दवाच्यस्य परिणामविशेषस्याभिनिष्पत्तिर्भवति । तच्च परिणामविशेषात्मकं मानं निष्पन्नं सच्चक्षुरादिद्वारा घटादिविषयपर्यन्तं गच्छति शरीरावच्छिन्नमन्तःकरणमत्यजदेव कुल्याजलवत् । तच्च घटादिसम्बद्धं सद्घटाद्याकारताम्प्राप्नोति । ततश्च तत्र चैतन्याभिव्यक्त्या घटाद्युपलम्भ इति कारिकार्थः । सर्वा चेयम्प्रक्रियाऽस्माभिर्विस्तरेण सिद्धान्तबिन्दौ प्रतिपादिता ॥ २४ ॥

एवमिति । ग्रन्थगौरवभयान्नोदाह्रियत इति भावः ॥ २५ ॥

टिप्पणी

१ मातुः मानाभिनिष्पत्तिर्भवति । तत्=मानं निष्पन्नं सन्मेयमेति । तत् मेयाभिसङ्गतं सन्मेयाभत्वं प्रपद्यते चेत्यन्वयः । मेयेनाभिसङ्गतम्=आभिमुख्येन सम्बद्धं मेयाभिसङ्गतम् । यद्वा मेयमभिसङ्गतम्=आभिमुख्येन सम्यक् प्राप्तमिति । मेयस्याऽऽभेवाऽऽभा यस्य तत्त्वं मेयाभत्वम् । मेयसमानाकारकत्वमित्यर्थः । २ वाक्यान्तरम्=व्यञ्जको वेत्यादिकारिकया अन्यद्वाक्यम् । ३ चिदचिद्ग्रन्थीति । परस्परतादात्म्यापन्नयोश्चिदचितोरुभयोरित्यर्थः ।

[1]अतो मांसमयी योषित्काचिदन्या मनोमयी ।
मांसमय्या अभेदेऽपि भिद्यतेऽत्र मनोमयी ॥ २६ ॥
भार्या स्नुषा ननान्दा च याता मातेत्यनेकधा ।
जामाता श्वशुरः पुत्रः पितेत्यादि पुमानपि ॥ २७ ॥

टीका

पञ्चदश्यां विद्यारण्यपादैरप्ययमर्थो दर्शितः । तमुपसंहारव्याजेनाह—अतो मांसमयीति । मनोमय्याकारभेदं विनैकस्मिन् भौतिके पिण्डे भेदप्रत्ययायोगादित्यर्थः ॥ २६ ॥

भेदप्रतीतिमेव सर्वसिद्धामुदाहरति—भार्येति । भिद्यत इत्यनुषङ्गः ॥ २७ ॥

टिप्पणी

१ अतः = मनसा द्रवीभावपूर्वकाद्विषयाकारस्य भजनात् मांसमयी काचिन्मनोमय्यन्या च योषिदस्ति । अत्र = अनयोर्योषितोर्मध्ये मांसमय्या अभेदे सत्यपि मनोमयी भिद्यते । तथा हि—भार्या स्नुषा ननान्दा याता मातेति च योषिदनेकधा भिद्यते । पुमानपि जामाता श्वशुरः पुत्रः पितेत्यादि यथा भवति तथा भिद्यत इति द्वयोः कारिकयोस्सङ्गतिः । विकारार्थे मयटः । मांसेत्युपलक्षणम् । अत एव

एतन्मांसवसादिविकारं
मनसि विचिन्तय वारं वारम् ॥

इत्युपदिष्टं ''भजगोविन्द''स्तोत्रे भगवत्पूज्यपादैः । प्रकृतायाँ्योषिति भेदप्रतीतिमुदाहृत्य प्रसङ्गात् पुंस्यपि सोदाहृता—जामातेत्यर्धेन । भार्यात्वमत्र पुम्निरूपितम् । ननान्दृत्वं यातृत्वञ्च स्त्रीनिरूपितम् । तत्र यातृत्वं भर्तृभ्रातृभार्यात्वरूपमन्योन्यमस्ति, भ्रातृत्वस्य तथात्वात् । भार्यास्तु भ्रातृवर्गस्य यातरस्स्युः परस्परमित्यमरः । स्नुषात्वं मातृत्वञ्चोभय-

बाह्यपिण्डस्य नाशेऽपि तिष्ठत्येव मनोमयः ।
अत "स्थायी"ति विद्वद्भिरयमेव निरूपितः ॥ २८ ॥
[1]एवं सामान्यतो भावस्वरूपमुपदर्शितम् ।
विशेषेण तु सर्वेषाँल्लक्षणाँव्वक्ष्यते पृथक् ॥ २९ ॥

## टीका

एकानेकत्ववैधर्म्यमुक्त्वा विनाशित्वाविनाशित्ववैधर्म्यान्तरमाह—बाह्येति । [2]अपिशब्दाद्बाह्यस्य देशकालादिना व्यवधानेऽपि मनोमयोऽव्यवहित एवेत्यर्थः ॥ २८ ॥

मनोमयो विषयाकार एवाविनाशित्वात् स्थायिभाव इति कथितम्, तस्य तु रतिहासादिरूपेण भेदस्तल्लक्षणञ्च वक्ष्यतेऽनन्तरोल्लास इत्यर्थः ॥ २९ ॥

## टिप्पणी

प्रतियोगिकम् । जामातृत्वादिचतुष्टयमपि तथेति विवेकः । १ स्थायिभावसामान्यनिरूपणमुपसंहरन् सामान्यत इति भागेनोत्थापितायां स्थायिभावविशेषजिज्ञासायामनन्तरोल्लासे तन्निरूपणस्य करिष्यमाणतामाहैवमिति । २ व्यवहितत्वाव्यवहितत्वरूपवैधर्म्यान्तरस्यापि मूलोक्ततां सम्पादयत्यपिशब्दादिति । अयं भावः—मूलेऽपिशब्देन व्यवधान इत्यस्य समुच्चयादर्थद्वयं लभ्यते—बाह्यपिण्डस्य नाशे सत्यपि × मनोमयः पिण्डस्तिष्ठत्येवेत्येकोऽर्थः । बाह्यपिण्डस्य व्यवधाने सत्यपि मनोमयः पिण्डस्तिष्ठत्येवेत्यपरः । आदिमेऽर्थे स्थितिर्नाशाभावः, अन्तिमे व्यवधानाभाव इति ।

× अपिना नाशाभावे सतीत्यस्य समुच्चयः । व्यवधाने सत्यपीत्यपिस्त्वव्यवधाने सतीत्यस्य समुच्चायकः । मूले तु तयोस्समुच्चयोऽर्थादेवेति भावः ।

भगवन्तँव्विभुन्नित्यम्पूर्णम्बोधसुखात्मकम् ।
[1]यद्गृह्णाति द्रुतञ्चित्त,ङ्किमन्यदवशिष्यते ॥ ३० ॥

## टीका

भगवन्तमित्यादि । यस्माद्द्रुतचित्तप्रविष्टो विषयाकारोऽनपायी, तस्मादित्यादिः । विभुमिति [2]सर्वदेशव्यापकत्वं, नित्यमिति सर्वकालव्यापकत्वं, पूर्णमित्यद्वितीयतया सर्वद्वैतभ्रमाधिष्ठानत्वं, बोधसुखात्मकमिति निरतिशयपुमर्थत्वन्दर्शितम् । [3]एतादृशेन भगवदाकारेण मनोगतेनानादिकालप्रविष्टासङ्ख्यविषयाकाराणां कबळीकरणात्तन्मात्रपरिस्फूर्त्या कृतकृत्यो भवतीत्यर्थः ॥ ३० ॥

## टिप्पणी

१ गृह्णातीति यत् तस्मादन्यत् किमवशिष्यत इति सम्बन्धः । २ सर्वदेशव्यापकत्वम्=देशपरिच्छेदशून्यत्वम् । सर्वकालव्यापकत्वम् =कालपरिच्छेदशून्यत्वम् । अद्वितीयतया=वस्तुपरिच्छेदशून्यतया । देशादिपरिच्छेदानामत्यन्ताभावादिप्रतियोगित्वरूपत्वं प्रसिद्धम् । ३ एतादृशेन भगवत आकारेण मनोगतेन सता कबळीकरणात् । केषाम् ? आनदौ काले=तदवच्छेदेन प्रविष्टाः अत एवासङ्ख्या ये विषयाणामाकारास्तेषाम् ।

[1]कठिना शिथिला वा धीर्न गृह्णाति न वास्यते ।
उपेक्षाज्ञानमित्याहुस्तद्बुधाः प्रस्तरादिषु ॥ ३१ ॥

टीका

द्रवीभावस्य प्रयोजनं पूर्वोक्तमेव स्मारयति [2]तत्र प्रयत्नदार्ढ्याय—कठिनेति । कठिना धीर्न गृह्णात्येव । शिथिला तु गृह्णत्यपि न वास्यते, द्रवीभावाभावादिति पूर्वमेवोक्तम् । ईषदप्यद्रवीभावः काठिन्य,मीषद्द्रवत्वं शैथिल्यम् । तच्च द्रवावस्थाकार्यभूतसात्त्विकभावाभावादवसेयम् । ते च—

स्तम्भस्स्वेदोऽथ रोमाञ्चस्स्वरभङ्गोऽथ वेपथुः ।
वैवर्ण्यमश्रु प्रळय इत्यष्टौ सात्त्विका मताः ॥

इत्यभिहिताः । अत एव भगवद्विषये काठिन्यन्निन्द्यते—

तदश्मसारं हृदयम्बतेदं-
य्यद्गृह्यमाणैर्हरिनामधेयैः ।
न विक्रियेताथ यदा विकारो
नेत्रे जलङ्गात्ररुहेषु हर्षः ॥

(श्री० भा० २।३।२४)

टिप्पणी

१ कठिना धीर्विषयाकारन्न गृह्णात्येव । किमु वक्तव्यं विषयेण न वास्यत इतीति भावः । शिथिला वा = शिथिलाऽपि धीर्न वास्यते । शिथिला तु धीर्विषयाकारं गृह्णत्यपि विषयेण स्थिरतया स्वाकारवती न क्रियत इत्यर्थः । तत् = तस्मात् बुधाः प्रस्तरादिषूपेक्षाज्ञानमित्याहुरित्यन्वयः । काठिन्यदशायां शैथिल्यावस्थायाञ्चावास्यमानत्व उपष्टम्भकमिह क्रमार्धेनोक्तम् । विषयसप्तम्या सम्बन्धलाभात् प्रस्तरादिष्वित्यस्य ×प्रस्तरादिज्ञानमिति पर्यवसितोऽर्थ इति टीकायाम्प्रकटीकृतम् । २ तत्रेति । भगवद्विषयके द्रवीभाव इत्यर्थः ।

× प्रस्तरादिज्ञानमिति द्वितीयान्त“ममुन्नारद इत्यबोधि सः” इत्यत्रामुमितिवत् ।

काठिन्यँव्विषये कुर्याद्द्रवत्वम्भगवत्पदे ।
उपायैश्शास्त्रनिर्दिष्टैरनुक्रमतो बुधः ॥ ३२ ॥

टीका

कथं विना रोमहर्षन्द्रवता चेतसा विना ।
विनाऽऽनन्दाश्रुकलया शुध्येद्भक्त्या विनाऽऽशयः ॥
( श्री० भा० ११ । १४ । २३ )

भक्त्या विना कथमाशयश्शुध्येत्, भक्तिश्च द्रवता चेतसा विना कथं स्यात्, द्रवच्चित्तञ्च कथं रोमहर्षं विनाऽऽनन्दाश्रु च विना ज्ञायेतेत्यर्थः । अश्रुपुळकयोरभिधानं स्तम्भस्वेदादीना-मप्युपलक्षणम् । [1]यतो द्रवत्वाभावे चित्तन्न वास्यते, अतो बुधाः = पण्डिताः कामक्रोधाद्यनास्पदीभूतपाषाणादिज्ञानमुपे-क्षाज्ञानं संस्काराजनकमित्याहुः । तथा चाहुर्न्यायवार्तिक-कृतः—यन्न सुखसाधनन्न दुःखसाधनं, तदेवोपेक्षणीयमिति । सुखसाधने रागसंस्कारहेतुर्दुःखसाधने द्वेषस्तथा, तदुभया-भावे तु चित्ते द्रवत्वाभावान्न जायते संस्कार इत्यर्थः । एता-वान् हि सर्वेषां शास्त्राणां रहस्यभूतोऽर्थो यद्विषयाकारता-निराकरणपूर्वकश्चित्तस्य भगवदाकारतासम्पादनम्, सर्वेषा-मपि शास्त्राणामत्रैव व्यापारभेदेन पर्यवसानात् ॥ ३१ ॥

नन्वनादिकालद्रवच्चित्तप्रविष्टतत्तदिष्टानिष्टविषयकोटिसङ्की-

टिप्पणी

१ तत्पदं विवृण्वन्नुत्तरार्धं व्याचष्टे—यतो द्रवत्वेत्यादि । मूले काठि-न्यमिति । अतः = द्रवत्वं विना चित्तस्यावास्यमानत्वात् बुधः = बुद्धिमान् शास्त्रनिर्दिष्टैरुपायैः विषये = विषयेषु काठिन्यं, भगवतः पदे

"ध्येयं सदा परिभवघ्नमभीष्टदोहं
त्तीर्थास्पदं शिवविरिञ्चिनुतं शरण्यम् ।

टीका

शान्ता चित्तस्य स्वभावभूता शीततेव तोयस्येोष्णतेव दहनस्य सञ्चरिष्णुतेव पवनस्य कथञ्चिन्नवर्तता, धर्मिणि सति स्वभावो-पमर्दासम्भवादित्यत आह—काठिन्यमिति। विषयाकारता हि न चित्तस्य स्वभावभूता, तस्या आगन्तुकहेतुजन्यत्वात्। तथा हि—स्थूलविषयाकारताहेतुरिन्द्रियसन्निकर्षादिर्जागरणे, सूक्ष्मविषयाकारताहेतुर्मनोगतवासना स्वप्ने, तदुभयाभावे तु सुषुप्तिवन्निर्विषयमेव चित्तं भवति। सुषुप्तौ चित्तलयाभिधा-नन्तु निर्विषयकत्वाभिप्रायकमेव। एतच्च भगवता सूत्रकारे-णैव प्रदर्शितम्—[1]तदाऽपीतेस्संसारव्यपदेशा (ब्र० सू० अ० ४।

टिप्पणी

मृत्यार्तिहृम्प्रणतपाल भवाब्धिपोतं
वन्दे महापुरुष ते चरणारविन्दम्॥"

इत्येवम्भूते द्रवत्वञ्च चित्तस्यानुक्षणं कुर्यात्=जनयेदित्यन्वयः।

"तेजोमध्ये कळायद्युतिलसिततनुम्बालकम्बर्हचूड-
ङ्कारुण्यार्द्रावलोकञ्चलमकरमणीकुण्डलश्चारुहासम्।
हाराळीवन्यमालापरिलसदुरसम्पाणिसंसक्तवेणुं
वन्दे पीताम्बरासञ्जितमणिरशनं सन्नखश्रीपदाब्जम्॥"

इत्यखण्डचित्सुखघनस्य भगवद्विग्रहस्य सङ्ग्रहः। ईषद्विस्तरस्तु—

"अग्रे पश्यामि तेजो निबिडतरकळायावलीलोभनीय-
म्पीयूषाप्लावितोऽहन्तदनु तदुदरे दिव्यकैशोरवेषम्।

तारुण्यारम्भरम्य"मित्यादिनारायणीयचरमदशके। टीकायामना-दिकालेत्यादि। अनादिकाले=तदवच्छेदेन द्रवच्चित्ते प्रविष्टाभिस्तत्तदिष्टा-निष्टविषयाणाङ्कोटिभिस्सङ्कीर्णतेत्यर्थः। १ तत्=मनआदिकं आऽपीतेः =महाप्रलयात्यन्तिकलयं मर्यादीकृत्यावतिष्ठते। ननु मरणकाल एव

टीका

पा० २ । सू० ८ )दिति । अपीतिर्लयः । मर्यादायामाङ् । अपीतिं लयं मर्यादीकृत्य, तस्य मनसो लयात् पूर्वकाले संसारव्यपदेशः, न तु तल्लये सतीति सूत्रार्थः । तथा च सुषुप्तावपि पुनरुत्थानेन संसारव्यपदेशस्य सत्त्वान्न मनोलयः । विवरणकाराणान्तु "केयं सूक्ष्मता नामे"त्यादिना यन्मनोलयाभिधानं, तत् परमताभिप्रायेण न तु स्वमतानुसारेण, सूत्रविरोधात् इति भावः ।

[1]भगवदाकारता तु चित्तस्य स्वाभाविकी [2]तस्य चित्तका-

टिप्पणी

मनआदेरात्यन्तिकलयस्स्वीक्रियतामत आह—संसारव्यपदेशादिति । मृतस्यापि तत्तद्योनिप्राप्तिपूर्वकं संसारानुभवस्य व्यपदेशादित्यर्थः । तथा च मृतिकाल एव मनोलये संसारकारणाभावात्ततः परं संसारव्यपदेशोऽसङ्गत एव स्यादिति न तदानीं मनोलय इति भावः । सूत्रस्य पर्यवसितार्थमाह—तस्येत्यादि । यद्वा—तदिति लुप्तषष्ठ्यन्तमव्ययम् । तथा च, मनसो लयं मर्यादीकृत्यैव संसारव्यपदेशसम्भवादित्यर्थः । मनोऽवतिष्ठत इति शेषः । मरणानन्तरमपि संसारव्यपदेशदर्शनान्मृतिकाले मनो नैव लीयत इति भावः इत्यभिप्रायेण सूत्रार्थमाहापीतिरित्यादिना सूत्रार्थ इत्यन्तेन । १ एवं प्रथमपादस्याभिप्रायो वर्णितः । इदानीन्तु, चित्तस्य भगवदाकारतायास्स्वाभाविकत्वात् स्वतस्तस्या विषयाकारतानिवर्तकत्वं न सम्भवति । अतश्शास्त्रीयोपायैस्साधितैव सा विषयाकारतान्निवर्तयेदिति शास्त्रीयोपायानुष्ठानपूर्वकं चित्तस्य सा सम्पादनीयेत्येवम्भूतमवशिष्टचरणत्रयस्य तात्पर्यार्थं वर्णयितुं शास्त्रीयोपायसाध्याया एव तस्या विषयाकारतानिवर्तकत्वमुपपादयति —भगवदाकारता त्वित्यादिना,ऽयमत्र निष्कर्ष इत्यतः प्राक्तनेन ग्रन्थेन । २ तस्य=भगवतः सर्वत्रानुगतत्वादिति सम्बन्धः । चित्तकारणीभूतानि यानि भूतसूक्ष्मा-

टीका

रणीभूतभूतसूक्ष्मकारणानिर्वचनीयविचित्रानेकशक्तिमन्माया-
धिष्ठानस्य नित्यस्य विभोस्सर्वान्तर्यामिणस्सर्वत्रानुगतत्वात्,
यथा घटस्य जलादिपूर्णता कारणसाध्या, आकाशपूर्णता तु
स्वतः, तस्य सर्वव्यापकत्वात्, तद्वत्। तदुक्तं वार्तिककारपादैः-

[1]वियद्वस्तुस्वभावानुरोधादेव न कारकात्।
वियत्सम्पूर्णतोत्पत्तौ कुम्भस्यैवन्दशा धियाम्॥
सुखदुःखादिरूपत्वन्धियान्धर्मादिहेतुतः।
स्वतस्सिद्धात्मसम्बोधव्याप्तिर्वस्त्वनुरोधतः॥ इति।

चित्तस्य भगवदाकारतायास्स्वाभाविकत्वेन हेत्वनपेक्षायां शास्त्रस्य कोपयोग इति चेदन्याकारताविरोधिभगवदाकारता-सम्पादन इत्यवेहि। या हि स्वाभाविकी भगवदाकारता चित्तस्य, सा विषयाकारतासहचरितत्वात्तत्साधकत्वाच्च न तद्विरोधिनी। शास्त्रजन्या तु साधनोपक्रमे परोक्षेव भासमाना[2]ऽभ्यासक्रमेण विषयाकारतां शनैश्शनैस्तिरोदधती सा-

टिप्पणी

णि=सूक्ष्माणि भूतानि तेषां कारणं, अनिर्वचनीया विचित्रा अनेकाश्च याश्शक्तयस्तद्वती च या माया तदधिष्ठानस्य। १ वियदिति। कुम्भस्य योत्पत्तौ। उत्पत्तिकाल एवेत्यर्थः। उत्पत्तिमारभ्यैव वर्तमानेति यावत्। वियत्सम्पूर्णता, सा वियद्वस्तुस्वभावानुरोधादेव भवति न कारकात्, तद्वद्धियामपि दशा। तामेव विवृणोति—सुखदुःखादीति। आदिपदेन सुखदुःखयोस्साधनानि सङ्गृह्यन्ते। धर्मादीत्यादिपदमधर्मसङ्ग्राहकम्। तथा चायमर्थः—धियां सुखाकारता सुखसाधनाकारता च धर्मरूपात्, दुःखाकारता दुःखसाधनाकारता चाधर्मरूपाच्च कारणाद्भवति। स्वतस्सिद्धो य आत्मसम्बोधः=चिद्रूप आत्मा तद्व्याप्तिः=तदाकारता तु वस्त्वनुरोधतः=वस्तुस्वभावानुरोधादेव भवतीति। २ अभ्यासेति।

टीका

धनपरिपाकेणापरोक्षतान्नीता सती तां समूलघातमुपहन्ति ।
अत एवोक्तम्—

यर्ह्यम्बुजनाभचरणैषणयोरुभक्त्या
चेतो मलानि विधमेद्गुणकर्मजानि ।
तस्मिन् विशुद्ध उपलभ्यत आत्मतत्त्वं
साक्षाद्यथाऽमलदृशोस्सवितृप्रकाशः ॥

(श्री० भा० ११ । ३ । ४० )

यथाग्निना हेम मलञ्जहाति
ध्मातम्पुनस्स्वम्भजते च रूपम् ।
आत्मा च कर्मानुशयं विधूय
मद्भक्तियोगेन भजत्यथो माम् ॥
यथा यथात्मा परिमृज्यतेऽसौ
मत्पुण्यगाथाश्रवणाभिधानैः ।
तथा तथा पश्यति वस्तु सूक्ष्म-
ञ्चक्षुर्यथैवाञ्जनसम्प्रयुक्तम् ॥
विषयान्ध्यायतश्चित्तं विषयेषु विषज्जते ।
मामनुस्मरतश्चित्तम्मय्येव प्रविलीयते ॥
तस्मादसदभिध्यानँय्यथा स्वप्नमनोरथम् ।
हित्वा मयि समाधत्स्व मनो मद्भावभावितम् ॥

( श्री० भा० ११। १४ । २५—२८ )

एतावान् योग आदिष्टो मच्छिष्यैस्सनकादिभिः ।
सर्वतो मन आकृष्य मय्यद्धाऽऽवेश्यते यथा ॥

श्री० भा० ११ । १३ । १४ )

टिप्पणी

साधनाभ्यासेत्यर्थः ।

टीका

[1]स च श्रीकपिलदेवेनोक्तः—

अनिमित्तनिमित्तेन स्वधर्मेणामलात्मना ।
तीव्रया मयि भक्त्या च श्रुतसम्भृतया चिरम् ॥
ज्ञानेन दृष्टतत्त्वेन वैराग्येण बलीयसा ।
तपोयुक्तेन योगेन तीव्रेणात्मसमाधिना ॥
प्रकृतिः पुरुषस्येह दह्यमाना त्वहर्निशम् ।
तिरोभवित्री शनकैरग्नेर्योनिरिवारणिः[2] ॥

( श्री० भा० ३ । २७ । २१—२३ )

[3]प्रकृतिः = स्वाभाविकी विषयाकारतेत्यर्थः । हंसगीतासु च—

गुणेष्वाविशते चेतो गुणाश्चेतसि च प्रभो ।
कथमन्योन्यसन्त्यागो मुमुक्षोरतितितीर्षतः ॥

( श्री० भा० ११ । १३ । १७ )

इति सनकादिप्रश्नस्योत्तरं भगवानुवाच—

मनसा वचसा दृष्ट्या गृह्यतेऽन्यैरपीन्द्रियैः ।
अहमेव न मत्तोऽन्यदिति बुध्यध्वमञ्जसा ॥

( श्री० भा० ११ । १३ । २४ )

टिप्पणी

१ तत्पदमव्यवहितपूर्वोदाहृतश्लोकोक्तयोगपरामर्शकम् । २ × इति स श्रीकपिलदेवेनोक्त इति सम्बन्धः । ३ श्रीकपिलदेववचनान्तर्गतं प्रकृतिपदं विवृणोति—प्रकृतिरिति । स्वाभाविकीति । अनादिकालप्रविष्टेत्यर्थः । तेनाऽऽगन्तुकहेतवजन्यत्वरूपस्वाभाविकत्वविरहेऽपि विषयाकारताया नासङ्गतिः । ४ केरळपाठोऽयम् । भावार्थदीपिकापि कैरळीममेवाऽऽद्रियते । वैदेशिकपाठे तु दुर्वार एवच्छन्दोभङ्गः ।

× इतीति । अनिमित्तनिमित्तेनेत्यादिनाग्नेर्योनिरिवारणिरित्यन्तेनेत्यर्थः ।

टीका

जाग्रत् स्वप्नस्सुषुप्तञ्च गुणतो बुद्धिवृत्तयः ।
तासां विलक्षणो जीवस्साक्षित्वेन विनिश्चितः ॥
यर्हि संसृतिबन्धोऽयमात्मनो गुणवृत्तिदः ।
मयि तुर्ये स्थितो जह्यात्त्यागस्तद्गुणचेतसाम् ॥
अहङ्कारकृतं बन्धमात्मनोऽर्थविपर्ययम् ।
विद्वान्निर्विद्य संसारचिन्तान्तुर्ये स्थितस्त्यजेत् ॥
यावन्नानार्थधीः पुंसो न निवर्तेत युक्तिभिः ।
जागर्त्यपि स्वपन्नज्ञस्स्वप्ने जागरणं यथा ॥
असत्त्वादात्मनोऽन्येषाम्भावानान्तत्कृता भिदा ।
गतयो हेतवश्चास्य मृषा स्वप्नदृशो यथा ॥

यो जागरे बहिरनुक्षणधर्मिणोऽर्थान्
भुङ्क्ते समस्तकरणैर्हृदि तत्सदृक्षान् ।
स्वप्ने सुषुप्त उपसंहरते स एक-
स्स्मृत्यन्वयात्त्रिगुणवृत्तिदृगिन्द्रियेशः ॥
एवं विमृश्य गुणतो मनसस्त्र्यवस्था
मन्मायया मयि कृता इति निश्चितार्थाः ।
सञ्छिद्य हार्दमनुमानसदुक्तितीक्ष्ण-
ज्ञानासिना भजत माऽखिलसंशयाधिम् ॥
(श्री० भा० ११ । १३ । २७—३३)

एवञ्जिज्ञासयाऽपोह्य नानात्वभ्रममात्मनि ।
उपारमेत विरजम्मनो मय्यर्प्य सर्वगे ॥
(श्री० भा० ११ । ११ । २१)

इत्यादि । अयमत्र निष्कर्षः—चित्ते स्वाकारसमर्पका ये विषयास्ते भगवद्व्यतिरिक्ता न भवन्ति, भगवत्यध्यस्त-

टीका

त्वात्, भगवत एव सद्रूपतया घटस्सन् पटस्सन्नि[1]त्यादिसदाकारेणैव सर्वविषयाणां स्फुरणात्, [2]सर्वङ्खल्विदम्ब्रह्म तज्जला(छा० ३। १४। १)निति श्रुत्या भगवदेकोद्भवत्वेन भगवदेकस्थितित्वेन भगवदेकलयत्वेन च मृद्घटवदभेदबोधनात्, स्वप्नादिप्रपञ्चवद्बाध्यत्वाच्च। [4]अत एव भगवदाकारस्फूर्त्या ते सर्वे निवर्तमाना[5]स्तद्रूपा एव भवन्ति, अधिष्ठानज्ञाननिवर्त्यत्वादध्यस्तानाम्। एवञ्च सति विषयनिष्ठस्सर्वोऽपि प्रेमा भगवत्येवार्पितो भवति, तद्व्यतिरिक्तास्फुरणात्। [6]एतादृशी चावस्था प्रह्लादेन प्रार्थिता—

या प्रीतिरविवेकानां विषयेष्वनपायिनी।
त्वामनुस्मरतस्सा मे हृदयान्माऽपसर्पतु॥ इति॥
(श्रीविष्णुपुराणम्)

तस्मादेतादृशयुक्त्यनुसन्धानेन सर्वाधिष्ठानसन्मात्रं परिपूर्णसच्चिदानन्दघनं भगवन्तमद्वयमात्मानं निश्चिन्वतस्स्वा-

टिप्पणी

१ इत्यादिसदाकारेणैव = इत्यादिशब्दलभ्येन सद्रूपेणैव। सति सदाकारेणैव स्फुरणे भगवद्व्यतिरिक्तत्वाभावस्सिध्यतीत्यत्र हेतुरभिहितो भगवत एव सद्रूपतयेति। २ सर्वमिदञ्जगद्ब्रह्मैव। यतः तज्जलान् = तस्माद्ब्रह्मणो जातं, तस्मिन्नेव लीयतेऽनिति च। ३ भगवदेकोद्भवत्वेनेति। भगवानेवैको भगवदेकः तस्मादुद्भवो येषान्तेषाम्भावेनेत्यर्थः। उत्तरत्र तु सप्तम्यन्तस्यैव भगवदेकपदस्य स्थितिलयपदाभ्यां समासः। ४ अत एव = भगवदध्यस्तत्वादिना भगवद्व्यतिरिक्तत्वाभावादेव। ५ तद्रूपा एव = भगवद्रूपा एव। ६ सयुक्तिकेऽस्मिन्नर्थे प्रह्लादसम्मतिमप्याहैतादृशीति। उक्तरीत्या सर्वस्यापि विषयनिष्ठप्रेम्णो भगवत्येवार्पितत्वं यत्, तद्रूपेत्यर्थः।

टीका

श्रिकविषयेष्विव जाग्रद्विषयेष्वपि तुच्छत्वानुसन्धानेन वैराग्यं महदुपजायते वशीकाराख्यम्। एतच्च सूत्रितं भगवता पतञ्जलिना—दृष्टानुश्रविकविषयवितृष्णस्य [1] वशीकारसञ्ज्ञा-वैराग्यमिति। [2] चतुर्विधं हि वैराग्यं साध्यसाधनभावापन्न-मागमप्रसिद्धम्। [3] तत्र महता प्रयासेनापि चित्तदोषानव-श्यन्निराकरिष्यामीत्यध्यवसायात्मकं प्रथमं यतमानसञ्ज्ञा-वैराग्यम्। ततो निरन्तरमुपायानुष्ठाने क्रियमाण एतावन्तो [4] दोषा इदानीं क्षीणा एतावन्तश्चावशिष्यन्त इति चिकित्सक-वत् प्रतिक्षणमवधानन्द्वितीयं व्यतिरेकसञ्ज्ञावैराग्यम्। [5] एवं प्रतिक्षणं भूमिकाद्वयाभ्यासङ्कुर्वतस्सर्वतोभावेन बहिरिन्द्रियाणां

टिप्पणी

१ वशीकारसञ्ज्ञायुक्तं वैराग्यमिति विग्रहाच्छाकपार्थिवादिसमासः। यद्वा वशीकारसञ्ज्ञेति पृथक् पदं बहुव्रीहिः। भूमिकेति तस्य विशेष्य-पदमध्याह्रियते। अथवा वशीकारसञ्ज्ञैव वैराग्यमिति सञ्ज्ञासञ्ज्ञिनो-रभेदोपचारो

वाच्यवाचकयोर्भेदो नात्यन्तं विद्यते क्वचित्।

इति शास्त्रीय एव वाऽभेदः। ज्ञानपरं वा सञ्ज्ञापदम्। तथा चेमे मम वशा नाहमेषां वश इत्याकारकसम्यग्ज्ञानरूपमेव, न तु भाव-भिन्नाभावात्मकमित्यर्थः। एवमग्रेऽपि। २ सूत्रं विवृणोति—चतुर्विध-मित्यादिना चतुर्थं वशीकारसञ्ज्ञावैराग्यमित्यन्तेन। ३ तत्र = चतुर्विधे वैराग्ये = तस्य मध्ये। ४ दोषपदेन वातादयोऽपि। चिकित्सकवदिति षष्ठ्यन्ताद्वतिः। ५ एवम् = एवम्भूतं यत् भूमिकाद्वयं, तदभ्यासं प्रतिक्षणं कुर्वतः पुंसः। अन्तःकरणपदार्थे बहिरिन्द्रियपदार्थे चास्यान्व-यः। अन्तःकरणे वासनायां सत्यामपि बहिरिन्द्रियाणां या विषयेषु सर्वतोभावेन = सर्वप्रकारेणाप्रवृत्तिरिति सम्बन्धः।

## टीका

विषयेष्वप्रवृत्तिर्याऽन्तःकरणे वासनायां सत्यामपि, सा तृतीयमेकेन्द्रियसञ्ज्ञं वैराग्यम् । [1]एवम्भूमिकात्रयाभ्यासाद्दृष्टेषु वनितादिषु [2]आनुश्रविकेषु स्वर्गादिषु चेन्द्रियैर्गृह्यमाणेष्वपि दोषदर्शनपरिपाकजन्याऽस्पृहात्मिका या चित्तवृत्तिस्सा चतुर्थं वशीकारसञ्ज्ञं वैराग्यम् । तदपि द्विविधं [3]अपरं परञ्च । द्वितीयं सूचितं पतञ्जलिना—तत् परं पुरुषख्यातेर्गुणवैतृष्ण्यमिति । पुरुषख्यातिरात्मज्ञानम् । [4]तदनन्तरं यत् गुणेषु = शब्दादिविषयेषु वैतृष्ण्यम् = वैराग्यं, तत् परम् = श्रेष्ठम्, फलरूपत्वात् । ततः पूर्वन्त्वपरम्, साधनरूपत्वादित्यर्थः । तस्य च लिङ्गमितरफलनिरपेक्षत्वेन मोक्षमात्रस्पृहयालुत्वम् । यथा मुचुकुन्दस्य—

न कामयेऽन्यन्तव पादसेवना-
दकिञ्चनप्रार्थ्यतमाद्वरं विभो ।
आराध्य कस्त्वामपवर्गदं हरे
वृणीत आर्यो वरमात्मबन्धनम् ॥
तस्माद्विसृज्याऽऽशिष ईश सर्वतो
रजस्तमस्सत्त्वगुणानुबन्धनाः ।

### टिप्पणी

१ एवमिति भूमिकात्रयेत्यस्य विशेषणम् । २ आनुश्रविकेष्विति । अनुश्रवो वेदः तदुक्तेषु । न च स्वर्गादीनामिहेन्द्रियगोचरत्वं न सम्भवतीति वाच्यम्, शब्दद्वारा तेषामपि श्रोत्रग्राह्यत्वात् । ३ भूमिकाक्रमानुसरणादेवाहापरम्परञ्चेत्येवम्, न तु "सामान्यन्द्विविधम्प्रोक्तम्परञ्चापरमेव च" इतिवत् । ४ तदनन्तरमिति । सूत्रे पुरुषख्यातेरिति पञ्चम्यन्तस्यार्थेऽनन्तरमित्यध्याह्रियत इति भावः ।

टीका

निरञ्जनन्निर्गुणमद्वयम्पर-
न्त्वाम्ज्ञप्तिमात्रम्पुरुषं व्रजाम्यहम् ॥
चिरमिह वृजिनार्तस्तप्यमानोऽनुतापै-
रवितृषषडमित्रोऽलब्धशान्तिः कथञ्चित् ।
शरणद समुपेतस्त्वत्पदाब्जम्परात्म-
न्नभयमृतमशोकम्पाहि माऽऽपन्नमीश ॥ इति ॥
(श्री० भा० १० । ५१ । ५६—५८)

एतादृशदशायाञ्च भगवत्प्रेमा न पराङ्काष्ठामधिरोहतीति तदर्थन्तम्प्रति भगवतोक्तम्—

क्षात्रधर्मस्थितो जन्तून्वधीर्मृगयादिभिः ।
समाहितस्तत्तपसा जह्यघम्मदपाश्रयः ॥
जन्मन्यनन्तरे राजन् सर्वभूतसुहृत्तमः ।
भूत्वा द्विजवरस्त्वं वै मामन्ते ब्रह्म यास्यसि ॥ इति ॥
(श्री० भा० १० । ५१ । ६३—६४)

[१]अपरवैराग्यञ्च सूत्रितम्पतञ्जलिना—दृष्टानुश्रविकविषयवितृष्णस्य वशीकारसञ्ज्ञावैराग्यमिति । तेन न [२]प्रेमपरम-

टिप्पणी

१ अपरवैराग्यञ्चेत्यादि। दृष्टानुश्रविकेत्यादिसूत्रं वशीकाराख्यवैराग्यप्रतिपादकतयैव पूर्वमुदाहृतम्, न पुनरपरवैराग्यप्रदर्शकतयेत्यतो न पुनरुक्तिदोषः। न च तत्सूत्रेण सामान्यतो वशीकारसञ्ज्ञावैराग्यस्य लक्षणमुच्यते न त्वपरवैराग्यस्य, अपिच तस्यापरवैराग्यलक्षणसमर्पकत्वे तल्लक्षणस्य परवैराग्येऽतिव्याप्तिस्स्यादिति वाच्यम्, तत्सूत्रस्य यथाश्रुतस्य सामान्यलक्षणबोधकत्वेऽपि परवैराग्यलक्षणप्रतिपादकोत्तरसूत्रेण तस्यापरवैराग्यलक्षणपरताया, लक्षणे पुरुषख्यात्यनुत्तरत्वनिवेशस्य च सूचनात्।
२ प्रेमपरमकाष्ठा = प्रेम्णः परमकाष्ठा ।

टीका

काष्ठेति न तदानीमेव कृतार्थता, परवैराग्याभावेन भक्तिप्रकर्षाभावात्, तस्यैव कृतकृत्यताहेतुत्वादित्यर्थः। परवैराग्यस्य लिङ्गम्मोक्षपर्यन्तसकलफलनिरपेक्षत्वम्। यथा——

इमं लोकन्तथैवामुमात्मानमुभयाऽऽयिनम्।
आत्मानमनु ये चेह ये रायः पशवो गृहाः॥
विसृज्य सर्वानन्यांश्च मा[१]मेकं विश्वतोमुखम्।
भजन्त्यनन्यया भक्त्या तान् मृत्योरतिपारये॥
(श्री० भा० ३। २५। ३९—४०)

सालोक्यसार्ष्टिसामीप्यसारूप्यैकत्वमप्युत।
दीयमानन्न गृह्णन्ति विना मत्सेवनञ्जनाः॥
(श्री० भा० ३। २९। १३)

नैकात्मताम्मे स्पृहयन्ति केचि-
न्मत्पादसेवाभिरता मदीहाः।
येऽन्योन्यतो भागवताः प्रसज्य
सभाजयन्ते मम पौरुषाणि॥
(श्री० भा० ३। २५। ३४)

न पारमेष्ठ्यन्न महेन्द्रधिष्ण्य-
न्न सार्वभौमन्न रसाधिपत्यम्।
न योगसिद्धीरपुनर्भवं वा
मय्यर्पितात्मेच्छति मद्विनाऽन्यत्॥
(श्री० भा० ११। १४। १४)

टिप्पणी

१ यत् पुन"रेव"मिति विदेशीयपुस्तकेषु दृश्यते स न केरळपाठः। बालबोधिन्यान्तु "एवम् = पुत्रादिभावेने"ति क्लिष्टव्याख्यानमवलोक्यते। तदेव लिखितमन्वितार्थप्रकाशिकायाम्।

## टीका

प्रह्लादः—अहन्त्वकामस्त्वद्भक्तस्त्वञ्च स्वाम्यनपाश्रयः।
नान्यथेहावयोरर्थो राजसेवकयोरिव ॥
(श्री० भा० ७।१०।६)

पृथुः— न कामये नाथ तदप्यहङ्क्वचि-
न्न यत्र युष्मच्चरणाम्बुजासवः।
महत्तमान्तर्हृदयान्मुखच्युतो
विधत्स्व कर्णायुतमेष मे वरः॥
(श्री० भा० ४।२०।२४)

ध्रुवः—या निर्वृतिस्तनुभृतान्तव पादपद्म-
ध्यानाद्भवज्जनकथाश्रवणेन वा स्यात्।
सा ब्रह्मणि स्वमहिमन्यपि नाथ मा भूत्
किम्वन्तकासिलुलितात् पततां विमानात्॥
(श्री० भा० ४।९।१०)

महिष्यः—न वयं साध्वि साम्राज्यं स्वाराज्यम्भौज्यमप्युत।
वैराज्यम्पारमेष्ठ्यं वा आनन्त्यं वा हरेः पदम्॥
कामयामह एतस्य श्रीमत्पादरजःश्रियः
कुचकुङ्कुमगन्धाढ्यम्मूर्ध्ना वोढुङ्गदाभृतः॥
(श्री० भा० १०।८३।४१—४२)

इन्द्रः— प्रत्यानीताः परम भवता त्रायता नस्स्वभागा
दैत्याक्रान्तं हृदयकमलन्त्वद्गृहम्प्रत्यबोधि।
कालग्रस्तङ्कियदिदमहो नाथ शुश्रूषतान्ते
मुक्तिस्तेषान्न हि बहुमता नारसिंहापरैः किम्॥
(श्री० भा० ७।८।४२)

टीका

तथा—यस्य भक्तिर्भगवति हरौ निश्रेयसेश्वरे ।
विक्रीडतोऽमृताम्भोधौ किन्तुद्रैः खातकोदकैः ॥
(श्री० भा० ६ । १२ । २२)

वृत्रः—न नाकपृष्ठन्न च पारमेष्ठ्य-
न्न सार्वभौमन्न रसाधिपत्यम् ।
न योगसिद्धीरपुनर्भवं वा
समञ्जस त्वां विरहय्य काङ्क्षे ॥
(श्री० भा० ६ । ११ । २५)

श्रुतयः—दुरवगमात्मतत्त्वनिगमाय तवाऽऽत्ततनो-
श्चरितमहामृताब्धिपरिवर्तपरिश्रमणाः ।
न परिलपन्ति केचिदपवर्गमपीश्वर ते
चरणसरोजहंसकुलसङ्गविसृष्टगृहाः ॥
(श्री० भा० १० । ८७ । २१)

एवम[1]न्यदप्यूहनीयम् । एतादृशे मोक्षपर्यन्तसकलफल-निरपेक्षत्वरूपे परवैराग्ये सति फलान्तरे प्रेम्णोऽनुदयात् परमानन्दरूपे परमात्मन्येव प्रेमा पराङ्काष्ठामारोहति । यथा वृत्रस्य—

टिप्पणी

१ अन्यदपीति ।

न किञ्चित् साधवो धीरा भक्ता ह्येकान्तिनो मम ।
गृह्णन्त्यपि मया दत्तङ्कैवल्यमपुनर्भवम् ॥

इत्यादिकमपीत्यर्थः । क्व मुक्तिः, क्व च भगवद्भक्तिरित्येतत् पञ्चरात्रागमेऽपि सुगमम्—

टीका

अजातपक्षा इव मातरङ्खगा-
स्तन्यँय्यथा वत्सतराः क्षुधार्ताः ।
प्रियम्प्रियेव व्युषितं विषण्णा
मनोऽरविन्दाक्ष दिदृक्षते त्वाम् ॥ इति ।
(श्री० भा० ६ । ११ । २६)

अत एव ज्ञानं विना परवैराग्याभावात्तद्रूते च भगवत्प्रेम-परकाष्ठाभावात्तदर्थं ज्ञानवैराग्ये दृढीकर्तव्ये । तदुक्तम्—

असेवयाऽयम्प्रकृतेर्गुणाना-
ञ्ज्ञानेन वैराग्यविजृम्भितेन ।
योगेन मय्यर्पितया च भक्त्या
माम्प्रत्यगात्मानमिहावरुन्धे ॥
(श्री० भा० ३ । २५ । २७)

ज्ञानवैराग्ययुक्तेन भक्तियोगेन योगिनः ।
क्षेमाय पादमूलम्मे प्रविशन्त्यकुतोभयम् ॥
(श्री० भा० ३ । २५ । ४३)

इत्यच्युताङ्घ्रिम्भजतोऽनुवृत्त्या
भक्तिर्विरक्तिर्भगवत्प्रबोधः ।
भवन्ति वै भागवतस्य राजं-
स्ततः परां शान्तिमुपैति साक्षात् ॥
(श्री० भा० ११ । २ । ४३)

टिप्पणी

हरिभक्तिमहादेव्यास्सर्वा मुक्त्यादिसिद्धयः ।
भुक्तयश्चाद्भुतास्तस्याश्चेटिकाव × दनुव्रताः ॥ इति ।

× अनुसरणमेव व्रतँय्यासान्ता अनुव्रताः ।

टीका

भागवतस्य = भगवद्धर्मानुष्ठातुः प्रथमं भगवत्प्रबोध,स्ततः [1] परं वैराग्य,न्ततः प्रेमलक्षणा भक्तिरित्यर्थः। एतच्च दर्शितमुद्धवाय श्रीभगवता—

ज्ञानिनस्त्वहमेवेष्टस्स्वार्थो हेतुश्च सम्मतः।
स्वर्गश्चैवापवर्गश्च नान्योऽर्थो मदृते प्रियः॥
ज्ञानविज्ञानसम्पन्नाः पदं श्रेष्ठं विदुर्मम।
ज्ञानी प्रियतमोऽतो मे ज्ञानेनासौ बिभर्ति माम्॥
(श्री० भा० ११। १९। २—३)

कीदृशन्तज्ज्ञानमित्याकाङ्क्षायां सङ्क्षेपेण तदुक्तम्—

त्वय्युद्धवाश्रयति यस्त्रिविधो विकारो
माया,ऽन्तराऽऽपतति नाद्यपवर्गयोर्यत्।
जन्मादयोऽस्य यदमी तव तस्य किं स्यु-
राद्यन्तयोर्यदसतोऽस्ति तदेव मध्ये॥
(श्री० भा० ११। १९। ७)

भगवद्व्यतिरिक्तं सर्वमागमापायित्वात् स्वप्नवन्मायिकन्तुच्छन्दुःखरूपञ्चहेयम्। भगवानेव सत्यस्स्वप्रकाशपरमानन्दरूपो नित्यो विभुश्चोपादेय इति ज्ञानमित्यर्थः। श्रीमद्भगवद्गीतासु च तदेवोक्तम्—

चतुर्विधा भजन्ते माञ्जनास्सुकृतिनोऽर्जुन।
आर्तो जिज्ञासुरर्थार्थी ज्ञानी च भरतर्षभ॥
तेषाञ्ज्ञानी नित्ययुक्त एकभक्तिर्विशिष्यते।
प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः॥

टिप्पणी

१ विरक्तिपदस्य विवक्षितार्थमाह—परं वैराग्यमिति।

उदारास्सर्व एवैते ज्ञानी त्वात्मैव मे मतम् ।
आस्थितस्स हि युक्तात्मा मामेवानुत्तमाङ्गतिम् ॥
बहूनाञ्जन्मनामन्ते ज्ञानवान् माम्प्रपद्यते ।
वासुदेवस्सर्वमिति स महात्मा सुदुर्लभः ॥ इति ।
(अ० ७ । श्लो० १६—१९)

[1]वासुदेवातिरिक्तं सर्वं सत्यन्नास्ति मायिकत्वात्, वासुदेव एवात्मत्वात् प्रियतमस्सत्य इत्यर्थः । एतादृशज्ञानपूर्वकवैराग्यञ्च दर्शितम्—

श्रुतिः प्रत्यक्षमैतिह्यमनुमानञ्चतुष्टयम् ।
प्रमाणेष्वनवस्थानाद्विकल्पात् स विरज्यते ॥
[2]कर्मणाम्फलरूपत्वादा विरिञ्चादमङ्गलम् ।
विपश्चिन्नश्वरम्पश्येददृष्टमपि दृष्टवत् ॥
(श्री० भा० ११ । १९ । १७—१८)

टिप्पणी

१ वासुदेवेत्यादि । अत एव
"अद्वैतामृतवर्षिणीम्भगवतीमष्टादशाध्यायिनी-
मम्ब त्वामनुसन्दधामि भगवद्गीते भवद्वेषिणि ।" इति ।

२ कर्मणां यत् फलं तस्य रूपमाकारस्तत्त्वात् । चैत्रस्य गुरुकुलमित्यादिवदेकदेशान्वयोऽत्र न दोषः । फलरूपत्वादित्येव केरळेषु तालपत्रपुस्तकपाठः । यत्तु परिणामित्वादित्येवमदाक्षिणात्यपुस्तकेषु दृश्यते, तदसाम्प्रतम् । केचित्तु बालबोधिनीकारादयः "कर्मणाम् = स्वर्गादिजनकानाँय्यज्ञादीनां परिणामित्वात् = नश्वरत्वाद्धेतोः" इति व्याचक्षते । तथा सति विद्याया नश्वरत्वात्तत्फलभूताया अविद्यातत्कार्यनिवृत्तेः "विद्वान्नामरूपाद्विमुक्तः" इत्यादिश्रुतिप्रतिपादिताया अमङ्गलत्वन्नश्वरत्वञ्चापद्येत । स्वामिश्रीचरणैरविवृतत्वादपि परिणामित्वपाठस्य कृत्रिमत्वमवगम्यते । केरळपाठस्य तु न केवलमहेयत्वमात्रम्, अपितु "तद्यथेह कर्मचितो

## टीका

तथाऽन्यत्र—

कर्माण्यारभमाणानां दुःखहत्यै सुखाय च ।
पश्येत् पाकविपर्यासं मिथुनीचारिणां नृणाम् ॥
नित्यार्तिदेन वित्तेन दुर्लभेनात्ममृत्युना ।
गृहापत्याप्तपशुभिः का प्रीतिस्साधितैश्चलैः ॥
एवं लोकम्परं विद्यान्नश्वरङ्कर्मनिर्मितम् ।
सतुल्यातिशयध्वंसँय्यथा मण्डलवर्तिनाम् ॥ इति ।
(श्री० भा० ११ । ३ । १८—२०)

कीदृशभगवद्धर्मानुष्ठातुर्ज्ञानवैराग्यपूर्विका भगवति भक्तिरुदेतीत्याकाङ्क्षायामुक्तम्—

यद्यनीशो धारयितुं मनो ब्रह्मणि निश्चलम् ।
मयि सर्वाणि कर्माणि निरपेक्षस्समाचर ॥
श्रद्धालुर्मे कथाश्शृण्वन् सुभद्रा लोकपावनीः ।
गायन्ननुस्मरञ्जन्म कर्म चाभिनयन् मुहुः ॥
मदर्थे धर्मकामार्थानाचरन् मदपाश्रयः ।
लभते निश्चलाम्भक्तिम्मय्युद्धव सनातने ॥
(श्री० भा० ११ । ११ । २२—२४)

तथा—

### टिप्पणी

लोकः चीयते" इत्यादिश्रुत्यनुग्रहोऽपि । परिणामत्वादिति प्राच्यपुस्तकपाठः पुनः कथञ्चित् सह्यते, परिणामत्वारोपस्य फलत्वे पर्यवसानात् । वीक्ष्यते च समनन्तरोदाहरणेषु—

एवं लोकम्परं विद्यान्नश्वरङ्कर्मनिर्मितम् । इति ।

टीका

भक्तियोगः पुरैवोक्तः प्रीयमाणाय तेऽनघ ।
पुनश्च कथयिष्यामि मद्भक्तेः कारणम्परम् ॥
श्रद्धाऽमृतकथायाम्मे शश्वन्मदनुकीर्तनम् ।
परिनिष्ठा च पूजायां स्तुतिभिस्स्तवनम्मम ॥
आदरः परिचर्यायां सर्वाङ्गैरभिवन्दनम् ।
मद्भक्तपूजाऽभ्यधिका सर्वभूतेषु मन्मतिः ॥
मदर्थेष्वङ्गचेष्टा च वचसा मद्गुणेरणम् ।
मय्यर्पणञ्च मनसस्सर्वकामविवर्जनम् ॥
मदर्थेऽर्थपरित्यागो भोगस्य च सुखस्य च ।
इष्टन्दत्तं हुतञ्जप्तम्मदर्थंय्यँद्व्रतन्तपः ॥
एवन्धर्मैर्मनुष्याणामुद्धवात्मनिवेदिनाम् ।
मयि सञ्जायते भक्तिः कोऽन्योऽर्थोऽस्यावशिष्यते ॥

(श्री० भा० ११ । १९ । १९—२४)

तथाऽन्यत्र—

तस्माद्गुरुम्प्रपद्येत जिज्ञासुश्श्रेय उत्तमम् ।
शाब्दे परे च निष्णातम्ब्रह्मण्युपशमाश्रयम् ॥
तत्र भागवतान्धर्माञ्छिक्षेद्गुर्वात्मदैवतः ।
अमाययाऽनुवृत्त्या यैस्तुष्येदात्माऽऽत्मदो हरिः ॥
सर्वतो मनसोऽसङ्गमादौ सङ्गञ्च साधुषु ।
दयाम्मैत्रीम्प्रश्रयञ्च भूतेष्वद्धा यथोचितम् ॥
शौचन्तपस्तितिक्षाञ्च मौनं स्वाध्यायमार्जवम् ।
ब्रह्मचर्यमहिंसाञ्च समत्वन्द्वन्द्वसञ्ज्ञयोः ॥
सर्वत्रात्मेश्वरान्वीक्षाङ्कैवल्यमनिकेतताम् ।
विविक्तचीरवसनं सन्तोषँय्येन केनचित् ॥

टीका

[1] श्रद्धाम्भागवते शास्त्रे ह्यनिन्दाऽन्यत्र चापि हि ।
मनोवाक्कर्मदण्डश्च सत्यं शमदमावपि ॥
श्रवणङ्कीर्तनन्ध्यानं हरेरद्भुतकर्मणः ।
जन्मकर्मगुणानाञ्च तदर्थेऽखिलचेष्टितम् ॥
इष्टन्दत्तन्तपो जप्तं वृत्तँय्यच्चात्मनः प्रियम् ।
दारान् सुतान् गृहान् प्राणान् यत् परस्मै निवेदनम् ॥
एवङ्कृष्णात्मनाथेषु मनुष्येषु च सौहृदम् ।
परिचर्या(र्यां) चोभयत्र महत्सु नृषु साधुषु ॥
परस्परानुकथनम्पावनम्भगवद्यशः ।
मिथो रतिर्मिथस्तुष्टिर्निवृत्तिर्मिथ आत्मनः ॥
स्मरन्तस्स्मारयन्तश्च मिथोऽघौघहरं हरिम् ।
भक्त्या सञ्जातया भक्त्या बिभ्रत्युत्पुळकान्तनुम् ॥
क्वचिद्रुदन्त्यच्युतचिन्तया क्वचि-
द्धसन्ति नन्दन्ति नम(वद)न्त्यलौकिकाः ।
नृत्यन्ति गायन्त्यनुशीलयन्त्यज-
म्भवन्ति तूष्णीम्परमेत्य निर्वृताः ॥
इति भागवतान्धर्माञ्छिक्षन् भक्त्या तदुत्थया ।
नारायणपरो मायामञ्जस्तरति दुस्तराम् ॥ इति ।
(श्री० भा० ११ । ३ । २१—३३)

टिप्पणी

१ भागवते = भगवत्प्रतिपादके हि = एव शास्त्रे श्रद्धां शिक्षेदिति प्रथमवाक्यान्वयः । ह्यनिन्देत्येव शास्त्र इत्यनन्तरं केरळपाठः । स एव शान्दिकतिलकैर्व्याशास्त्रिमहाशयैरस्मभ्य मुपदिष्टः । तमेव च पाठमभिसन्धाय स्वामिश्रीचरणैः "या अनिन्दा ता"मिति यत्तत्पदाध्याहारेणान्वयो दर्शितः । शास्त्रेऽनिन्दामिति तु दुस्सह एव देशान्तरपाठः ।

[1]उपायाः प्रथमस्कन्धे नारदेनोपवर्णिताः ।
सङ्क्षेपात्तानहँव्वक्ष्ये भूमिभेदविभागतः ॥ ३३ ॥
प्रथमम्महतां सेवा, तद्दयापात्रता ततः, ।
श्रद्धाऽथ तेषान्धर्मेषु, ततो हरिगुणश्रुतिः, ॥ ३४ ॥
ततो रत्यङ्कुरोत्पत्ति,स्स्वरूपाधिगतिस्ततः, ।
प्रेमवृद्धिः परानन्दे, तस्याथ स्फुरणं,न्ततः ॥ ३५ ॥
भगवद्धर्मनिष्ठा,ऽतस्स्वस्मिंस्तद्गुणशालिता, ।
प्रेम्णोऽथ परमा [2]काष्ठेत्युदिता भक्तिभूमिकाः ॥ ३६ ॥

टीका

[3]तस्मादेवंविधैश्शास्त्रीयैरुपायैर्मनश्शुद्धिं सम्पादयेदित्यर्थः ॥ ३२ ॥

[4]शास्त्रीयानेवोपायान् [5]प्रतिपन्नजनबुद्धिसौकर्याय भूमिकाभेदेन वक्तुम्प्रतिजानीते—उपाया इति । स्पष्टम् ॥ ३३ ॥

तानेवाह—प्रथममित्यादि । यथा व्यासनारदसंवादे नारदः—

टिप्पणी

१ उपाया इति । प्रथमस्कन्धपञ्चमाध्यायचतुस्त्रिंशश्लोकव्याख्यानान्ते "अत्र चे"त्यारभ्य भावार्थदीपिकायामुपायास्सङ्गृहीता वर्तन्ते । २ काष्ठा = स्थितिरुत्कर्षो वा । ३ तस्मात् = उक्तरीत्या शास्त्रीयोपायैस्साधिताया एव मनसो भगवदाकारताया विषयाकारतानिवर्तकत्वात् । मनसश्शुद्धिम् विषयाकारतानिवृत्तिरूपाम् । ४ उक्तविधेषु शास्त्रीयोपायेषु सत्सु त्रयस्त्रिंशादिकारिकाणाम्प्रवृत्तेः फलं वदंस्त्रयस्त्रिंशकारिकामवतारयति—शास्त्रीयानिति । ५ प्रतिपन्नजनानाम् = अङ्गीकृतजनानाम् । शिष्याणामिति

टीका

अहम्पुराऽतीतभवेऽभवम्मुने
दास्यास्तु कस्याश्चन वेदवादिनाम् ।
निरूपितो बालक एव योगिनां
शुश्रूषणे प्रावृषि निर्विविक्षताम् ॥

ते मय्यपेताखिलचापलेऽर्भके
दान्तेऽधृतक्रीडनकेऽनुवर्तिनि ।
चक्रुः कृपाँय्यद्यपि तुल्यदर्शनाः
शुश्रूषमाणे मुनयोऽल्पभाषिणि ॥

उच्छिष्टलेपाननुमोदितो द्विजै-
स्सकृत् स्म भुञ्जे तदपास्तकिल्बिषः ।
एवम्प्रवृत्तस्य विशुद्धचेतस-
स्तद्धर्म एवात्मरुचिः प्रजायते ॥

तत्राऽन्वहङ्कृष्णकथाः प्रगायता-
मनुग्रहेणाश्रृणवम्मनोहराः ॥
ताश्श्रद्धया मेऽनुपदं विश्रृणवतः
प्रियश्रवस्यङ्ग ममाभवद्रुचिः ॥

तस्मिंस्तदा लब्धरुचेर्महामुने(मते)
प्रियश्रवस्यस्खलिता मतिर्मम ।
ययाऽहमेतत् सदसत् स्वमायया
पश्ये मयि ब्रह्मणि कल्पितम्परे ॥

टिप्पणी

वावत् । बुद्धिसौकर्याय = अनायासेन ज्ञानाय ।

प्रतिपन्नोऽन्यलिङ्गस्स्याद्विज्ञातेऽङ्गीकृतेऽपि च ।

इति मेदिनी ।

टीका

इत्थं शरत्प्रावृषिकावृतू हरे-
र्विशृण्वतो मेऽनुसवँ्ष्यशोऽमलम् ।
सङ्कीर्त्यमानम्मुनिभिर्महात्मभि-
र्भक्तिः प्रवृत्ताऽऽत्मरजस्तमोपहा ॥

तस्यैवम्मेऽनुरक्तस्य प्रश्रितस्य हतैनसः ।
श्रद्दधानस्य बालस्य दान्तस्यानुचरस्य च ॥

ज्ञानङ्गुह्यतमँय्यत्तत् साक्षाद्भगवतोदितम् ।
अन्ववोचन् गमिष्यन्तः कृपया दीनवत्सलाः ॥

येनैवाहम्भगवतो वासुदेवस्य वेधसः ।
मायानुभावमविदँय्येन गच्छन्ति तत्पदम् ॥

एतत् संसूचितम्ब्रह्मंस्तापत्रयचिकित्सितम् ।
यदीश्वरे भगवति कर्म ब्रह्मणि भावितम् ॥

आमयो यश्च भूतानाञ्जायते येन सुव्रत ।
तदेव ह्यामयन्द्रव्यन्न पुनाति, चिकित्सितम् ॥
एवन्नृणाङ्क्रियायोगास्सर्वे संसृतिहेतवः ।
त एवात्मविनाशाय कल्पन्ते कल्पिताः परे ॥
यदत्र क्रियते कर्म भगवत्परितोषणम् ।
ज्ञानँय्यत्तदधीनं हि भक्तियोगसमन्वितम् ॥
कुर्वाणा यत्र कर्माणि भगवच्छिक्षयाऽसकृत् ।
गृणन्ति गुणनामानि कृष्णस्यानुस्मरन्ति च ॥
नमो भगवते तुभ्यं वासुदेवाय धीमहि ।
प्रद्युम्नायानिरुद्धाय नमस्सङ्कर्षणाय च ॥
इति मूर्त्यभिधानेन मन्त्रमूर्तिममूर्तिकम् ।
यजते यज्ञपुरुषं स सम्यग्दर्शनः पुमान् ॥

टीका

इमं स्वनिगमम्ब्रह्मन्नवेत्य मदनुष्ठितम् ।
अदान्मे ज्ञानमैश्वर्यं स्वस्मिन् भावञ्च केशवः ॥
(श्री० भा० १ । ५ । २३—३९)

[1] महत्सेवा द्विविधा—भगवद्भक्तसेवा साक्षाद्भगवत्सेवा च । तत्राद्या यथा—

महत्सेवान्द्वारमाहुर्विमुक्ते-
स्तमोद्वारँय्योषितां सङ्गिसङ्गम् ।
महान्तस्ते समचित्ताः प्रशान्ता
विमन्यवस्सुहृदस्साधवो ये ॥
ये वा मयीशे कृतसौहृदार्था
जनेषु देहम्भरवार्तिकेषु ।
गृहेषु जायात्मजरातिमत्सु ।
न प्रीतियुक्ता यावदर्थाश्च लोके ॥
(श्री० भा० ५ । ५ । २—३)

तथा—

प्रसङ्गमजरम्पाशमात्मनः कवयो विदुः ।
स एव साधुषु कृतो मोक्षद्वारमपावृतम् ॥
तितिक्षवः कारुणिकास्सुहृदस्सर्वदेहिनाम् ।
अजातशत्रवश्शान्तास्साधवस्साधुभूषणाः ॥

टिप्पणी

१ प्रथमम्महतां सेवेत्यादिमतया मूलभणिताम्भक्तिभूमिकां विवृणोति—महत्सेवेत्यादिना । तत्रादौ भगवत्तद्भक्तभेदेन महद्द्वैविध्यान्महत्सेवाया द्वैविध्यमाह । भक्तसेवाया अपि भगवत्सेवात्वात्तद्व्यावृत्तये साक्षादिति । भक्तप्रीत्यद्वारा भगवत्प्रीतिजनको व्यापार इति साक्षाद्भगवत्सेवेत्यस्यार्थः । तत्र तात्पर्यसुगमत्वादेव प्रथमतो भक्तसेवाग्रहणम् ।

टीका

मय्यनन्येन भावेन भक्तिङ्कुर्वन्ति ये दृढाम् ।
मत्कृते त्यक्तकर्माणस्त्यक्तस्वजनबान्धवाः ॥
मदाश्रयाः कथा मृष्टाश्शृण्वन्ति कथयन्ति च ।
तपन्ति विविधास्तापा नैतान् मद्गतचेतसः ॥
त एते साधवस्साध्वि सर्वसङ्गविवर्जिताः ।
सङ्गस्तेष्वथ ते प्रार्थ्यस्सङ्गदोषहरा हि ते ॥
(श्री० भा० ३ । २५ । २०—२४)

तथा—

यत्पादसंश्रयास्सूत मुनयः प्रशमायनाः ।
सद्यः पुनन्त्युपस्पृष्टास्स्वर्धुन्यापोऽनुसेवया ॥
(श्री० भा० १ । १ । १५)

तुलयाम लवेनापि न स्वर्गन्नापुनर्भवम् ।
भगवत्सङ्गिसङ्गस्य मर्त्यानाङ्किमुताशिषः ॥
(श्री० भा० १ । १८ । १३)
(श्री० भा० ४ । ३० । ३४)

तथा—

दुर्लभो मानुषो देहो देहिनाङ्क्षणभङ्गुरः ।
तत्रापि दुर्लभम्मन्ये वैकुण्ठप्रियदर्शनम् ॥
अत आत्यन्तिकङ्क्षेमम्पृच्छामो भवतोऽनघाः ।
संसारेऽस्मिन् क्षणार्धोऽपि सत्सङ्गश्शेवधिर्नृणाम् ॥
(श्री० भा० ११ । २ । २९—३०)

तथा—

न रोधयति माँय्योगो न साङ्ख्यन्धर्म एव च ।
न स्वाध्यायस्तपस्त्यागो नेष्टापूर्तन्न दक्षिणा ॥

टीका

व्रतानि यज्ञश्छन्दांसि तीर्थानि नियमा यमाः ।
यथाऽवरुन्धे सत्सङ्गस्सर्वसङ्गापहो हि माम् ॥
सत्सङ्गेन हि दैतेया यातुधाना मृगाः खगाः ।
गन्धर्वाप्सरसो नागास्सिद्धचारणगुह्यकाः ॥
विद्याधरा, मनुष्येषु वैश्याश्शूद्रास्त्रियोऽन्त्यजाः ।
रजस्तमःप्रकृतयस्तस्मिंस्तस्मिन् युगेऽनघ ।
बहवो मत्पदम्प्राप्तास्त्वाष्ट्रकायाधवादयः ॥

साक्षाद्भगवत्सेवा यथा—

वृषपर्वा बलिर्बाणो मयश्चाथ विभीषणः ।
सुग्रीवो हनुमानृक्षो गजो गृध्रो वणिक्पथः ॥
व्याधः कुब्जा व्रजे गोप्यो यज्ञपत्न्यस्तथा परे ।
ते नाधीतश्रुतिगणा नोपासितमहत्तमाः ।
अव्रतातप्ततपसो [1]मत्सङ्गान्मामुपागताः ॥
केवलेन हि भावेन गोप्यो गावो नगा मृगाः ।
येऽन्ये मूढधियो नागास्सिद्धा मामीयुरञ्जसा ॥

टिप्पणी

१ सत्सङ्गादित्यस्य बालबोधिन्यादिपरिकलितस्य बहुषु पुस्तकेष्वा-पठितत्वेऽपि मत्सङ्गादित्येव स्वामिश्रीचरणानाम्पाठ इति भावार्थदीपिकाया-मेतत्पाठस्य सत्सङ्गप्रकरणगतस्य विवोपपादितत्वादवगम्यते । अस्ति च हस्तलिखितपुस्तकेषु केरळगतेष्वयमेव पाठो, भावार्थदीपिकायामपि तत्पुस्तकस्थायां "मत्सङ्गादिती"त्येवानुवादो न पुनरुदीच्यपुस्तकवत् "सत्सङ्गादिती"ति । नारायणीयस्तोत्रेऽपि प्रकृतस्थले "त्वत्सङ्गेने"त्येव चतुर्नवतितमदशकस्य चरमपद्ये विद्यते, न तु सत्सङ्गेनेति ।

## टीका

यन्न योगेन साङ्ख्येन दानव्रततपोऽध्वरैः।
व्याख्यास्वाध्यायसन्न्यासैः प्राप्नुयाद्यत्नवानपि॥
(श्री० भा० ११। १२। १—९)

मत्कामा रमणञ्जारमस्वरूपविदोऽबलाः।
ब्रह्म मांपरमम्प्रापुस्सङ्गाच्छतसहस्रशः॥
तस्मात्त्वमुद्धवोत्सृज्य चोदनाम्प्रतिचोदनाम्।
प्रवृत्तञ्च निवृत्तञ्च श्रोतव्यं श्रुतमेव च॥
मामेकमेव शरणमात्मानं सर्वदेहिनाम्।
याहि सर्वात्मभावेन मया स्या ह्यकुतोभयः॥
(श्री० भा० ११। १२। १३—१५

[1]तदयमत्र निष्कर्षः— [2]भगवत्सङ्गं वा भगवत्सङ्गिसङ्गं वा यथायोग्यमन्तरेण न भगवति भक्तिरुदेति। एतावांस्तु विशेषः—भगवत्सङ्गिनाङ्कृतार्थत्वान्नान्यसङ्गापेक्षा। भगवत्सङ्गिसङ्गिनान्तु विद्यत एव फलतया भगवत्सङ्गापेक्षेति व्याख्याता द्विविधा महत्सेवा।

### टिप्पणी

१ उक्तप्रकारस्य महत्सेवाविभागस्य प्रयोजको यो भगवत्तद्भक्तसङ्गयोर्भगवद्भक्त्युपयोगिनोर्विशेषस्तद्रूपन्निष्कर्षम्भाषमाणो द्विविधमहत्सेवाविवरणमुपसंहरति—तदयमित्यादि। तदित्यव्ययस्य तथासति = द्विविधाया अपि महत्सेवायाश्शास्त्रीयत्वे सतीत्यर्थः। यद्वा तदयमित्येकम्पदम्। स चासावयञ्चेति विग्रहात् सोऽयमित्यर्थः। शास्त्रप्रसिद्धोऽयन्निष्कर्षोऽत्र वर्तत इति वाक्यार्थः। २ ×साक्षाद्भगवत्सङ्गमित्यर्थः। एवमग्रेऽपि।

× साक्षाद्यो भगवत्सङ्गस्तमित्यर्थः।

टीका

तद्दयापात्रता ततः। तेषाम्=महतान्दया [1]स्वविषया स्वकीयैस्सुशीलतादिगुणैर्भवति। ते च गुणा भगवतोक्ताः—

कृपालुरकृतद्रोहस्तितिक्षुस्सर्वदेहिनाम्।
सत्यसारोऽनवद्यात्मा समस्सर्वोपकारकः॥
कामैरहतधीर्दान्तो मृदुश्शुचिरकिञ्चनः।
अनीहो मितभुक् शान्तस्स्थिरो मच्छरणो मुनिः॥
अप्रमत्तो गभीरात्मा धृतिमाञ्जितषड्गुणः।
अमानी मानदः कल्पो मैत्रः कारुणिकः कविः॥

(श्री० भा० ११।११।२९—३१

तथा—

मदभिज्ञं गुरुं शान्तमुपासीत मदात्मकम्।
अमान्यमत्सरो दक्षो निर्ममो दृढसौहृदः॥
असत्वरोऽर्थजिज्ञासुरनसूयुरमोघवाक्।
जायापत्यगृहक्षेत्रस्वजनद्रविणादिषु॥
उदासीनस्समम्पश्यन् सर्वेष्वर्थमिवात्मनः॥

(श्री० भा० ११।१०।५—७)

इत्यादि। उदाहरणम्प्रह्लादः। यथा—

तस्य दैत्यपतेः पुत्राश्चत्वारः परमाद्भुताः।
प्रह्लादोऽभून्महांस्तेषाङ्गुणैर्महदुपासकः॥
ब्रह्मण्यश्शीलसम्पन्नस्सत्यसन्धो जितेन्द्रियः।
आत्मवत् सर्वभूतानामेकः प्रियसुहृत्तमः॥

टिप्पणी

[1] स्वः=साधकः।

टीका

दासवत् सन्नतार्याङ्घ्रिः पितृवद्दीनवत्सलः।
भ्रातृवत् सदृशे स्निग्धो गुरुष्वीश्वरभावनः।
विद्यार्थरूपजन्माढ्यो मानस्तम्भविवर्जितः॥
नोद्विग्नचित्तो व्यसनेषु निस्पृह-
श्श्रुतेषु दृष्टेषु गुणेष्ववस्तुदृक्।
दान्तेन्द्रियप्राणशरीरधीस्सदा
प्रशान्तकामो रहिताऽऽसुरोऽसुरः॥
(श्री० भा० ७। ४। ३०—३३)

एतादृशशिष्यगुणाभावे तु जातोऽपि महत्तमसङ्गो [1] निरर्थक इति तद्दयापात्रता भवति द्वितीया भूमिका। सापि द्विविधा— [2] स्वप्रयत्नानपेक्षा तत्सापेक्षा च। तत्राद्या यथा—

तप्तहेमनिकायाभं शितिकण्ठन्त्रिलोचनम्।
प्रसादसुमुखं वीक्ष्य प्रणेमुर्जातकौतुकाः॥
स तान् प्रपन्नार्तिहरो भगवान्धर्मवत्सलः।
धर्मज्ञाञ्छीलसम्पन्नान् प्रीतान् प्रीत उवाच ह॥

श्रीरुद्र उवाच——
यूयं वेदिषदः पुत्रा विदितं वश्चिकीर्षितम्।
अनुग्रहाय भद्रं व एवम्मे दर्शनङ्कृतम्॥

टिप्पणी

१ निरर्थक इति। महद्दयापात्रत्वासम्भवेन महद्धर्मश्रद्धाद्यसम्भवान्निष्फल इत्यर्थः। २ यद्यपि स्वप्रयत्नस्यापेक्षायाः प्रतियोगिविषया प्रथमोपस्थितिरिति तत्सहितैवादावुपादातुँ युक्ततया भाति न तु तद्रहिता, तथापि निरतिशयपुण्यसाध्यायास्स्वप्रयत्ननिरपेक्षाया एव महद्दयापात्रताया अन्यापेक्षया मुख्यत्वात् सैवादावुपात्तेत्यवगमनीयम्।

टीका

तद्दयापात्रता ततः। तेषाम्=महतान्दया [1]स्वविषया स्वकीयैस्सुशीलतादिगुणैर्भवति। ते च गुणा भगवतोक्ताः—

कृपालुरकृतद्रोहस्तितिक्षुस्सर्वदेहिनाम्।
सत्यसारोऽनवद्यात्मा समस्सर्वोपकारकः॥
कामैरहतधीर्दान्तो मृदुश्शुचिरकिञ्चनः।
अनीहो मितभुक् शान्तस्थिरो मच्छरणो मुनिः॥
अप्रमत्तो गभीरात्मा धृतिमाञ्जितषड्गुणः।
अमानी मानदः कल्पो मैत्रः कारुणिकः कविः॥

(श्री० भा० ११। ११। २९—३१

तथा—

मदभिज्ञङ्गुरुं शान्तमुपासीत मदात्मकम्।
अमान्यमत्सरो दक्षो निर्ममो दृढसौहृदः॥
असत्वरोऽर्थजिज्ञासुरनसूयुरमोघवाक्।
जायापत्यगृहक्षेत्रस्वजनद्रविणादिषु॥
उदासीनस्समम्पश्यन् सर्वेष्वर्थमिवात्मनः॥

(श्री० भा० ११। १०। ५—७)

इत्यादि। उदाहरणम्प्रह्लादः। यथा—

तस्य दैत्यपतेः पुत्राश्चत्वारः परमाद्भुताः।
प्रह्लादोऽभून्महांस्तेषाङ्गुणैर्महदुपासकः॥
ब्रह्मण्यश्शीलसम्पन्नस्सत्यसन्धो जितेन्द्रियः।
आत्मवत् सर्वभूतानामेकः प्रियसुहृत्तमः॥

टिप्पणी

१ स्वः=साधकः।

टीका

दासवत् सन्नतार्याङ्घ्रिः पितृवद्दीनवत्सलः ।
भ्रातृवत् सदृशे स्निग्धो गुरुष्वीश्वरभावनः ।
विद्यार्थरूपजन्माढ्यो मानस्तम्भविवर्जितः ॥
नोद्विग्नचित्तो व्यसनेषु निस्पृहः
श्रुतेषु दृष्टेषु गुणेष्ववस्तुदृक् ।
दान्तेन्द्रियप्राणशरीरधीस्सदा
प्रशान्तकामो रहिताऽऽसुरोऽसुरः ॥
(श्री० भा० ७ । ४ । ३०—३३)

एतादृशशिष्यगुणाभावे तु जातोऽपि महत्तमसङ्गो [1] निरर्थक इति तद्दयापात्रता भवति द्वितीया भूमिका । सापि द्विविधा— [2] स्वप्रयत्नानपेक्षा तत्सापेक्षा च । तत्राद्या यथा—

तप्तहेमनिकायाभं शितिकण्ठन्त्रिलोचनम् ।
प्रसादसुमुखं वीक्ष्य प्रणेमुर्जातकौतुकाः ॥
स तान् प्रपन्नार्तिहरो भगवान्धर्मवत्सलः ।
धर्मज्ञाञ्छीलसम्पन्नान् प्रीतान् प्रीत उवाच ह ॥

श्रीरुद्र उवाच——
यूयं वेदिषदः पुत्रा विदितं वश्चिकीर्षितम् ।
अनुग्रहाय भद्रं व एवम्मे दर्शनङ्कृतम् ॥

टिप्पणी

१ निरर्थक इति । महद्दयापात्रत्वासम्भवेन महद्धर्मश्रद्धाद्यसम्भवान्निष्फल इत्यर्थः । २ यद्यपि स्वप्रयत्नस्यापेक्षायाः प्रतियोगिविधया प्रथमोपस्थितिरिति तत्सहितैवादावुपादातुँम्युक्ततया भाति न तु तद्रहिता, तथापि निरतिशयपुण्यसाध्यायास्स्वप्रयत्ननिरपेक्षाया एव महद्दयापात्रताया अन्यापेक्षया मुख्यत्वात् सैवादावुपात्तेत्यवगमनीयम् ।

टीका

तद्दयापात्रता ततः । तेषाम्=महतान्दया [1] स्वविषया स्वकीयैस्सुशीलतादिगुणैर्भवति । ते च गुणा भगवतोक्ताः—

कृपालुरकृतद्रोहस्तितिक्षुस्सर्वदेहिनाम् ।
सत्यसारोऽनवद्यात्मा समस्सर्वोपकारकः ॥
कामैरहतधीर्दान्तो मृदुश्शुचिरकिञ्चनः ।
अनीहो मितभुक् शान्तस्थिरो मच्छरणो मुनिः ॥
अप्रमत्तो गभीरात्मा धृतिमाञ्जितषड्गुणः ।
अमानी मानदः कल्पो मैत्रः कारुणिकः कविः ॥

(श्री० भा० ११ । ११ । २९—३१

तथा—

मदभिज्ञं गुरुं शान्तमुपासीत मदात्मकम् ।
अमान्यमत्सरो दक्षो निर्ममो दृढसौहृदः ॥
असत्वरोऽर्थजिज्ञासुरनसूयुरमोघवाक् ।
जायापत्यगृहक्षेत्रस्वजनद्रविणादिषु ॥
उदासीनस्समम्पश्यन् सर्वेष्वर्थमिवात्मनः ॥

(श्री० भा० ११ । १० । ५—७)

इत्यादि । उदाहरणम्प्रह्लादः । यथा—

तस्य दैत्यपतेः पुत्राश्चत्वारः परमाद्भुताः ।
प्रह्लादोऽभून्महांस्तेषाङ्गुणैर्महदुपासकः ॥
ब्रह्मण्यश्शीलसम्पन्नस्सत्यसन्धो जितेन्द्रियः ।
आत्मवत् सर्वभूतानामेकः प्रियसुहृत्तमः ॥

टिप्पणी

१ स्वः = साधकः ।

### टीका

दासवत् सन्नतार्याङ्घ्रिः पितृवद्दीनवत्सलः ।
भ्रातृवत् सदृशे स्निग्धो गुरुष्वीश्वरभावनः ।
विद्यार्थरूपजन्माढ्यो मानस्तम्भविवर्जितः ॥
नोद्विग्नचित्तो व्यसनेषु निस्पृह-
श्श्रुतेषु दृष्टेषु गुणेष्ववस्तुदृक् ।
दान्तेन्द्रियप्राणशरीरधीस्सदा
प्रशान्तकामो रहिताऽऽसुरोऽसुरः ॥
(श्री० भा० ७ । ४ । ३०—३३)

एतादृशशिष्यगुणाभावे तु जातोऽपि महत्तमसङ्गो [1] निरर्थक इति तद्दयापात्रता भवति द्वितीया भूमिका । सापि द्विविधा— [2] स्वप्रयत्नानपेक्षा तत्सापेक्षा च । तत्राद्या यथा—

तप्तहेमनिकायाभं शितिकण्ठन्त्रिलोचनम् ।
प्रसादसुमुखं वीक्ष्य प्रणेमुर्जातकौतुकाः ॥
स तान् प्रपन्नार्तिहरो भगवान्धर्मवत्सलः ।
धर्मज्ञाञ्छीलसम्पन्नान् प्रीतान् प्रीत उवाच ह ॥

श्रीरुद्र उवाच——
यूयं वेदिषदः पुत्रा विदितं वश्चिकीर्षितम् ।
अनुग्रहाय भद्रं व एवम्मे दर्शनङ्कृतम् ॥

### टिप्पणी

१ निरर्थक इति । महद्दयापात्रत्वासम्भवेन महद्धर्मश्रद्धाद्यसम्भवान्निष्फल इत्यर्थः । २ यद्यपि स्वप्रयत्नस्यापेक्षायाः प्रतियोगिविधया प्रथमोपस्थितिरिति तत्सहितैवादावुपादातुँय्युक्ततया भाति न तु तद्रहिता, तथापि निरतिशयपुण्यसाध्यायास्स्वप्रयत्ननिरपेक्षाया एव महद्दयापात्रताया अन्यापेक्षया मुख्यत्वात् सैवादावुपात्तेत्यवगमनीयम् ।

टीका

यः परं रंहसस्साक्षात्त्रिगुणाज्जीवसञ्ज्ञितात् ।
भगवन्तं वासुदेवम्प्रपन्नस्स प्रियो हि मे ॥
स्वधर्मनिष्ठश्शतजन्मभिः पुमान्
विरिञ्चतामेति ततः परं हि माम् ।
अव्याकृतम्भागवतोऽथ वैष्णव-
म्पदँय्यथाऽहं विबुधाः कलात्यये ॥
अथ भागवता यूयम्प्रियास्थ भगवान् यथा ।
न मद्भागवतानाञ्च प्रेयानन्योऽस्ति कर्हिचित् ॥
इदं विविक्तञ्जप्तव्यम्पवित्रम्मङ्गलम्परम् ।
निश्श्रेयसकरञ्चापि श्रूयतान्तद्वदामि वः ॥
इत्यनुक्रोशहृदयो भगवानाह ताञ्छिवः ।
बद्धाञ्जलीन्राजपुत्रान्नारायणपरो वचः ॥
(श्री० भा० ४ । २४ । २५—३२)

इत्यादौ [१] रुद्रप्रचेतस्संवादे । यथा वा——
ते मय्यपेताखिलचापलेऽर्भके इत्यत्र ।
(श्री० भा० १ । ५ । २४)

[२] स्वप्रयत्नापेक्षा यथा ध्रुवनारदसंवादे——
ध्रुवः—सोऽयं शमो भगवता सुखदुःखहतात्मनाम् ।
दर्शितः कृपया पुंसान्दुर्दर्शोऽस्मद्विधैस्तु यः ॥
अथापि मेऽविनीतस्य क्षात्रङ्घोरमुपेयुषः ।
सुरुच्या दुर्वचोबाणैर्न भिन्ने श्रयते हृदि ॥

टिप्पणी

१ रुद्रश्च प्रचेतसश्च रुद्रप्रचेतसः तेषां संवादे । संवादस्तु प्रचेतसामुक्तभावाच्च मुख्य इति बोध्यम् । २ स्वप्रयत्नमपेक्षत इति स्वप्रयत्नापेक्षेति अप्रत्ययघटित उपपदसमासः ।

### टीका

पदन्त्रिभुवनोत्कृष्टञ्जिगीषोस्साधुवर्त्म मे ।
ब्रूह्यस्मत्पितृभिर्ब्रह्मन्नन्यैरप्यनधिष्ठितम् ॥
नूनम्भवान् भगवतो योऽङ्गजः परमेष्ठिनः ।
वितुदन्नटते वीणां हिताय जगतोऽर्कवत् ॥

मैत्रेयः—इत्युदीरितमाकर्ण्य भगवान्नारदस्तदा ।
प्रीतः प्रत्याह तम्बालं सद्वाक्यमनुकम्पया ॥

श्रीनारदः—जनन्याऽभिहितः पन्थास्स वै निश्श्रेयसस्य ते ।
भगवान् वासुदेवस्तम्भज तत्प्रवणात्मना ॥
धर्मार्थकाममोक्षाख्यँय्य इच्छेच्छ्रेय आत्मनः ।
एकमेव हरेस्तत्र कारणम्पादसेवनम् ॥
तत्तात गच्छ भद्रन्ते यमुनायास्तटं शुचि ।
पुण्यम्मधुवनँय्यत्र सान्निध्यन्नित्यदा हरेः ॥ इत्यादि ।
(श्री० भा० ४ । ८ । ३५—४२)

श्रद्धाऽथ तेषान्धर्मेषु । [1]पूर्वोक्तगुणसम्पन्नस्य महत्तमान् सेवमानस्यैतादृशधर्मानुष्ठानादहमपि कृतार्थो भवेयमिति रुचिविशेषरूपा श्रद्धा तद्धर्मेषु भवति । तदुक्तम्——

यदनुध्याऽसिना युक्ताः कर्म ग्रन्थिनिबन्धनम् ।
छिन्दन्ति कोविदा,स्तस्य को न कुर्यात् कथारतिम् ॥
शुश्रूषोश्श्रद्दधानस्य वासुदेवकथारुचिः ।
स्यान्महत्सेवया विप्राः पुण्यतीर्थनिषेवणात् ॥
(श्री० भा० १ । २ । १५—१६)

टिप्पणी

१ पूर्वोक्तगुणैर्द्वितीयभूमिकाहेतुभूतैस्सम्पन्नस्य = समृद्धस्य सतो महत्तमान् सेवमानस्य तद्धर्मेषु = तेषान्धर्मेषु भागवताभिधेषु श्रद्धा भवति । तस्यास्स्वरूपमाहैतादृशधर्मेत्यादि ।

टीका

ज्ञानं यदा प्रतिनिवृत्तगुणोर्मिचक्र-
मात्मप्रसाद उत यत्र गुणेष्वसङ्गः ।
कैवल्यसम्मतपथस्त्वथ भक्तियोगः
को निर्वृतो [1] हरिकथासु रतिं न कुर्यात् ॥
(श्री० भा० २ । ३ । १२)

इत्यादि । हरिकथापदमन्येषामपि भागवतधर्माणामुपलक्षणम् । यथाऽऽह ब्रह्मा—

तदस्तु मे नाथ स भूरिभागो
भवेऽत्र वाऽन्यत्र तु वा तिरश्चाम् ।
येनाहमेकोऽपि भवज्जनानां
भूत्वा निषेवे तव पादपल्लवम् ॥
(श्री० भा० १० । १४ । ३०)

इत्यत्र [2] पादसेवनम् । एवमन्यदप्यूह्यम् । [3] इयञ्च श्रद्धा

टिप्पणी

१ हरिकथासु श्रूयमाणासु कीर्त्यमानासु स्मर्यमाणासु च । अन्येषामपीति । श्रवणकीर्तनस्मरणेभ्योऽन्येषाम्पादसेवनादिरूपाणामपीत्यर्थः । २ पादसेवनमिति । आहेति पूर्वेणान्वयः । ३ इयञ्च श्रद्धा निरुक्तरुचिविशेषरूपा पुरुषं भगवद्धर्माचरणैकजीवनं सन्तमापादयति = हठादादधाति । जीवत्यनेनेति जीवनम् । भगवद्धर्माचरणमेवैकञ्जीवनं यस्य स तथा तम् । कीदृशी सती तादृशं सन्तमापादयति ? ऐहिकेषु स्रक्चन्दनवनितादिष्वामुष्मिकेषु चामृताप्सरःप्रभृतिषु सर्वेषु विषयेष्वरुचिम् उप = आधिक्येन जनयन्ती सती । कीदृशी सती, तादृशी सती तादृशं सन्तमापादयति ? साधनपरिपाकेण हेतुभूतेन वर्धमाना सती । क कीदृशं सन्तमिवेयन्तादृशं सन्तमापादयति ? बुभुक्षा भक्ष्यमात्रैकशरणं सन्तमिव । तथा चैवमन्वयवाक्यम्—इयञ्च श्रद्धा साधनपरिपाकेण वर्धमानैहिकामुष्मिकसर्वविषया-

## टीका

साधनपरिपाकेण वर्धमानैहिकामुष्मिकसर्वविषयारुचिमुपजनयन्ती बुभुक्षेव भक्ष्यमात्रैकशरणं भगवद्धर्माचरणैकजीवनं पुरुषमापादयति । यथा परीक्षितः——

नैषाऽतिदुस्सहा क्षुन्मान्त्यक्तोदमपि बाधते ।
पिबन्तन्त्वन्मुखाम्भोजच्युतं हरिकथामृतम् ॥
(श्री० भा० १० । १ । १३)

इत्यादिभ्यः । यथा वा शौनकादीनाम्——

आयुर्हरति वै पुंसामुद्यन्नस्तञ्च यन्नसौ ।
तस्यर्ते यत् क्षणो नीत उत्तमश्लोकवार्तया ॥
(श्री० भा० २ । ३ । १७)

बिले बतोरुक्रमविक्रमान् ये
[1]न शृण्वतः कर्णपुटे नरस्य ।

### टिप्पणी

रुचिमुपजनयन्ती पुरुषं बुभुक्षा भक्ष्यमात्रैकशरणमिव भगवद्धर्माचरणैकजीवनमापादयतीति । इयमिति न वक्ष्यमाणत्वादिना श्रद्धां विशेषयति, अपितु प्रस्तुतविषयेत्यत्रत्यचकारो द्योतयति । १ नशब्दस्य शृण्वच्छब्देन "सुप्सुपे"ति समासो नान्तरीयकवत् । ततः परं षष्ठी । यद्वाऽत्र व्यस्तमेव पदद्वयम् । उभयथाऽपि शृण्वद्व्यतिरिक्तत्वं नरविशेषणम् । द्वितीयकल्पेऽपि नरपदासमानाधिकरणादपि शृण्वत्पदात् साधुत्वार्था षष्ठी । शृणुत इत्यर्थे शृण्वत इत्यार्षमिति तु न, गत्यन्तरविरहे सत्येवार्षत्वकल्पनस्य क्वचन सह्यत्वात् । कथमितरथा शब्दस्यार्थव्यवस्थितिः । अत एव समासं व्यासं वाऽभिसन्धाय स्वामिश्रीचरणाना"मशृण्वत" इति नरविशेषणतया विवृतिः । आर्षत्वकल्पनाया अगतिकगतिकत्वादेवैकादशषष्ठषट्चत्वारिंशादिस्थलेष्वपि "हि = निश्चितजयेमे"त्यादिव्याख्यानन्तेषाम् ।

टीका

जिह्वाऽसती दार्दुरिकेव सूत
न चोपगायत्युरुगायगाथाः ॥
भारः परम्पट्टकिरीटजुष्ट-
मप्युत्तमाङ्गन्न नमेन्मुकुन्दम् ।
शावौ करौ नो कुरुतस्सपर्यां
हरेर्लसत्काञ्चनकङ्कणौ वा ॥
[1] बर्हायिते ते नयने नराणां
लिङ्गानि विष्णोर्न निरीक्षतो ये ।
पादौ नृणान्तौ द्रुमजन्मभाजौ
क्षेत्राणि नानुव्रजतो हरेर्यौ ॥
जीवञ्छवो भागवताङ्घ्रिरेणु-
न्न जातु मर्त्योऽभिलभेत यस्तु ।
श्रीविष्णुपद्या मनुजस्तुळस्या-
श्श्वसञ्छवो यस्तु न वेद गन्धम् ॥
तदश्मसारं हृदयम्बतेदं
य्यद्गृह्यमाणैर्हरिनामधेयैः ।
न विक्रियेताथ यदा विकारो
नेत्रे जलङ्गात्ररुहेषु हर्षः ॥

(श्री० भा० २ । ३ । २०—२४)

इत्यादि । श्रद्धाविहीनास्तु केचिद्विषयभोगपराः । केचि-

टिप्पणी

१ यथा पटैकदेशदाहे पटो दग्ध इति व्यवहारस्तद्वदिहाप्यवयविवाचकबर्हपदेनावयवग्रहणाच्चन्द्रको विवक्षितः । तस्य च "पीलिक्कण्ण्" इति कैरळी भाषा ।

टीका

त् पाण्डित्यादिगर्वेण भगवद्भक्तनिन्दापरास्सन्तो [1] निरयेऽपि निन्दनीया एव भवन्ति। तत्र [2] प्रथमे यथा——

यत्र व्रजन्त्यघभिदो रचनानुवादा-
च्छृण्वन्ति येऽन्यविषयाः कुकथा मतिघ्नीः।
यास्तु श्रुता हतभगैर्नृभिरात्तसारा-
स्तांस्तान् क्षिपन्त्यशरणेषु तमस्सु हन्त॥
(श्री० भा० ३। १५। २३)

तरवः किन्न जीवन्ति भस्त्राः किन्न श्वसन्त्युत।
न खादन्ति न मेहन्ति किङ्ग्रामपशवोऽपरे॥
श्व-विड्वराहोष्ट्र-खरैस्संस्तुतः पुरुषः पशुः
[3] न यत्कर्णपथोपेतश्जातु नाम गदाभृतः॥
(श्री० भा० २। ३। १८—१९)

इत्यादि। भगवद्भक्तनिन्दापरा यथा——

मुखबाहूरुपादेभ्यः पुरुषस्याश्रमैस्सह।
चत्वारो जज्ञिरे वर्णा गुणैर्विप्रादयः पृथक्॥
य एषाम्पुरुषं साक्षादात्मप्रभवमीश्वरम्।
न भजन्त्यवजानन्ति स्थानाद्भ्रष्टाः पतन्त्यधः॥

टिप्पणी

१ यातनाकालेऽपीत्यर्थः। २ प्रथमे = प्रथमाः। ३ न यत्कर्णपथोपेतमित्यादिरेव दाक्षिणात्यः पाठो भावार्थदीपिकायामपि तादृश्यां "नागत"-मित्येवन्नपुंसकमेव, न तु नागत इति। पाठान्तरे तु दृश्यमाने "नाम गदाग्रज" इति भागस्य "गदाग्रज इति प्रसिद्धश्श्रीकृष्ण" इत्येवं विशेष्याध्याहारेण बालबोधिन्यादौ व्याख्यानमवलोक्यते। न च तथा स्वामिश्रीचरणानां विवृतिरस्तीति नामधेयपरनामपदघटितो दाक्षिणात्यपाठ एव रुचिरः।

टीका

दूरे हरिकथाः केचिद्दूरे चाच्युतकीर्तनाः ।
स्त्रियश्शूद्रादयश्चैव तेऽनुकम्प्या भवादृशाम् ॥
(श्री० भा० ११ । ५ । २—४)

रजसा घोरसङ्कल्पाः कामुका अहिमन्यवः ।
दाम्भिका मानिनः पापा विहसन्त्यच्युतप्रियान् ॥

वदन्ति तेऽन्योन्यमुपासितस्त्रियो
गृहेषु मैथुन्यपरेषु चाशिषः ।
यजन्त्यसृष्टान्नविधानदक्षिणं
वृत्त्यै परङ्घ्नन्ति पशूनतद्विदः ॥

श्रिया विभूत्याऽभिजनेन विद्यया
त्यागेन रूपेण बलेन कर्मणा ।
जातस्मयेनान्धधियस्सहेश्वरान्
सतोऽवमन्यन्ति हरिप्रियान् खलाः ॥

सर्वेषु शश्वत्तनुभृत्स्ववस्थितं
यथा खमात्मानमभीष्टमीश्वरम् ।
वेदोपगीतञ्च न शृण्वतेऽबुधा
मनोरथानाम्प्रवदन्ति वार्तया ॥
(श्री० भा० ११ । ५ । ७—१०)

हित्वाऽत्यायासरचिता गृहापत्यसुहृच्छ्रियः ।
तमो विशन्त्यनिच्छन्तो वासुदेवपराङ्मुखाः ॥
(श्री० भा० ११ । ५ । १८)

न भजति कुमनीषिणां स इज्यां
हरिरधनात्मधनप्रियो रसज्ञः ।

टीका

श्रुतधनकुलकर्मणाम्मदैर्ये
विदधति पापमकिञ्चनेषु सत्सु ॥
(श्री० भा० ४ । ३१ । २१)

एवमन्यदप्यूहनीयम् । [1]तस्माद्भगवद्धर्मश्रद्धा भवति तृतीया भूमिका । ततो हरिगुणश्रुतिः । यथा—

इत्थम्परस्य निजधर्मरिरक्षयात्त-
लीलातनोस्तदनुरूपविडम्बनानि ।
कर्माणि कर्मकषणानि यदूत्तमस्य
श्रूयादमुष्य पदयोरनुवृत्तिमिच्छन् ॥
मर्त्यस्तयाऽनुसवमेधितया मुकुन्द-
श्रीमत्कथाश्रवणकीर्तनचिन्तयैति ।
तद्धाम दुस्तरकृतान्तजवापवर्ग-
ङ्ग्रामाद्वनङ्क्षितिभुजोऽपि ययुर्यदर्थाः ॥
(श्री० भा० १० । ९० । ४९—५०)

संसारसिन्धुमतिदुस्तरमुत्तितीर्षो-
र्नान्यः प्लवो भगवतः पुरुषोत्तमस्य ।
लीलाकथारसनिषेवणमन्तरेण
पुंसो भवेद्विविधदुःखदवार्दितस्य ॥
(श्री० भा० १२ । ४ । ४०)

निवृत्ततर्षैरुपगीयमाना-
द्भवौषधाच्छ्रोत्रमनोभिरामात्

टिप्पणी

१ तस्मात् = भगवद्धर्मश्रद्धाविहीनानामुक्तविधत्वात् ।

टीका

क उत्तमश्लोकगुणानुवादात्
पुमान् विरज्येत विना पशुघ्नात् ॥
(श्री० भा० १० । १ । ४)

हरिगुणश्रुतिरिति [1]कृत्स्नभागवतधर्मोपलक्षणम् ।

टिप्पणी

१ कृत्स्नेति । कीर्तनादीनां श्रवणसमशीलत्वादेव श्रूयन्ते—

तमुं स्तोतारः पूर्व्यं यथा विद
ऋतस्य गर्भं जनुषा पिपर्तन ।
आऽस्य जानन्तो नाम चिद्विवक्तन
महस्ते विष्णो सुमतिम्भजामहे ॥

(उत्तरार्धमत्र श्रीमत्सहस्रनामभाष्यकृद्भिरुदाहृतमस्ति) इत्येवमादय-स्तेषामपि कर्तव्यत्वसमर्पका बहवो मन्त्राः । व्याचक्षाणश्च सङ्क्षेपेणैनान् कांश्चन भगवन्तं श्रीगुरुमरुत्पुर × कल्पतरुं स्तौति नारायणीये——

हे स्तोतारः कवीन्द्रास्तमिह खलु यथा चेतयध्वे तथैव
व्यक्तं वेदस्य सारम्प्रणुवत जननोपात्तलीलाकथाभिः ।
जानन्तश्चास्य नामान्यखिलसुखकराणीति सङ्कीर्तयध्वं
हे विष्णो कीर्तनाद्यैस्तव खलु महतस्तत्त्वबोधम्भजेयम् ॥

इत्यादिना । श्रुतावत्त च तत्पदं पूर्वप्रस्तुतविष्णुपरामर्शकम् । हे जानन्तः । अखिलसुखकराणीति हेतोः । सम्यक् = देशादिनियमनिरपेक्ष-कीर्तयध्वम् । श्रुतौ तम्वित्युकार एवकारार्थे । तृतीयपादे चिदिति । चि-द्रूपमित्यर्थः । अमो लोपश्छान्दसः । उदाहरिष्यते च—

निखिलनिगमवल्लीसत्फलञ्चित्स्वरूपम् । इति ।

× सप्तमीसमासः ।

## टिप्पणी

आविवक्तनेत्यस्य सर्वत्रापि सर्वदाऽपि सर्वथाऽपि च कीर्तयतेत्यर्थः । भगवन्नामकीर्तनस्य देशविशेष,कालविशेष,जातिविशेष,शुचित्व,त्चार,श्रद्धा-भक्ति,ज्ञानादिनिरपेक्षत्वादेव× "सर्वश्रुतिरहस्यङ्गोप्यन्तच्छृणु,भगवत आदि-पुरुषस्य नारायणस्य नामोच्चारणमात्रेण निर्धूतकलिर्भवति, नातः परतरो-पायस्सर्ववेदेषु दृश्यते, कोऽस्य विधिः ? नास्य विधिः, सर्वदा शुचिरशुचिर्वा पठन् ब्रह्मणस्सलोकतां समीपतां सरूपतां सायुज्यतामेति"

"यत्र कुत्र स्थितो वाऽपि कृष्ण कृष्णेति कीर्तयेत् ।
सर्वपापविशुद्धात्मा स गच्छेत् परमाङ्गतिम् ॥"

"तापत्रयानलज्वालाज्वालिते देहमन्दिरे ।
विष्णुनामरसैरशान्तिजानन् कः कालमीक्षते ॥"

"कालक्षेपो न कर्तव्यः, क्षीणमायुः क्षणे क्षणे, ।
यमस्य करुणा नास्ति, कर्तव्यं हरिकीर्तनम्* ॥"

"सा हानिस्तन्महच्छिद्रं सा चान्धजळमूकता ।
यन्मुहूर्तङ्क्षणं वाऽपि हरिनाम न किर्तयेत् ॥"

"कालोऽस्ति यज्ञे, कालोऽस्ति दाने, कालोऽस्ति सज्जपे, ।
सर्वेशकीर्तने कालमीक्षमाणस्तु वञ्चकः ॥"

"ब्राह्मणाः क्षत्रिया वैश्यास्त्रियश्शूद्रान्त्यजातयः ।
नामसङ्कीर्तनङ्कृत्वा यान्ति विष्णोः परम्पदम् ॥"

"सर्वकर्मबहिर्भूतस्सर्वपापयुतस्तथा ।
मुच्यते नात्र सन्देहो विष्णोर्नामानुकीर्तनात् ॥"

---

× श्रुतिस्मृतिकोटयः इत्यग्रिमेणान्वयः । श्रुतौ नामोच्चारणमात्रेणेति कर्तरि तृतीया । निर्धूतः नितरामाकम्प्य विनाशितः कलयति स्वस्थत्वशून्यीकरोति जीवानिति कलिस्संसारो यस्य स तथा । विधिरिति । इतिकर्तव्यतेत्यर्थः । सायुज्यतामित्यत्र तल् ष्यञ् वा स्वार्थे ।
* नामकीर्तनङ्गुणकीर्तनञ्चेति कीर्तनन्द्विविधमित्यवधेयम् ।

टिप्पणी

" अयं हि कृतनिर्वेशो जन्मकोट्यंहसामपि ।
यद्व्याजहार विवशो नाम स्वस्त्ययनं हरेः ॥ "

" विसृजति हृदयन्न यस्य साक्षा-
द्धरिरवशाभिहितोऽप्यघौघनाशः ।
प्रणयरशनया धृताङ्घ्रिपद्म-
स्स भवति भागवतप्रधान उक्तः ॥ "

" सर्वजन्मसु यत् पापञ्ज्ञानाज्ञानकृतम्भवेत् ।
सर्वन्दहति रामस्य कीर्तनञ्च विचारयेत् ॥ "

" अज्ञानादथवा ज्ञानादुत्तमश्लोकनाम यत् ।
सङ्कीर्तितमघम्पुंसान्दहत्येधो यथाऽनलः ॥ "

" कृष्णेति मङ्गलन्नाम यस्य वाचि प्रवर्तते ।
भस्मीभवन्ति तस्याशु × महापातककोटयः ॥ "

---

× महापातककोटय इति । अप्रारब्धान्यगणितमहापातकान्यपीत्यर्थः, अप्रारब्धानामेव पापानां भस्मीभवनस्याऽऽशुभावनियमात् ।

यद्ब्रह्मसाक्षात्कृतिनिष्ठयाऽपि
विनाशमायाति विना न भोगैः ।
अपैति नाम स्फुरणेन तत्ते
प्रारब्धकर्मेति विरौति वेदः ॥

इति भगवन्नामश्रवणकीर्तनाद्यन्यतमेन सत्यपि प्रारब्धानामपि भस्मीभावे, तत्र तु विषये तस्यावघातन्यायेनाऽऽवृत्तिरावश्यकी ।

विनिवृत्तश्च हन्ताहमसाध्यातङ्कगौरवात् ।
पूर्वमब्दाष्टकान्नामश्रवणावृत्तिवैभवात् ॥

(अत्रातङ्कपदेन रोगस्सन्तापो मरणासत्तिशङ्का चोच्यन्ते । रुक्तापशङ्कास्वातङ्क इत्यमरः ) महदनुगृहीतस्यतु पुरुषस्य प्रारब्धानामपि विनाशे

टिप्पणी

" × यद्द्व्यक्षरन्नाम गिरेरितन्नृणां
सकृत् प्रसङ्गादघमाशु हन्ति तत् ।
पवित्रकीर्तिन्तमलङ्घ्यशासन-
म्भवानहो द्वेष्टि शिवं शिवेतरः ॥ "

" हत्वायुतम्पानसहस्रमुग्र-
ङ्कुर्वङ्गनाकोटिनिषेवणञ्च ।
स्तेयान्यसङ्ख्यानि हरेः प्रियेण
गोविन्दनाम्ना निहतानि सद्यः ॥ "

" एतेनैव ह्यघोनोऽस्य कृतं स्यादघनिष्कृतम् ।
यदा नारायणाऽऽयेति जगाद चतुरक्षरम् ॥ "

" + जिह्वा न वक्ति भगवद्गुणनामधेय-
ञ्चेतश्च न स्मरति तच्चरणारविन्दम् ।

सा नैवोपयुज्यते । अत एव कदाचन सुरमुनिमुख्यश्रीनारदपादानामनुग्रहेण भगवदभिधानमुपश्रृण्वतामशेषाणामपि तदातननरकिनिकराणां सद्य एव समुद्धतिरशास्त्रविदामप्यविवादपदम् । एवमन्यदा "वेदराशि"रिति विश्रुतधरणिसुरमुनिमणिचरणकरणयाऽपि । इत्थमनेकशास्त्राणि श्रोत्रयोरमृतमभिषिञ्चन्ति । यानि त्वभ्यस्तस्य, स्वसेवकमहत्स्पृहायाम्पुनरनभ्यस्तस्यैव भगवन्नामधेयस्य प्रारब्धसमुच्छेदकताम्प्रतिपादयन्ति । प्रारब्धस्य भोगैकविनाश्यत्वम्पुनरपवादवशात् प्रायिकमेव, प्राणिनामहिंस्यत्वादिवत् । × यत्=यस्य द्व्यक्षरन्नाम "शिवे"ति, शिवमित्यग्रिमपदस्वारस्यात् । एवँल्लिखिते कश्चित् पृष्टवान्—किमस्ति नामभेद इति । तम्प्रत्युक्तम्—नहि नहि । किन्तु शिवहरमहादेवादीनि हरिकृष्णनारायणप्रभृतीनि च नामान्येकमेवाद्वितीयम्भगवन्तम्भजन्ते । इदमेव निवेदयितुं "शिवस्थाणु"रित्यत्र "शिवादिनामभिर्हरिरेव स्तूयत" इति सर्वविदाम्भाष्यकृतामुक्तिश्श्रुतिसाक्षिकमवतिष्ठत इति । + यत्=येषाञ्जिह्वैकदाऽपि भगवद्गुणनाम-

टिप्पणी

" अयं हि कृतनिर्वेशो जन्मकोट्यंहसामपि ।
यद्व्याजहार विवशो नाम स्वस्त्ययनं हरेः ॥ "
" विसृजति हृदयं न यस्य साक्षा-
द्धरिरवशाभिहितोऽप्यघौघनाशः ।
प्रणयरशनया धृताङ्घ्रिपद्म-
स्स भवति भागवतप्रधान उक्तः ॥ "
" सर्वजन्मसु यत् पापम्ज्ञानाज्ञानकृतम्भवेत् ।
सर्वन्दहति रामस्य कीर्तनन्न विचारयेत् ॥ "
" अज्ञानादथवा ज्ञानादुत्तमश्लोकनाम यत् ।
सङ्कीर्तितमघम्पुंसान्दहत्येधो यथाऽनलः ॥ "
" कृष्णेति मङ्गलन्नाम यस्य वाचि प्रवर्तते ।
भस्मीभवन्ति तस्याशु × महापातककोटयः ॥ "

× महापातककोटय इति । अप्रारब्धान्यगणितमहापातकान्यपीत्यर्थः, अप्रारब्धानामेव पापानां भस्मीभवनस्याऽऽशुभावनियमात् ।

यद्ब्रह्मसाक्षात्कृतिनिष्ठयाऽपि
विनाशमायाति विना न भोगैः ।
अपैति नाम स्फुरणेन तत्ते
प्रारब्धकर्मेति विरौति वेदः ॥

इति भगवन्नामश्रवणकीर्तनाद्यन्यतमेन सत्यपि प्रारब्धानामपि भस्मीभावे, तत्र तु विषये तस्यावघातन्यायेनाऽऽवृत्तिरावश्यकी ।

विनिवृत्तश्च हन्ताहमसाध्यातङ्कगौरवात् ।
पूर्वमब्दाष्टकान्नामश्रवणावृत्तिवैभवात् ॥

(अत्रातङ्कपदेन रोगस्सन्तापो मरणासक्तिशङ्का चोच्यन्ते । रुक्तापशङ्कास्वातङ्क इत्यमरः ) महदनुगृहीतस्यतु पुरुषस्य प्रारब्धानामपि विनाशे

टिप्पणी

"×यद्व्यक्षरन्नाम गिरेरितन्नृणां
सकृत् प्रसङ्गादघमाशु हन्ति तत्।
पवित्रकीर्तिन्तमलङ्घ्यशासन-
म्भवानहो द्वेष्टि शिवं शिवेतरः॥"

"इत्यायुतम्पानसहस्रसुप्र-
कुर्वङ्गनाकोटिनिषेवणञ्च।
एतेवान्यसङ्ख्यानि हरेः प्रियेष
गोविन्दनाम्ना निहतानि सद्यः॥"

"एतेनैव ह्यघोनोऽस्य कृतं स्यादघनिष्कृतम्।
यदा नारायणाऽऽयेति जगाद चतुरक्षरम्॥"

"+जिह्वा न वक्ति भगवद्गुणनामधेय-
श्चेतश्च न स्मरति तच्चरणारविन्दम्।

सा नैवोपयुज्यते। अत एव कदाचन सुरमुनिमुख्यश्रीनारदपादानामनुग्रहेण भगवदभिधानमुपश्रुण्वतामशेषाणामपि तदातननरकिनिकराणां सद्य एव समुद्धृतिरशास्त्रविदामप्यविवादपदम्। एवमन्यदा "वेदराशि"रिति विश्रुत-धरणिसुरमुनिमणिचरणकरणयाऽपि। इत्थमनेकशास्त्राणि श्रोत्रयोरमृतमभि-षिञ्चन्ति। यानि त्वभ्यस्तस्य, स्वस्वेदकमहत्स्पृहायाम्पुनरनभ्यस्तस्यैव भगवन्नामधेयस्य प्रारब्धसमुच्छेदकताम्प्रतिपादयन्ति। प्रारब्धस्य भोगै-कविनाश्यत्वम्पुनरपवादवशात् प्रायिकमेव, प्राणिनामहिंस्यत्वादिवत्। × यत्=यस्य द्व्यक्षरन्नाम "शिवे"ति, शिवमित्यग्रिमपदस्वारस्यात्। एवँल्लिखिते कश्चित् पृष्टवान्—विमरित नामिभेद इति। तम्प्रत्युक्तम्—नहि नहि। किन्तु शिवहरम्हादेवादीनि हरिकृष्णनारायणप्रभृतीनि च नामान्ये-कमेवाद्वितीयम्भगवन्तम्भजन्ते। इदमेव निवेदयितुं "शिवस्थाणु"रित्यत्र "शिवादिनामभिर्हरिरेव स्तूयत" इति सर्वविदाम्भाष्यकृतामुक्तिश्श्रुति-साक्षिकमवतिष्ठत इति। + यत्=येषाञ्जिह्वैकदाऽपि भगवद्गुणनाम-

टिप्पणी

कृष्णाय नो नमति यच्छिर एकदाऽपि,
तानानयध्वमसतोऽकृतविष्णुकृत्यान् ॥"
"यस्य स्मृत्या च नामोक्त्या तपोयज्ञक्रियादिषु ।
न्यूनं सम्पूर्णतांयाति सद्यो, वन्दे तमच्युतम् ॥"
"नारायणाक्षरम्पुण्यञ्च कदाऽप्युच्चरन्ति ये ।
वल्मीकं वदनन्तेषामाहुर्जिह्वाञ्च पन्नगीम् ॥"
"सकृन्नारायणेत्युक्त्वा पुमान् कल्पशतत्रयम् ।
गङ्गादिसर्वतीर्थेषु स्नातो भवति पुत्रक ॥"
"गोकोटिदानङ्ग्रहणादिकाले
प्रयागगङ्गायुतकल्पवासः ।
यज्ञायुतम्मेरुसुवर्णदान-
ङ्गोविन्दनाम्ना न समं शतांशे ॥"
"× सकृदुच्चरितँय्येन हरिरित्यक्षरद्वयम् ।
बद्धः परिकरस्तेन मोक्षाय गमनम्प्रति ॥"

---

धेयञ्च वक्तीत्यनेनाऽन्वनाऽन्वयः । × सकृदित्यादि । सञ्चितसकलदुरितनिकरनिराकरणमेव मोक्षाय गमनम्प्रति परिकरबन्धः = प्रगाढगात्रबन्धस्समारम्भो वा । कीर्तनात् पापक्षयस्तदावृत्त्या तद्विषयाणां वासनानां प्रचयोऽपचयश्च पापवासनानाम्, ततो भगवज्जनसेवासातत्यम्, ततस्तदुपवर्णितमहिमनि भगवति पुण्यश्लोकशेखरे नैष्ठिकी भक्तिः, ततः कामादीनामत्यन्तोच्छेदः, ततस्सत्त्वस्य परमोत्कर्षः, ततस्तत्त्वसाक्षात्कारः, ततो मुक्तिरिति क्रमो भगवन्नामकौमुद्यान्तृतीयपरिच्छेदे

यस्य नामान्यधीयानैश्शुकैरपि शुकायितम् ।
विनेयैर्वल्लवस्त्रीणां स कृष्णः कुरुतात् कृपाम् ॥

इति श्लोकेन तिलकितमुखे प्रबन्धप्रमाणमुपवर्णितः ।

टिप्पणी

" धर्माणामुत्तमो धर्मो नामसङ्कीर्तनं हरेः ।
अनपायितया सर्वदेशकालाधिकारतः ॥ "
" अवशेनापि यन्नाम्नि कीर्तिते सर्वपातकैः ।
पुमान् विमुच्यते सद्यस्सिंहत्रस्तैर्मृगै(र्वृकै)रिव ॥ "
" × मधुरमधुरमेतन्मङ्गलम्मङ्गलाना-
मखिलनिगमवल्लीसत्फलञ्चित्स्वरूपम् ।
सकृदपि परिगीतं श्रद्धया हेळया वा
भृगुवर नरमात्रन्तारयेत् कृष्णनाम ॥ "
" साङ्केत्यम्पारिहास्यं वा स्तोभं हेळनमेव वा ।
वैकुण्ठनामग्रहणमशेषाघहरं विदुः ॥ "
" सर्वैश्वर्यप्रदम्मन्त्रम्भवाग्नेस्तम्भनन्तथा ।
हास्यात् कृष्णेति यो ब्रूया, + द्द्यादस्मै ततोऽभयम् ॥ "
" आचारहीनोऽपि मुनिप्रवीर
भक्त्या विहीनोऽपि विनिन्दितोऽपि ।

---

× मधुरमधुरमिति । अत एव

मृद्वीका रसिता, सिता समशिता, स्फीतन्निपीतम्पय,-
स्स्वर्यातेन सुधाऽप्यधायि, कतिधा रम्भाधरः खण्डितः ? ।
सत्यम्ब्रूहि मदीयजीव भवता भूयो भवे भ्राम्यता
कृष्णेत्यक्षरयोरयम्मधुरिमोद्गारः क्वचिल्लक्षितः ? ॥

इति जगत्प्रसिद्धश्रीजगन्नाथपण्डितपादाः । लक्षितः किमिति काकुसिद्धम् । सकृदपीति । अनावृत्तनाम्नो मोक्षबीजत्वप्रकारोऽधुनैव "कीर्तनात् पापक्षयस्तदावृत्त्या तद्विषयाणां वासनानाम्प्रचयोऽपचयश्च पापवासनाना"मित्यादिना दर्शितः । + स मन्त्रः अस्मै जनाय ततः = भवाग्नेस्सकाशादभयन्दद्यात् ।

टिप्पणी

किन्तस्य, नारायणशब्दमात्रतो
विमुक्तपापो विशतेऽच्युताङ्गतिम् ॥ "

" पुल्कसोऽप्यथ चण्डाल आशौची च रजस्वला ।
पतितोऽप्यथ गृह्णन्ति नारायण इति प्रभो ॥ "

" + यन्नामधेयश्रवणानुकीर्तना-
यत्प्रह्वणाद्यत्स्मरणादपि क्वचित् ।
श्वादोऽपि सद्यस्सवनाय कल्पते,
कुतः पुनस्ते भगवन्नु दर्शनात् ॥

अहो बत श्वपचोऽतो गरीयान्
यज्जिह्वाग्रे वर्तते नाम तुभ्यम् ।
तेपुस्तपस्ते जुहुवुस्सस्नुरार्या
ब्रह्मानूचुर्नाम गृणन्ति ये ते ॥ "

---

+ अत्रेयम्भावार्थदीपिका—यन्नामधेयस्य श्रवणमनुकीर्तनञ्च तस्मात् । क्वचित्=कदाचिदपि । श्वानमत्तीति श्वादः=श्वपचः सोऽपि सवनाय=सोमयागाय कल्पते=योग्यो भवति । अनेन पूज्यत्वं लक्ष्यते । तदुपपादयति—अहो बतेत्याश्चर्ये । यस्य जिह्वाग्रे तुभ्यम्=तव नाम वर्तते स श्वपचोऽप्यतोऽस्मादेव हेतोर्गरीयान् । यत्=यस्माद्वर्ततेऽत इति वा । कुत इत्यत आह—त एव तपस्तेपुः=कृतवन्तः । जुहुवुः=होमङ्कृतवन्तः, सस्नुः=तीर्थेषु स्नाताः । आर्याः=त एव सदाचाराः । ब्रह्म=वेदम् । अनूचुः=अधीतवन्तः । त्वन्नामकीर्तने तपोहोमादिकमन्तर्भूतमतस्ते पुज्यतमा इत्यर्थः । यद्वा जन्मान्तरे तैस्तपआदि सर्वङ्कृतमिति त्वन्नामकीर्तनमहाभाग्योदयादवगम्यत इत्यर्थ इति । भावार्थदीपिकायामवगम्यत इति । अनुमीयत इत्यर्थः ।

टिप्पणी

" पतितः कितवः किरातको वा
श्वपचो वा हरिनाम यस्य वाचि ।
सकृदप्यवशाद्विनिर्गतञ्चेत्
कुलदैवम्मम तस्य पादधूळिः ॥ "
" आर्ता विषण्णाश्शिथिलाश्च भीता
घोरेषु च व्याधिषु वर्तमानाः ।
सङ्कीर्त्य नारायणशब्दमात्रं
विमुक्तदुःखास्सुखिनो भवन्ति ॥ "
" न गुरुर्नोपदेशश्च न दीक्षा न च दक्षिणा ।
न देशकालनियमो नाममन्त्रजपे हरेः ॥ "
" गोवधं स्त्रीवधं स्तेयम्पापम्ब्रह्मवधादिकम् ।
गोविन्दकीर्तनादेव शतधा याति नारद ॥ "
" हरिरिति सकृदुच्चरित-
न्दस्यु × छलेनापि यैर्मनुजैः ।
जननीमार्गम्मुक्ता
मम पदवीन्निविशते मर्त्याः ॥ "
" न हि भगवन्नघटितमिद-
न्त्वद्दर्शनान्नृणामखिलपापक्षयः ।
यन्नामसकृच्छ्रवणात्
पुल्कसकोऽपि विमुच्यते संसारात् ॥ "
" विष्णोर्नामैव पुंसश्शमलमपनुदत् पुण्यमुत्पादयच्च
ब्रह्मादिस्थानभोगेष्वरतिमथ गुरोश्श्रीपदद्वन्द्वभक्तिम् ।

× "च्छ" इति प्रयोक्तव्ये छन्दोऽनुसारी चकारविरह आर्षः । निविशत इत्येकवचनञ्च ।

टिप्पणी

तत्त्वज्ञानञ्च विष्णोरिह मृतिजननभ्रान्तिबीजञ्च दग्ध्वा
पूर्णानन्दैकबोधे महति च पुरुषं स्थापयित्वा निवृत्तम् ॥ "

" अर्थवादं हरेर्नाम्नि सम्भावयति यो नरः ।
स पापिष्ठो मनुष्याणान्नरके पतति स्फुटम् ॥ "

" मन्नामकीर्तनफलं विविधन्निशम्य
न श्रद्दधाति मनुते यदुतार्थवादम् ।
यो मानुषस्तमिह दुःखचये क्षिपामि
संसारघोरविविधार्तिनिपीडिताङ्गम् ॥ "

इत्येवमाद्याश्श्रुतिस्मृतिकोटयः । एवञ्चिरङ्गत्वे सुसिद्धे ×
" + प्र तत्ते॑ अ॒द्य शि॑पिविष्ट॒ नामा॒र्यश्शं॑सामि व॒युना॑नि वि॒द्वान् ।"
" त्वे॒षं ह्य॒स्य स्थवि॑रस्य॒ नाम॑ "
" यस्य नामस्मृतौ भक्तिस्तस्य भक्तिर्दृढा हरौ । "

" तदश्मसारं हृदयम्बतेद-
द्यद्गृह्यमाणैर्हरिनामधेयैः ।
न विक्रियेताथ यदा विकारो
नेत्रे जलङ्गात्ररुहेषु हर्षः ॥ "

" नामैव शीलयन्तो हि संसिद्धास्सनकादयः । "
" अहर्निशं स्मरन्नाम कृष्णम्पश्यति चक्षुषा ॥ "

---

× द्रष्टव्यानीत्युपरितनेनान्वयः । + शिपयः = पशवः = जीवाः तेष्वन्तर्यामितया प्रविष्ट हे विष्णो त्वत्प्रसादादद्य वयुनानि विद्वान् = ज्ञेयानि जानन्नर्योऽहन्तत् = स्वातन्त्र्येण निखिलानर्थविनिवर्तकतया सकलपुमर्थप्रवर्षितया च प्रसिद्धन्ते नाम प्र = सर्वोत्कृष्टतया शंसामि = स्तौमि । त्वेषमिति । स्थविरस्यानादेरस्य विष्णोर्नाम त्वेषं हि = प्रज्वलमेव । अविद्यातत्कार्यदाहकमानन्दप्रकाशकञ्चेत्यर्थः ।

टिप्पणी

“ मन्त्रतस्तन्त्रतश्छिद्रन्देश,काल,र्हवस्तुतः ।
सर्वङ्करोति निश्छिद्रन्नामसङ्कीर्तनन्तव ॥ ”

“ सर्वरोगोपशमनं सर्वोपद्रवनाशनम् ।
शान्तिदं सर्वरिष्टानां हरेर्नामानुकीर्तनम् ॥ ”

“ नामसङ्कीर्तनाज्जातम्पुण्यन्नोपचयन्ति ये ।
महाव्याधिसमायुक्ताः क्लेशभाजो भवन्ति ते ॥ ”

“ राज्यम्भोगांश्च विपुलान् पुत्रानिच्छसि सम्पदः ।
तदायत्तेन मनसा कुरु गोविन्दकीर्तनम् ॥ ”

“ स्तेनस्सुरापो मित्रध्रुग्ब्रह्महा गुरुतल्पगः ।
स्त्रीराजपितृगोहन्ता ये च पातकिनोऽपरे ॥
सर्वेषामप्यघवतामिदमेव सुनिष्कृतम् ।
नामव्याहरणं विष्णोर्यतस्तद्विषया मतिः ॥ ”

“ यत्कृत्यन्तन्न कृत-
म्यदकृत्यङ्कृत्यवत्तदाचरितम् ।
उभयोः प्रायश्चित्तं
शिवनामाक्षरद्वयोच्चरितम् ॥”

“ जगन्नाथेति नाम्ना माङ्कीर्तयिष्यन्ति ये नराः ।
अपराधशतन्तेषाङ्क्षमिष्ये नात्र संशयः ॥ ”

“ × दुष्टसर्पेण दष्टानाङ्गाढन्दुरितरूपिणाम् ।
औषधम्परमम्पुंसामाहुः केशवकीर्तनम् ॥ ”

“ विमुखा ये हरेः + कीर्तौ तेषां हि यमकिङ्कराः ।
अनालोक्य मुखङ्कुर्वन्त्यहो नरकयातनाः ॥ ”

---

× दुष्टो दुर्जन एव सर्पस्तेन । दुरितरूपिणाम् = दुरितात्मकविषव्याप्तानाम् । + कीर्तौ = कीर्तने ।

टिप्पणी

"नारायणेति मन्त्रोऽस्ति वागस्ति वशवर्तिनी ।
तथाऽपि नरके घोरे पतन्तीत्येतदद्भुतम् ॥"
"नाम्नोऽस्ति यावती शक्तिः पापनिर्हरणे हरेः ।
तावत् कर्तुं न शक्नोति पातकम्पातकी जनः ॥"
"×न निष्कृतैरुदितैर्ब्रह्मवादिभि-।
स्तथा विशुध्यत्यघवान्व्रतादिभिः ।
यथा हरेर्नामपदैरुदाहृतै-
स्तदुत्तमश्लोकगुणोपलम्भकम् ॥"
"वसन्ति यानि सर्वाणि पावनानि महीतले ।
न तानि तुल्यतांय्यान्ति कृष्णनाम्नस्तु कीर्तने ॥"
"नारायणेति कल्याणी वाणी यस्य मुखाम्बुजे ।
स धन्यः पावयत्यन्यान् +स्वदृष्टिपथगोचारान् ॥"
"क नाकपृष्ठगमनम्पुनरावृत्तिलक्षणम् ।
क जपो वासुदेवेति मुक्तिबीजमनुत्तमम् ॥"
"गोविन्देति समुच्चार्य पदक्षपितकल्मषः ।
क्षत्रबन्धुर्विशुद्धात्मा गोविन्दत्वमुपेयिवान् ॥"

---

× नेत्यादि ।

श्रुतिस्मृतिभ्यां विहिता व्रतादयः
पुनन्ति पापञ्च लुनन्ति वासनाम् ।
अनन्तसेवा तु निकृन्तति द्वयी-
मिति प्रभो त्वत्पुरुषा बभाषिरे ॥

इति नारायणीये । वासनाम् = सजातीयकर्मोत्पादकं संस्कारम् । अनन्तस्य = भगवतः सेवा श्रवणकीर्त्तनादिना । + स्वो दृष्टिपथगोचरो येषामित्यपि विग्रहो बोध्यः ।

टिप्पणी

"संसारसर्पसन्दष्टनष्टचेष्टैकभेषजम् ।
कृष्णेति वैष्णवम्मन्त्रमुक्त्वा मुक्तो भवेन्नरः ॥"
"तापत्रयाभितप्तानान्तृष्णयाऽभिहतात्मनाम् ।
नारायणेति मन्त्रोऽयं संसारार्णवतारकः ॥"
"जिह्वां लब्ध्वापि यः कृष्णङ्कीर्तनीयन्न कीर्तयेत् ।
लब्ध्वापि मोक्षनिश्रेणिं स नाऽऽरोहति दुर्मतिः ॥"
"अपहाय हरेर्नाम घोरसंसारभेषजम् ।
आत्मनो लभते मुक्तिङ्केनोपायेन पण्डितः ॥"
"संसारचक्रे परिवर्तमान-
स्समस्तदुःखामयभीतिमार्गे ।
उपास्य भक्त्या हरिमीशितारं
व्रजेद्विमुक्तिं हरिनामतो वा ॥"
"नातः परङ्कर्मनिबन्धकृन्तन-
म्मुमुक्षतान्तीर्थपदानुकीर्तनात् ।
न यत् पुनः कर्मसु सज्जते मनो
रजस्तमोभ्या×ङ्कलिलन्ततोऽन्यथा ॥"
" + औत्तानपाद भगवांस्तव शार्ङ्गधन्वा
देवः क्षिणोत्ववनतार्तिहरो विपक्षान् ।
यन्नामधेयमभिधाय निशम्य चाद्धा*
† लोकोऽञ्जसा‡ तरति दुस्तरमङ्ग मृत्युम् ॥"

× कलिलम् = मलिनम् । + "औत्तानपादे" इत्यकेरळपाठः । स चापत्यार्थकप्रत्ययान्तोऽपि भग्नच्छन्दस्कः । * अद्धा = साक्षात् । जन्मान्तरव्यवधानमन्तरेत्यर्थः । † लोकः = प्राणिमात्रम् । अस्ति हि काककुक्कुरप्रभृतीनामपि श्रीगुरुमरुत्सदनादिसन्निहितानां भगवन्नामधेयश्रवणसौलभ्यम् । ‡ अञ्जसा = सुखेनैव । साधनचतुष्टयसाधनपूर्वकवेदान्तश्रवण-

टिप्पणी

"परदाररतो वाऽपि परापकृतिकारकः ।
स शुद्धो मुक्तिमाप्नोति कृष्णनामानुकीर्तनात् ॥"
"वासुदेवेति सङ्कीर्त्य सुरापो व्याधितोऽपि वा ।
मुक्तो जायेत नियतम्महाविष्णुः प्रसीदति ॥"
"यस्य नाम्नि स्मृते मर्त्यस्समुत्क्रान्तेरनन्तरम् ।
प्राप्नोति शाश्वतं स्थानन्ततः पूज्यतरो हि कः ॥"
"जन्ममृत्युप्रशमनम्मूलाविद्याविनाशनम् ।
कृष्णसङ्कीर्तनं विद्धि × यतो नान्यद्वदाम्यहम् ॥"
"महादेव महादेव महादेवेत्ययन्ध्वनिः ।
मोक्षलक्ष्मीगृहद्वारकवाटोद्घाटनध्वनिः ॥"
"कबळे कबळे चैव कुर्याद्गोविन्दकीर्तनम् ।
नित्योपवासी स नरो मुक्तसङ्गो न संशयः ॥"
"विसृज्य लज्जाँय्योऽधीते मन्नामानि निरन्तरम् ।
कुलकोटिसमायुक्तो लभते मामकम्पदम् ॥"
"अहो चित्रमहो चित्रमहो चित्रं हि पाण्डव ।
हरिनाम्नि स्थिते लोकस्संसारे वर्तते पुनः ॥"
"क चाहङ्कितवः पापो ब्रह्मघ्नो निरपत्रपः ।
क च नारायणेत्येतद्भगवन्नाम मङ्गलम् ॥"
"रामेति कीर्तनं राजन् सर्वरोगनिवारणम् ।
प्रायश्चित्तं हि पापानाम्मुक्तिदं सर्वदेहिनाम् ॥"

---

मननादिक्लेशान् विनैवेत्यर्थः । उपापीपदच्छेदं भगवन्नामकौमुद्यान्तृतीयपरिच्छेदे, श्रुतश्रुतिशिरस्समयानामपि कथञ्चन जाततत्त्वज्ञानानामपि निमीलिततत्त्वज्ञानानान्तत्त्वज्ञानोन्मीलनविरोधिविघ्नविघातकतया भगवन्नामश्रवणावश्यकत्वमुपदर्श्य तदनन्तरं श्रुतिप्रामाण्येन । × यतः = कृष्णसङ्कीर्तनात् अन्यत् साधनमहन्न वदामि ।

टिप्पणी

"असारभूतसंसारसागरोत्तारकन्नृणाम् ।
व्यसनोत्तारकञ्चैव हरिरित्यक्षरद्वयम् ॥"

"महाव्याधिसमाच्छन्नो राजबाधोपपीडितः ।
नारायणेति सङ्कीर्त्य निरातङ्को भवेन्नरः ॥"

"ईशोऽहं सर्वजगतान्नाम्नां विष्णोर्हि जापकः ।
सत्यं सत्यं वदाम्येव हरेर्नाम गतिर्नृणाम् ॥"

"हित्वा सकलपापानि लब्ध्वा सुकृतसञ्चयम् ।
स पूतो जायते धीमान् मुरजिन्नामकीर्तनात् ॥"

"महतस्तपसो मूलम्प्रसवम्पुण्यसन्ततेः ।
धर्मार्थकाममोक्षार्थङ्कुरु गोविन्दकीर्तनम् ॥"

"स्वर्गापवर्गयोः पुंसाङ्कारणम्भुवि सम्पदाम् ।
सर्वासामपि सिद्धीनाम्मूलन्तन्नामकीर्तनम् ॥"

"सर्ववेदेषु यत् पुण्यं सर्वतीर्थेषु यत् फलम् ।
तत् फलं समवाप्नोति कीर्तयित्वा जनार्दनम् ॥"

"नारायणाक्षरम्पुण्यजिह्वाग्रे यस्य वर्तते ।
नारायणस्तमन्वेति वत्सङ्गौरिव वत्सला ॥"

"स स्नातस्सर्वतीर्थेषु सर्वयज्ञेषु दीक्षितः ।
स च दानफलम्प्राप्तो यस्तु सङ्कीर्तयेद्धरिम् ॥"

"स गङ्गा स गया सेतुस्स काशी स च पुष्करम् ।
जिह्वाग्रे वर्तते यस्य हरिरित्यक्षरद्वयम् ॥"

"किन्तीर्थैः किं हि गोदानैः किंय्यज्ञैर्युक्तदक्षिणैः ।
अहन्यहनि गोविन्दकीर्तनङ्कुर्वतान्नृणाम् ॥"

"किन्दानैः किन्तपोभिर्वा किंय्यज्ञैर्युक्तदक्षिणैः ।
अहन्यहनि गोविन्दकीर्तनम्परिशृण्वताम् ॥"

टिप्पणी

"न यज्ञैर्नापि विज्ञानैर्न प्रणामैर्न चार्चनैः ।
न च योगैस्तथा तुष्येद्यथा सङ्कीर्तनाद्धरिः ॥"

"न दानैर्विधिवद्दत्तैर्न पुष्पैर्नानुलेपनैः ।
तोषमेति महाबुद्धे यथा ×कीर्त्या जगत्पतिः ॥"

"इदमेव हि माङ्गल्यमिदमेव धनार्जनम् ।
जीवितस्य फलञ्चैतद्यद्दामोदरकीर्तनम् ॥"

"महिम्नस्तु हरेर्नाम्नः पारङ्गन्तुञ्च ईश्वराः ।
मनवोऽपि मुनीन्द्राश्च, कथन्तत् क्षुल्लको व्रजेत् ॥"

"तत्कीर्तनं स्वल्पफलं हि मत्वा
त्यजेति नूनङ्कथितम्भवद्भिः ।
तस्मिन् फलं श्रावयितुन्त्रिनेत्र-
श्श्रोतुञ्च तत् पद्मभवोऽधिकारी ॥"

"एतदेव परञ्ज्ञानमेतदेव परन्तपः ।
एष एव परो धर्मो वासुदेवस्य कीर्तनम् ॥"

"म ऋचम्मा यजुस्तात मा साम पठ किञ्चन ।
गोविन्देति हरेर्नाम गेयङ्गायस्व नित्यशः ॥"

"किन्तात वेदागमशास्त्रविस्तरै-
स्तीर्थैरनेकैरपि किम्प्रयोजनम् ।
यद्यात्मनो वाञ्छसि मोक्षकारण-
ङ्गोविन्द गोविन्द इति स्फुटं वद ॥"

"न वेदैर्न तपोभिर्वा सुतप्तैर्विधिवद्धरिः ।
सन्तुष्टिंयाति विश्वेशो यथा सङ्कीर्तनान्मुने ॥"

"सर्वतीर्थाभिगमनं सर्वाश्रमनिषेवणम् ।
न तथा पापविच्छित्यै हरेर्नामामृतंयथा ॥"

× कीर्त्या = कीर्तनेन ।

टिप्पणी

"ऋग्वेदोऽथ यजुर्वेदस्सामवेदो ह्यथर्वणः ।
अधीतास्तेन, येनोक्तं हरिरित्यक्षरद्वयम् ॥"
"× भवन्ति सर्वशास्त्राणि कृष्णनाम्नि स्थितान्यहो ।
एतत्तत्त्वन्न जानाति राजा वाऽपि भवानपि ॥"
"मानवो विष्णुनामानि पठन्नित्यमतन्द्रितः ।
यँय्यङ्काममभिध्यायेत्तन्तमाप्नोत्यसंशयम् ॥"
"नामापराधयुक्तानान्नामान्येव हरन्त्यघम् ।
अविश्रान्तिप्रयुक्तानि तान्येवार्थकराणि च ॥"
"उचितम्पापिनाम्पुंसामुपेक्षा हरिकीर्तने ।
खादन्ति मुक्ता माकन्दन्निम्बपत्रङ्क्रमेळकाः ॥"
"सर्वार्थशक्तियुक्तस्य देवदेवस्य चक्रिणः ।
यद्वाऽभिरोचते नाम तत् सर्वार्थेषु कीर्तयेत् ॥"

इत्येवम्प्रमुखान्यप्यसङ्ख्यवचनानि द्रष्टव्यानि । सुस्थितेऽपीत्थमहो अपामरतया प्रतीयमाना अपि केचन कर्मजडा (कर्मश्रद्धाभराक्रान्तमन्दमतयः) नेह श्रद्दधते । अत एवोक्तम्—

प्रायेण वेद तदिदन्न महाजनोऽय-
न्देव्या विमोहितमतिर्बत माययाऽलम् ।
त्रय्याजडीकृतमतिर्मधुपुष्पितायां
वैतानिके महति कर्मणि युज्यमानः ॥

(श्री० भा० ६ । ३ । २५)

इत्यादि । प्रत्युत श्रद्दधत एव मुग्धतया बुध्यमाना अपि केपि धन्यधुरीणा इति कोपि भगवदनुग्रह एव भक्तिमार्गे जनान् प्रवर्तयतीत्यलम् ।

---

× सर्वशास्त्राणि वेदवेदाङ्गादीनि कृष्णनाम्नि स्थितानि = तत्रैव व्यापारभेदेन पर्यवसितानि भवन्ति । अत एवोदाहृतम्प्राक्—

निखिलनिगमवल्लीसत्फलञ्चित्स्वरूपम् । इति ।

टीका

[1] तथा च—

को नु राजन्निन्द्रियवान् मुकुन्दचरणाम्बुजम् ।
न भजेत् सर्वतोमृत्युरुपास्यममरोत्तमैः ॥
(श्री० भा० ११ । २ । २)

तत्र भजनं विवृतम्——

श्रवणङ्कीर्तनं विष्णोस्स्मरणम्पादसेवनम् ।
अर्चनं वन्दनन्दास्यं सख्यमात्मनिवेदनम् ॥
इति पुंसाऽर्पिता विष्णौ भक्तिश्चेन्नवलक्षणा ।
क्रियते भगवत्यद्धा तन्मन्येऽधीतमुत्तमम् ॥
(श्री० भा० ७ । ५ । २३—२४)

[2] तदेवं सङ्क्षिप्तम्—

तस्माद्भारत सर्वात्मा भगवान् हरिरीश्वरः ।
श्रोतव्यः कीर्तितव्यश्च स्मर्तव्यश्चेच्छताऽभयम् ॥
(श्री० भा० २ । १ । ५)

क्रमेणोदाहरणम्—

टिप्पणी

धाम्नो गुरुमरुद्धामधाम्नो नाम्नोऽपरञ्जनाः ।
नास्ति तत्कोपरूपाघरोगविध्वंसनौषधम् ॥

---

१ भागवतधर्मत्वरूपसामान्यधर्मस्यैव लक्ष्यतावच्छेदकत्वात्तद्रीत्योदाहरति—तथा चेत्यादि । इन्द्रियवान् = भजनोपकरणभूतश्रोत्रवागादिमान् । एकादशस्कन्धवचनोदाहरणमिदमादिमकारिकाविवृतिविरति × विरचितटिप्पण्युदाहृतश्रुत्यादेरप्युपलक्षणम् । २ तत् = श्रवणकीर्तनादिभजनत्वकम् एवम् = वक्ष्यमाणप्रकारेण सङ्क्षिप्तम् ।

---

× विरत्यन्तस्य विरचितेत्यनेन सप्तमीसमासः ।

टीका

सङ्कीर्त्यमानो भगवाननन्त-
श्श्रुतानुभावो व्यसनं हि पुंसाम् ।
प्रविश्य चित्तं विधुनोत्यशेषं
व्यथा तमोऽर्कोऽभ्रमिवातिवातः ॥

मृषागिरस्ता ह्यसतीरसत्कथा
न कथ्यते यद्भगवानधोक्षजः ।
तदेव सत्यन्तदु हैव मङ्गल-
न्तदेव पुण्यम्भगवद्गुणोदयम् ॥

तदेव रम्यं रुचिरन्नवन्नव-
न्तदेव शश्वन्मनसो महोत्सवम् ।
तदेव शोकार्णवशोषणन्नृणां
यदुत्तमश्लोकयशोऽनुगीयते ॥

[1] न यद्वचश्चित्रपदं हरेर्यशो
जगत्पवित्रम्प्रगृणीत कर्हिचित् ।
तद्ध्वाङ्क्षतीर्थन्न तु हंससेवितं
यत्राच्युतस्तत्र हि साधवोऽमलाः ॥

टिप्पणी

१ चित्रपदमपि यद्वचो जगत्पवित्रं हरेर्यशः कर्हिचिदपि न प्रगृणीत, तद्ध्वाङ्क्षतीर्थमित्यादिरन्वयः ।

न यद्वचश्चित्रपदं हरेर्यशो
जगत्पवित्रम्प्रगृणीत कर्हिचित् ।
तद्वायसन्तीर्थमुशन्ति मानसा
न यत्र हंसा निरमन्त्युशिक्क्षयाः ॥

इति प्रथमस्कन्धे पञ्चमाध्याये दशमम्पद्यम् । तद्वदिहापि यद्वच इति दाक्षिणात्य एव समीचीनः पाठो न तु तद्वच इति वैदेशिक इति विशदम् ।

टीका

[1]स वाग्विसर्गो जनताघसम्प्लवो
यस्मिन् प्रतिश्लोकमबद्धवत्यपि ।
नामान्यनन्तस्य यशोऽङ्कितानि य-
च्छृण्वन्ति गायन्ति गृणन्ति साधवः ॥
(श्री० भा० १२ । १२ । ४७—५१)

यशश्श्रियामेव परिश्रमः परो
वर्णाश्रमाचारतपश्श्रुतादिषु ।
अविस्मृतिश्श्रीधरपादपद्मयो-
र्गुणानुवादश्रवणादिभिर्हरेः ॥
अविस्मृतिः कृष्णपदारविन्दयोः
क्षिणोत्यभद्राणि शमन्तनोति च ।
सत्त्वस्य शुद्धिम्परमात्मभक्ति-
ञ्ज्ञानञ्च विज्ञानविरागयुक्तम् ॥
(श्री० भा० १२ । १२ । ५३—५४)

स्मरतः पादकमलमात्मानमपि यच्छति ।
किन्वर्थकामान् भजतो नात्यभीष्टाञ्जगद्गुरुः ॥
(श्री० भा० १० । ८० । ११)

दृष्टन्तवाङ्घ्रियुगळञ्जनतापवर्ग-
म्ब्रह्मादिभिर्हृदि विचिन्त्यमगाधबोधैः ।
संसारकूपपतितोत्तरणावलम्ब-
न्ध्यायंश्चराम्यनुगृहाण यथा स्मृतिस्स्यात् ॥
(श्री० भा० १० । ६९ । १८)

टिप्पणी

1 तद्वाग्विसर्गो जनताघविप्लव इति प्रथमपञ्चमैकादशस्य प्रथमः पाठः । मध्यस्थितस्तु समानमेव ।

टीका

तन्नस्समादिशोपायँय्येन ते चरणाब्जयोः ।
स्मृतिर्यथा न विरमेदपि संसरतामिह ॥
(श्री० भा० १० । ७३ । १५)

तस्माद्रजोरागविषादमन्यु-
मानस्पृहाभयदैन्याधिमूलम् ।
हित्वा गृहं संसृतिचक्रवाळ-
न्नृसिंहपादम्भजताकुतोभयम् ॥ इति ।
(श्री० भा० ५ । १८ । १४)

अहो अमीषाङ्किमकारि शोभन-
म्प्रसन्न एषां स्विदुत स्वयं हरिः ।
यैर्जन्म लब्धन्नृषु भारताजिरे
मुकुन्दसेवौपयिकं स्पृहा हि नः ॥
(श्री० भा० ५ । १९ । २१)

यास्सम्पर्यचरन् प्रेम्णा पादसंवाहनादिभिः ।
जगद्गुरुम्भर्तृबुध्या तासाङ्किं वर्ण्यते तपः ॥
(श्री० भा० १० । ९० । २७)

वैदिकस्तान्त्रिको मिश्र इति मे त्रिविधो मखः ।
त्रयाणामीप्सितेनैव विधिना मां समर्चयेत् ॥
(श्री० भा० ११ । २७ । ७)

एवङ्क्रियायोगपथैः पुमान् वैदिकतान्त्रिकैः ।
अर्चन्नुभयतस्सिद्धिम्मत्तो विन्दत्यभीप्सिताम् ॥
(श्री० भा० ११ । २७ । ४९)

यत्पादयोरशठधीस्सलिलम्प्रदाय
दूर्वाङ्कुरैरपि विधाय सतीं सपर्याम् ।

टीका

अप्युत्तमाङ्कतिमसौ भजते त्रिलोकी-
न्दाश्वानविक्लवमनाः कथमार्तिमृच्छेत् ॥
(श्री० भा० ८ । २२ । २३)

अहो प्रणामाय कृतस्समुद्यमः
प्रपन्नभक्तार्थविधौ समाहितः ।
यल्लोकपालैस्त्वदनुग्रहोऽमरै-
रलब्धपूर्वोपसदेऽसुरेऽर्पितः ।
(श्री० भा० ८ । २३ । २)

तत्तेऽनुकम्पां सुसमीक्षमाणो
भुञ्जान एवात्मकृतं विपाकम् ।
हृद्वाग्वपुर्भिर्विदधन्नमस्ते
जीवेत यो मुक्तिपदे स दायभाक् ॥
(श्री० भा० १० । १४ । ८)

ममाद्यामङ्गलन्नष्टम्फलवांश्चैव मे भवः ।
यन्नमस्ये भगवतो योगिध्येयाङ्घ्रिपङ्कजम् ॥
(श्री० भा० १० । ३८ । ६)

पतितस्खलितो [1]वाऽऽर्तः क्षुत्वा वा विवशो ब्रुवन् ।
हरये नम इत्युच्चैर्मुच्यते सर्वपातकात् ॥
(श्री० भा० ११ । १२ । ४६)

नतास्स्म ते नाथ पदारविन्द-
म्बुद्धीन्द्रियप्राणमनोवचोभिः ।

टिप्पणी

१ वाकार एव दाक्षिणात्यः । औत्तरदेशिकेऽपि पूर्वम्मुद्रिते प्रस्तुत-पुस्तके भक्तिरसायननामके तत्पाठ एवानुसृतो दृश्यते न चकारः ।

टीका

यच्चिन्त्यतेऽन्तर्हृदि भावयुक्तै-
र्मुमुक्षुभिः कर्ममयोरुपाशात् ॥
(श्री० भा० ११ । ६ । ७)

श्रीमद्भगवद्गीतासु च——

मन्मना भव मद्भक्तो मद्याजी मान्नमस्कुरु ।
मामेवैष्यसि सत्यन्ते प्रतिजाने प्रियोऽसि मे ॥
(अ० १८ । श्लो० ६५)

यन्नामश्रुतिमात्रेण पुमान् भवति निर्मलः ।
तस्य तीर्थपदः किं वा दासानामवशिष्यते ॥
(श्री० भा० ९ । ५ । १६)

किञ्चित्रमच्युत तवैतदशेषवन्धो
दासेष्वनन्यशरणेषु यदात्मसात्त्वम् ।
योऽरोचयत् सह मृगैस्स्वयमीश्वराणां
श्रीमत्किरीटतटपीडितपादपीठः ॥
(श्री० भा० ११ । २९ । ४)

कायेन वाचा मनसेन्द्रियैर्वा
बुद्ध्याऽऽत्मना वाऽनुसृतस्वभावात् ।
करोति यद्यत्, सकलम्परस्मै
नारायणायेति समर्पयेत्तत् ॥
(श्री० भा० ११ । २ । ३६)

अहो भाग्यमहो भाग्यन्नन्दगोपव्रजौकसाम् ।
यन्मित्रम्परमानन्दम्पूर्णम्ब्रह्म सनातनम् ॥
(श्री० भा० १० । १४ । ३२)

इत्थं सताम्ब्रह्मसुखानुभूत्या
दास्यङ्गतानाम्परदैवतेन ।

टीका

मायाश्रितानामरदारकेण
साकं विजह्रुः कृतपुण्यपुञ्जाः ॥
(श्री० भा० १० । १२ । ११)

मर्त्यो यदा त्यक्तसमस्तकर्मा
निवेदितात्मा विचिकीर्षितो मे ।
तदाऽमृतत्वम्प्रतिपद्यमानो
मयाऽऽत्मभूयाय च कल्पते वै ॥
(श्री० भा० ११ । २९ । ३४)

धर्मार्थकाम इति योऽभिहितस्त्रिवर्ग
ईक्षा त्रयी नयदमौ विविधा च वार्ता ।
मन्ये तदेतदखिलन्निगमस्य सत्यं
स्वात्मार्पणं स्वसुहृदः परमस्य पुंसः ॥
(श्री० भा० ७ । ६ । २६)

देवर्षिभूताप्तनृणाम्पितॄणा-
न्न किङ्करो नायमृणी च राजन् ।
सर्वात्मना यश्शरणं शरण्य-
ङ्गतो मुकुन्दम्परिहृत्य कर्तम् ॥
(श्री० भा० ११ । ५ । ४१)

तस्मादेवंरूपेण यथाशक्ति भागवतधर्मानुष्ठानं भवति चतुर्थी भूमिका । एतच्चतुष्टयं साधनमेव ।

ततो रत्यङ्कुरोत्पत्तिः । रतिर्नाम भक्तिरसस्थायिभावो द्रुतचित्तप्रविष्टभगवदाकारतारूपस्संस्कारविशेष इति वक्ष्यते । स एवाङ्कुरो भागवतधर्मानुष्ठानात्मकबीजस्य । तदुक्तम्—

टिप्पणी

१ स एवाङ्कुर इति । सूक्ष्मतया विद्यमानत्वे सति, परिपाकविशेषेण स्थूलतामासाद्य बहुलफलशालितया भावित्वादिति भावः । कस्य बीजस्याङ्कुर

टीका

सतां प्रसङ्गान्मम वीर्यसंविदो
भवन्ति हृत्कर्णरसायनाः कथाः ।
तज्जोषणादाश्वपवर्गवर्त्मनि
श्रद्धा रतिर्भक्तिरनुक्रमिष्यति ॥

(श्री० भा० ३ । २५ । २५)

श्रद्धा भक्तिरसानुभवे, ततो रतिः स्थायिभावः, ततस्स एव भक्तिरसतां प्राप्तोऽनुक्रमेण भविष्यतीत्यर्थः ।

एवं मनः कर्मवशं प्रयुङ्क्ते
[1]ह्यविद्ययाऽऽत्मन्युपधीयमाने ।
प्रीतिर्न यावन्मयि वासुदेवे
न मुच्यते देहयोगेन तावत् ॥

(श्री० भा० ५ । ५ । ६)

भवापवर्गो भ्रमतो यदा भवे-
ज्जनस्य तर्ह्यच्युत सत्समागमः ।
सत्सङ्गमो यर्हि तदैव सद्गतौ
परावरेशे त्वयि जायते मतिः ॥

(श्री० भा० १० । ५१ । ५४)

त्वयि मेऽनन्यविषया मतिर्मधुपतेऽसकृत् ।
रतिमुद्वहतादद्धा गङ्गेवौघमुदन्वति ॥

(श्री० भा० १ । ८ । ४२)

टिप्पणी

इत्यपेक्षायामत्राङ्कुरत्वारोपात् पूर्वभूमिकायां बीजत्वारोपम्मूलसूचितमभिसन्धायाह—भागवतधर्मेति । १ हिशब्दसहितोऽयन्दाक्षिणात्यः पाठः ।

टीका

कर्मभिर्भ्राम्यमाणानां यत्र क्वापीश्वरेच्छया ।
मङ्गलाचरितैर्दानैरतिर्नः कृष्ण ईश्वरे ॥
(श्री० भा० १० । ४७ । ६७)

इयञ्च पञ्चमी भूमिका भक्तेस्स्वरूपम् ।[1] एतस्या एव परिपाकविशेषादन्याष्षड्भूमिकाः फलभूताः ।

स्वरूपाधिगतिस्ततः । प्रत्यगात्मस्वरूपस्य स्थूलसूक्ष्मदेहद्वयातिरिक्तत्वेन साक्षात्कारष्षष्ठी भूमिका ।[2] अन्यथा[3] देहेन्द्रियादिविक्षेपेण जाताया अपि रतेरनिर्वाहात् ।
[4] तदुक्तम्—

ज्ञानन्निश्रेयसार्थाय पुरुषस्यात्मदर्शनम् ।
यदाहुर्वर्णये तत्ते हृदयग्रन्थिभेदनम् ॥

टिप्पणी

१ एतस्या एवेत्यादि । सश्रद्धभागवतधर्मानुष्ठानात्मकबीजस्याङ्कुरभावमापन्नायां भगवद्भक्तिकल्पलतिकायामङ्कुरावस्थामतिक्रम्य किञ्चित् परिपाकं प्राप्तायां सत्यां स्वरूपाधिगत्याख्यं फलं, ततोऽधिकं तं प्राप्ताया-मनुपमानन्दात्मकभगवत्प्रेमवृद्धिरूपन्तदित्यनया सरण्या भक्तिकल्पलतायां षट् फलानि विलसन्तीत्यर्थः । २ स्वरूपाधिगतेः प्रतिबन्धकनिरसनमुखेन प्रकृतोपयोगन्दर्शयत्यन्यथेत्यादि । वक्ष्यति "चैतादृशतत्त्वज्ञाने सति वैराग्यदार्ढ्याद्भगवति प्रेम्णोवृद्धिर्भवती"ति । ३ देहेन्द्रियादिष्वहम्ममाभिमानेनेत्यर्थः । प्रथमकारिकाविवरणभणितरीत्या पुनरष्टाङ्गयोगानुष्ठानेन तैलधारावदविच्छिन्नभगवदेकाकारप्रत्ययपरम्परात्मकचित्तैकाग्रययोग्यतासम्पादनादेव विक्षेपाभाव इति तत्रैव स्फुटम् । अनिर्वाहात् = कार्याक्षमत्वात् । ४ तत् स्वरूपाधिगतेः कृत्यमुक्तमित्यर्थः ।

टीका

अनादिरात्मा पुरुषो निर्गुणः प्रकृतेः परः ।
प्रत्यग्धामा स्वयञ्ज्योतिर्विश्वँय्येन समन्वितम् ॥
स एष प्रकृतिं सूक्ष्मान्दैवीङ्गुणमयीं विभुः ।
यदृच्छयैवोपगतामभ्यपद्यत लीलया ॥
गुणैर्विचित्रास्सृजतीं सरूपाः प्रकृतिम्प्रजाः ।
विलोक्य मुमुहे सद्यस्स इह ज्ञानगूहया ॥
एवम्पराभिध्यानेन कर्तृत्वं प्रकृतेः पुमान् ।
कर्मसु क्रियमाणेषु गुणैरात्मनि मन्यते ॥
तदस्य संसृतिर्बन्धः पारतन्त्र्यञ्च तत्कृतम् ।
भवत्यकर्तुरीशस्य साक्षिणो निर्वृतात्मनः ॥
(श्री० भा० ३ । २६ । २—७)

तथा——

आत्मा नित्योऽव्ययश्शुद्ध एकः क्षेत्रज्ञ आश्रयः ।
अविक्रियस्स्वदृग्घेतुर्व्यापकोऽसङ्ग्यनावृतः ॥
एतैर्द्वादशभिर्विद्वानात्मनो लक्षणैः परैः ।
अहम्ममेत्यसद्भावन्देहादौ मोहजन्त्यजेत् ॥
( श्री० भा० ७ । ७ । १९—२० )

एवं शुद्धे त्वम्पदलक्ष्येऽवगते तत्पदलक्ष्येण सहाभेदज्ञानम्भवति । एतदप्युक्तम्—

कृष्णमेनमवेहि त्वमात्मानमखिलात्मनाम् ।
जगद्धिताय सोऽप्यत्र देहीवाभाति मायया ॥
( श्री० भा० १० । १४ । ५५ )

इत्यादि । एतादृशज्ञानस्य च भक्त्युत्तरकालत्वन्दर्शितम्—

वासुदेवे भगवति भक्तियोगः प्रयोजितः ।
जनयत्याशु वैराग्यञ्ज्ञानञ्च, यदहैतुकम् ॥
( श्री० भा० १ । २ । ७ )

टीका

श्रेयस्स्रु(स्रू)तिम्भक्तिमुदस्य ते विभो
क्लिश्यन्ति ये केवलबोधलब्धये ।
तेषामसौ क्लेशल एव शिष्यते
नान्य,द्यथा स्थूलतुषावघातिनाम् ॥ इत्यादि ।
(श्री० भा० १० । १४ । ४ )

[1]एतादृशतत्त्वज्ञाने सति वैराग्यदार्ढ्याद्भगवति प्रेम्णो वृद्धिर्भवतीति सप्तमी भूमिका । यथा——

न्यस्तक्रीडनको बालो जळवत्तन्मनस्तया ।
कृष्णग्रहगृहीतात्मा न वेद जगदीदृशम् ॥
आसीनः पर्यटन्नश्नञ्छयानः प्रपिबन् ब्रुवन् ।
नानुसन्धत्त एतानि गोविन्दपरिरम्भितः ॥

टिप्पणी

१ एतादृशेत्यादि । अत एव "वासुदेवातिरिक्तं सर्वं सत्यन्नास्ति मायिकत्वात्, वासुदेव एवात्मत्वात् प्रियतमस्सत्यः" इति ज्ञानस्य श्रीगीतोपनिषदुपदिष्टस्य मोक्षपर्यन्तसकलफलनिरपेक्षत्वलिङ्गकपरवैराग्यद्वारा कृतकृत्यताहेतुभूतभगवत्प्रेमप्रकर्षसम्पादकत्वन्द्वात्रिंसकारिकाटीकायाम्प्रतिपादितम् ।

वासुदेवपद"न्तत्त्वमसी"त्यत्रत्यतत्पदम् ।
"कृष्णमेनमवेहि त्वमात्मानमखिलात्मनाम् ।"
अत्र कृष्णपदञ्चैव किल पर्यायताङ्गतम् ॥
× बर्हिबर्हकृतोत्तंसविग्रहस्य तदर्थता ।
अन्ते समर्पणश्लोकविलोके + विशदीभवेत् ॥

× बर्हिबर्हेण कृत उत्तंसो यस्य स चासौ विग्रहश्च तस्य । + विशेषेण—टिप्पण्या सह दर्शने सति । लोक्—दर्शने ।

टीका

क्वचिद्रुदति वैकुण्ठचिन्ताशबळचेतनः ।
क्वचिद्धसति तच्चिन्ताह्लाद उद्गायति क्वचित् ॥
नदति क्वचिदुत्कण्ठो विलज्जो नृत्यति क्वचित् ।
क्वचित्तद्भावनायुक्तस्तन्मयोऽनुचकार ह ॥
क्वचिदुत्पुळकस्तूष्णीमास्ते संस्पर्शनिर्वृतः ।
अस्पन्दप्रणयानन्दसलिलामीलितेक्षणः ॥
स उत्तमश्लोकपदारविन्दयो-
र्निषेवयाऽकिञ्चनसङ्गलब्धया ।
तन्वन् परान्निर्वृतिमात्मनो मुहु-
र्दुस्सङ्गदीनान्यमनश्शर्म व्यधात् ॥
(श्री० भा० ७ । ४ । ३७—४२)

स प्रह्लादः । तथा—

एवन्निर्जितषड्वर्गैः क्रियते भक्तिरीश्वरे ।
वासुदेवे भगवति यथा संलभते रतिम् ॥
निशम्य कर्माणि गुणानतुल्यान्
वीर्याणि लीलातनुभिः कृतानि ।
यदाऽतिहर्षोत्पुळकाश्रुगद्गद-
स्प्रोत्कण्ठ उद्गायति रौति नृत्यति ॥
यदा ग्रहग्रस्त इव क्वचिद्धस-
त्याक्रन्दते ध्यायति वन्दते जनम् ।
मुहुश्श्वसन् वक्ति हरे जगत्पते
नारायणेत्यात्ममतिर्गतत्रपः ॥
तदा पुमान् मुक्तसमस्तबन्धन-
स्तद्भावभावानुकृताशयाकृतिः ।
निर्दग्धबीजानुशयो महीयसा
भक्तिप्रयोगेण समेत्यधोक्षजम् ॥

टीका

अधोक्षजालम्भ(म्ब)मिहाशुभात्मन-
श्शरीरिणस्संसृतिचक्रशातनम् ।
तद्ब्रह्म निर्वाणसुखं विदुर्बुधा-
स्ततो भजध्वं हृदये हृदीश्वरम् ॥
(श्री० भा० ७ । ७ । ३३—३७)

एवमन्यदप्यूहनीयम् । एतादृशसप्तमीपर्यन्त एव साधनाभ्यासः । अतः परन्तु भूमिकाचतुष्टयमयत्नसाध्यम् ।

तस्याथ स्फुरणम् । [1]तस्य प्रेमास्पदीभूतस्य भगवतस्साक्षात्कारः प्रेमातिशयहेतुकोऽष्टमी भूमिका । तदुक्तम्—

नैकात्मताम्मे स्पृहयन्ति केचि-
न्मत्पादसेवाभिरता मदीहाः ।
येऽन्योन्यतो भागवताः प्रसज्य
सभाजयन्ते मम पौरुषाणि ॥
[2]पश्यन्ति मे रुचिराण्यम्ब सन्तः
प्रसन्नवक्त्रारुणलोचनानि ।
रूपाणि दिव्यानि वरप्रदानि
साकं वाचं स्पृहणीयां वदन्ति ॥

टिप्पणी

१ सगुणन्निर्गुणञ्चेति भगवतो द्वे रूपे । तत्राद्यं रूपन्तत्पदस्य वाच्यम् । द्वीतीयं लक्ष्यम् । तस्य साक्षात्कारष्षष्ठ्यां भूमिकायान्त्वम्पदलक्ष्यप्रत्यक्षलक्षणायामन्तर्भूतत्वेन पूर्वन्दर्शितः । × प्रथमस्य पुनरगणितगुणगणपरिपूर्णतनुनोऽष्टमी सेति विवृणोति—तस्येत्यादि । २ एवमेव दाक्षिणात्यपुस्तकेषु पाठः । औत्तरेषु तु "पश्यन्ति ते मे" इति ।

× प्रथमस्य = सगुणस्य रूपस्य । साक्षात्कार इत्यनुषङ्गः ।

टीका

तैर्दर्शनीयावयवैरुदार-
विलासहासेक्षितवामसूक्तैः।
हृतात्मनो हृतप्राणांश्च भक्ति-
रनिच्छतो, मे गतिमण्वीम्प्रयुङ्क्ते॥
(श्री० भा० ३।२५।३४—३६)

एवमन्यदप्यूह्यम्।

ततः भगवद्धर्मनिष्ठा। यथा श्रीविष्णुपुराणे—

[1]साळग्रामे महाभागो भगवन्न्यस्तमानसः।
उवास सुचिरङ्कालम्मैत्रेय पृथिवीपतिः॥
अहिंसादिष्वशेषेषु गुणेषु गुणिनां वरः।
अवाप परमाङ्काष्ठाम्मनसश्चापि सँय्यमे॥
यज्ञेशाच्युत गोविन्द माधवानन्त केशव।
कृष्ण विष्णो हृषीकेशेत्याह राजा स केवलम्॥
नान्यज्जगाद मैत्रेय किञ्चित् स्वप्नान्तरेष्वपि।
एतत्परन्तदर्थञ्च विना नान्यदचिन्तयत्॥
समित्पुष्पकुशादानञ्चक्रे देवक्रियाकृते।
नान्यानि चक्रे कर्माणि निस्सङ्गो योगतापसः॥

पृथिवीपतिर्भरतः। श्रीमद्भागवते च—

अम्बरीषो महाभागस्सप्तद्वीपवतीम्महीम्।
अव्ययाञ्च श्रियं लब्ध्वा विभवञ्चातुलम्भुवि॥
मेनेऽतिदुर्लभम्पुंसां सर्वन्तत् स्वप्नसंस्तुतम्।
विद्वान् विभवनिर्वाणन्तमो विशति यत् पुमान्॥

टिप्पणी

१ साळग्रामे=तदवच्छेदेन भगवति न्यस्तं मानसँय्येन सः

टीका

वासुदेवे भगवति तद्भक्तेषु च साधुषु ।
प्राप्तो भावम्परं विश्वँय्येनेदं लोष्टवत् स्मृतम् ॥

स वै मनः कृष्णपदारविन्दयो-
र्वचांसि वैकुण्ठगुणानुवर्णने ।
करौ हरेर्मन्दिरमार्जनादिषु
श्रुतिञ्चकाराच्युतसत्कथोदये ॥

मुकुन्दलिङ्गालयदर्शने दृशौ
तद्भृत्यगात्रस्पर्शेऽङ्गसङ्गमम् ।
घ्राणञ्च तत्पादसरोजसौरभे
श्रीमत्तुळस्या रसनान्तदर्पिते ॥

पादौ हरेः क्षेत्रपदानुसर्पणे
शिरो हृषीकेशपदाभिवन्दने ।
कामञ्च दास्ये न तु कामकाम्यया
यथोत्तमश्लोकजनाश्रया रतिः ॥

एवं सदा कर्मकलापमात्मनः
परेऽधियज्ञे भगवत्यधोक्षजे ।
सर्वात्मभावं विदधन्महीमिमा-
न्तन्निष्ठविप्राभिहितश्शशास ह ॥

( श्री० भा० ९ । ४ । १५—२१ )

यथा वा—

तस्मोपयातम्प्रतियन्तु विप्रा
गङ्गा च देवी धृतचित्तमीशे ।
द्विजोपसृष्टः कुहकस्तक्षको वा
दशत्वलङ्गायत विष्णुगाथाः ॥

टीका

पुनश्च भूयाद्भगवत्यनन्ते
रतिः प्रसङ्गश्च तदाश्रयेषु ।
महत्सु यांँय्यामुपयामि सृष्टि-
र्मैत्र्यस्तु सर्वत्र नमो द्विजेभ्यः ॥

इति स्म राजाऽध्यवसाययुक्तः
प्राचीनमूलेषु कुशेषु धीरः ।
उदङ्मुखो दक्षिणकूल आस्ते
समुद्रपत्न्यास्स्वसुतन्यस्तभारः ॥

राजा परीक्षित् ।

एवञ्च तस्मिन्नरदेवदेवे
प्रायोपविष्टे दिवि देवसङ्घाः ।
प्रशस्य भूमौ व्यकिरन् प्रसूनै-
र्मुदा मुहुर्दुन्दुभयश्च नेदुः ॥

( श्री० भा० १ । १९ । १५—१८ )

यथा वा—

वयन्त्विह महायोगिन् भ्रमन्तः कर्मवर्त्मसु ।
त्वद्वार्तया तरिष्यामस्तावकैर्दुस्तरन्तमः ॥

( श्री० भा० ११ । ६ । ४८ )

त्वयोपभुक्तस्रग्गन्धवासोलङ्कारचर्चिताः ।
उच्छिष्टभोजिनो दासास्तव मायाञ्जयेम हि ॥

(श्री० भा० ११ । ६ । ४६)

एवमन्यदप्यूहनीयम् । भगवद्धर्मनिष्ठा प्रयत्नपूर्विका साधनम् । स्वतस्सिद्धा तु भगवद्धर्मनिष्ठा भवति फलभूता नवमी भूमिका ।

टीका

अतस्स्वस्मिंस्तद्गुणशालिता । यथा—

अथो विभूतिम्मम [1] मायया चिता-
मैश्वर्यमष्टाङ्गमनुप्रवृत्तम् ।
श्रियम्भागवतीं वा [2] ऽस्पृहयन्ति भद्रा-
म्परस्य मे तेऽश्नुवते तु लोके ॥
न कर्हिचिन्मत्पराश्शान्तरूपे
नङ्क्ष्यन्ति नो मेऽनिमिषो लेढि हेतिः ।
येषामहम्प्रिय आत्मा सुतश्च
सखा गुरुस्सुहृदो दैवमिष्टम् ॥
(श्री० भा० ३ । २५ । ३७--३८)

एवमविनश्वरभगवत्तुल्यगुणाविर्भावो भवति दशमी भूमिका ।

प्रेम्णोऽथ परमा काष्ठा [3] प्राणपरित्यागावधिविरहासहिष्णुतारूपा । यथा—

टिप्पणी

१ मायाविनस्तामित्येवमौत्तरदेशिकपुस्तकेषु दर्शनेऽप्यौत्तरेये प्रस्तुतपुस्तके भक्तिरसायनसम्ज्ञके प्राक्प्रकाशितेऽयमस्मदीयपाठ एवाऽऽदृततयेक्ष्यते । २ अकारो नञर्थे । अभावे नह्य नो नापीत्यमरः । ३ प्राणानाम्परित्याग एवावधिर्नान्यः कश्चिदपि यस्यास्तादृशी या विरहासहिष्णुता, तद्रूपा । अत्र विरहो वियोगः वियुक्तोऽस्मीत्याकारकमनोवृत्तिरूपः तत्सहिष्णुता = तत्सहनशीलत्वम् । तत्सहनशक्तिरिति यावत् । तदभावो विरहासहिष्णुता । यद्वाऽनेन विरहो मया सोढुन्न शक्यत इत्याकारकधीविशेष एव सा ।

टीका

गोपीनाम्परमानन्द आसीद्गोविन्ददर्शने ।
क्षणँय्युगशतमिव यासाँय्येन विनाऽभवत् ॥
(श्री० भा० १० । १९ । १६)

अटति यद्भवानह्नि काननन्
न्त्रुटि [1] युगायते त्वामपश्यताम् ।
कुटिलकुन्तळं श्रीमुखञ्च ते
जड उदीक्षताम्पक्ष्मकृद्दृशाम् ॥
(श्री० भा० १० । ३१ । १५)

यर्ह्यम्बुजाक्षापससार भो भवान्
कुरून् मधून् वाऽथ सुहृद्दिदृक्षया ।

टिप्पणी

१ छन्दोभङ्गस्य दुस्सहत्वा''द्रतिरारमन् यतो भवे''दित्यादौ ङ्यादिव-
दत्र रेफलोपः । एवं

हरिरिति सकृदुच्चरेत-
न्दस्युच्छलेनापि यैर्मनुजैः ।
जननीमार्गम्मुक्त्वा
मम पदवीन्निविशते मर्त्याः ॥

इति श्लोके छकारस्य चकारपूर्वकत्वाभावो, निविशत इत्येकवचनञ्च
च्छन्द एव परिपालयति । इत्थमपरत्रापि । लोकेऽपि तद्भङ्गभयात्
"पातयाम्प्रथममासे"त्यादिकमेव, न तु प्रथमम्पातयामासेत्यादि । अत एव

अपि माषम्मषङ्कुर्याच्छन्दोभङ्गन्न कारयेत् ।

इतिच्छन्दोविदः । अपि च--प्रथमषष्ठपञ्चमस्य भावार्थदीपिकायां
"रेफयकारयोर्विश्लेषश्छन्दोनुरोधेने"ति स्थितम् । परिदृश्यते चेह रेफरहित
एवच्छन्दोऽनुरोधी केरळेषु लिखितपुस्तकपाठः ।

लक्षणम्भगवद्भक्तेस्साधनं सोपपत्तिकम् ।
सभूमिकं स्वरूपञ्च यथाबुद्धीह वर्णितम् ॥३७॥

इति श्रीपरमहंसपरिव्राजकाचार्यवर्य-विश्वविश्रुत[1]सर्वतन्त्र-स्वतन्त्रताक-श्रीमधुसूदनसरस्वतीयतिवरविरचिते श्रीभगवद्भक्तिरसायने भक्तिसामान्यनिरूपणन्नाम प्रथम उल्लासः ।

टीका

तत्राब्दकोटिप्रतिमः क्षणो भवे-
द्रविं विनाऽक्ष्णोरिव नस्तवाच्युत ॥
(श्री० भा० १ । ११ । ९)

अन्तर्गृहगताः काश्चिद्गोप्योऽलब्धविनिर्गमाः ।
कृष्णन्तद्भावनायुक्ता दध्युर्मीलितलोचनाः ॥
दुस्सहप्रेष्ठविरहतीव्रतापधुताशुभाः ।
ध्यानप्राप्ताच्युताश्लेषनिर्वृत्या क्षीणमङ्गलाः ॥
तमेव परमात्मानञ्जारबुध्याऽपि सङ्गताः ।
जहुर्गुणमयन्देहं सद्यः प्रक्षीणबन्धनाः ॥
(श्री० भा० १० । २९ । ९—११)

टिप्पणी

१ विश्वविश्रुतेति । अत एव

मिथिलायां समायाते मधुसूदनपण्डिते ।
चकम्पे तर्कवागीशो भीतिम्प्राप गदाधरः ॥

इत्यादि × लोकप्रसिद्धिः ।

× ननु नैतावन्मात्रम्प्रकृतार्थमुपष्टम्भितुमलमित्यत आह्लादीति । तदर्थः पुनरनन्तरोल्लासद्विषष्टितमकारिकाविवरणप्रक्रमे स्फुटीभविष्यति ।

टीका

इत्यादि । दिङ्मात्रमिहोदाहृतम् । [1]अनन्तरोल्लासे पुनरेतत् सप्रपञ्चमुदाहरिष्यते प्रेमेत्युपरम्यते ॥ ३४ ॥ ३५ ॥ ॥ ३६ ॥ ३७ ॥

इति श्रीपरमहंसपरिव्राजकाचार्यवर्य-विश्वविश्रुतसर्वतन्त्रस्वतन्त्रताक-श्रीमधुसूदनसरस्वतीयतिवरकृतश्रीभगवद्भक्तिरसायनप्रथमोल्लासस्य तादृशयतिवरैरेव विरचिता टीकामतल्लिका ।

टिप्पणी

१ अनन्तरोल्लासे पुनरेतत्प्रेम (परमकाष्ठामधिरूढम्भगवत्प्रेम) सप्रपञ्चमुदाहरिष्यत इति योजना ।

उपरितनावुल्लासौ
सविवरणौ कर्तुमुद्यमोऽनेन ।
प्रकटतरो ग्रन्थकृतां,
×वरविवृतिर्हन्त तादृशी कुत्र ? ॥

× वरेत्यादि । उपरितनावप्युल्लासौ यत्सहितौ कर्तुङ्ग्रन्थकृतामुद्यमोऽनेन वाक्येन विशदतरस्सा वरविवृतिः कुत्र भवति ? कदम् इत्यर्थः । पूर्वमपि तैस्तैष्टीकावाक्यैश्चितुरैरुत्तरोल्लासविवृतिः प्रसज्यत इति वेदितव्यम् ।

कलायकुसुमश्यामङ्कलवेणुकराम्बुजम् ।
करुणामृतपाथोधिङ्कलये हृदये महः ॥

## ॥ श्रीकृष्णार्पणमस्तु ॥

  

# अथ द्वितीय उल्लासः ।

द्रुते चित्ते प्रविष्टा या गोविन्दाकारता स्थिरा ।
सा भक्तिरित्यभिहिता, विशेषस्त्वधुनोच्यते ॥१॥

किञ्चिद्व्याख्या

गुरुवायुपुराधीशपररूपपदाम्बुजान् ।
[1]शरणङ्कुरुते हन्त गुरुदेवतरूनयम् ॥
[2]भागतः प्रथमोल्लासटीके व्याकृत्य यत्नतः ।
अपरोल्लासयोरेषा किञ्चिद्व्याख्या वितन्यते ॥

तत्र खलु [3]भक्तिसामान्यपरे भक्तिरसायनस्य पारमहंसस्य प्रथमोल्लासे प्रथमकारिकाप्रसक्ताम्भक्तेरसरूपतया पुमर्थतां विवरितुम्प्रथमतो "द्रुतस्ये"त्यादितृतीयकारिकयोक्त"श्चित्तद्रव्यं हो"त्यारभ्य समर्थितश्च यत् [4]भक्तिसामान्य-

टिप्पणी

१ शरणतया करणञ्च—भो भो अपारनिरुपाधिककृपासुधाजलधयोऽत्रभवन्तो भवन्तोऽस्य वराकवरस्य शरणम्भवन्त्वित्याकारकं शरणतया भवनस्य प्रार्थनम् । वस्तुतः पुनरत्र शरणत्वस्य मुख्यस्य तादृशजलधित्वसहचरस्य स्वतस्सिद्धतया निष्पादनायोगाच्छरणताबुद्धिविषयत्वरूपमेव तद्विवक्षितमतस्ताञ्छरणङ्कुरुत इत्यस्य तेषु शरणताबुद्धिङ्कुरुत इत्यर्थः । यद्वा भजत इति कुरुत इत्यस्यार्थः । क्रियासामान्यवाचिनः कृञः "कुरु काष्ठ"मित्यादावाहरणादिक्रियाविशेषेऽपि प्रयोगदर्शनाद्भजनपरत्वम् । यथा श्रीमन्नामसहस्रान्तर्गतं शिष्टकृन्नामधेयम्भाष्ये विवृतमस्ति—शिष्टान् करोति पालयतीति शिष्टकृदिति । २ भागतः=भागेषु । ३ भक्तीति । भगवद्भक्तीत्यर्थः । इत्थमग्रेऽपि । ४ भक्तिरसत्वयोग्यतदयोग्यसाधारणी वा सर्वविधा भक्तिस्तत्सामान्यलक्षणमित्यर्थः । द्वेषभक्तेर्भक्तिरसत्वानर्हत्वमग्रे दर्शयिष्यति ।

किञ्चिद्व्याख्या

लक्षणम्, तदनुवादपुरस्कारेण प्रथमोल्लासानन्तरन्द्वितीयोल्लासप्रवृत्तौ[1] सङ्गतिन्दर्शयन् भक्तिविशेषोक्तिप्रतिज्ञाञ्च विदधानो द्वितीयोल्लासमुपक्रमते—द्रुते चित्ते प्रविष्टेति। गोविन्दस्य श्रीनन्दभूतलभूषणभूतस्याकारो यस्मिंस्तद्गोविन्दाकारम्। तस्य भावस्तत्ता=गोविन्दस्याकारः। स[2] च स्वरूपेण गोविन्द एवेति प्रथमोल्लासदशमकारिकाविवरणे सयुक्तिकम्प्रकटितम्। आलम्बनविभावस्थायिभावयोरैक्यशङ्कानिरसनमपि तत्र कृतम्। द्रुतस्य मनसस्सर्वांशे वृत्तिरिति भागस्योपदर्शिततृतीयकारिकागतस्यार्थोऽत्र गोविन्दाकारतेत्यन्तेनानूदितः। धारावाहिकताङ्गतेति विशेषणलब्धार्थस्यानुवादकेन स्थिरेत्यनेन निरुक्ताकारतायास्थायिभावत्वन्द्योतितम्। तदपि

स्थायिभावगिराऽतोऽसौ वस्त्वाकारोऽभिधीयते।

इत्यनेन कथितचरम्। भक्तिरित्यभिहितेति। शास्त्रविद्भिर्भक्तिशब्दार्थतयाऽभिधीयमानत्वेनास्माभिः पूर्वमभिहितत्वादर्थतो भक्तिशब्दार्थत्वेनास्माभिरभिहितेत्यर्थः। विशेष इति।

टिप्पणी

गोप्यः कामा,द्भयात् कंसो, द्वेषाच्चैद्यादयो नृपाः,।
सम्बन्धाद्वृष्णय,स्स्नेहाद्यूय,म्भक्त्या वयं विभो॥
(श्री० भा० ७। १। ३०)

इत्यत्र तु भक्तिपदमेतदुल्लासीयत्रयोदशकारिकाकथयिष्यमाणशुद्धभक्तिपरम्। १ सङ्गतिपदार्थान्वयि प्रयोजकत्वं सप्तम्यर्थः। २ अप्रस्तुतेऽप्यर्थे तदिदमादेस्तत्र तत्र प्रयोगदर्शनात् स इति तत्पदस्यार्थम्प्रस्तुतं स्फुटयितुमिह चकारः।

चित्तद्रुतेः कारणानाम्भेदाद्भक्तिस्तु भिद्यते ।
तान्युक्तानि तु सङ्क्षेपाद्व्याख्यायन्तेऽधुना स्फुटम् ॥२॥

किञ्चिद्व्याख्या

भक्तेर्विशेष इत्यर्थः। अधुना = भक्तिसामान्यनिरूपणोत्तरकाले। द्वितीयोल्लास इति यावत्। द्रुते चित्ते प्रविष्टा स्थिरा या गोविन्दाकारता साऽस्माभिर्भक्तिरित्यभिहिता, विशेषस्तु अधुनोच्यत इत्यन्वयः। यद्वाऽधुना तु विशेष उच्यत इति सम्बन्धः। एवञ्श्लोकवक्तव्ययोः प्रथमद्वितीयोल्लासार्थयोस्सामान्यविशेषभावोऽभिहित इति स्फुटा प्रसङ्गादिसङ्गतिः। केचित्तु, सप्तत्रिंशत्कारिकाभिर्भक्तिसामान्यनिरूपणेन प्रथमोल्लासं समाप्य तदन्ते प्रतिज्ञातम्भक्तिविशेषनिरूपणमारभते द्रुत इत्यादिनेत्येवमवातारयन्। प्रथमोल्लासान्ते तु भक्तिविशेषनिरूपणस्याप्रतिज्ञातत्वादेवात्र तस्य प्रतिज्ञा दृश्यते।

अथापि भगवद्भक्तिरसायनविसारणात्[1] ।
भवन्ति गुरवस्ते मे विवादोऽत्र न विद्यते ॥ ॥ १ ॥

भक्तिविशेष उच्यमाने चित्तद्रुतिकारणानां विवेचनस्यावश्यकतान्दर्शयंस्तद्विवेचनरूपमेव पूर्वोद्दिष्टानाश्चित्तद्रावककामक्रोधप्रभृतीनां स्फुटतया विवरणम्प्रतिजानीते—चित्तद्रुतेरिति। भक्तेरुक्तरूपाया विशेषो न द्रव्यगुणादीनामिव स्वातन्त्र्येण, अपितु चित्तद्रुतिकारणानां विशेषादेवेति पूर्वार्धस्यार्थः। तुशब्द एवकारार्थे। यद्वा भक्तेस्तूक्तलक्षणाया विशेषो न तेषामिव स्वतन्त्रतया, किन्तु चित्तद्रुतिकारणानां विशेषादिति।

टिप्पणी

१ विसारणात् = प्रसारणात् प्रसिद्धीकरणरूपात्। ततश्च स्वहस्तस्वीकरणद्वारा निजगुरुत्वन्तेषामसन्दिग्धमिति भावः।

## किञ्चिद्व्याख्या

अत्र तु कल्पे तुकारो विशेषद्योतकः। तु स्याद्भेदेऽवधारण इत्यमरः। भक्तिरपीति समुच्चयपरतया तु तुकारविवरणञ्चेषाञ्चिदन्येभ्यो न रोचत [१] इति भाति। तथा सति हि मूल एकस्याङ्कारिकायान्तुशब्दद्वयमनन्तर्भाव्य भक्तिस्त्वित्यस्य स्थाने भक्तिश्चेत्येव पठेत्। [२] समुच्चयस्यापि तुशब्दार्थताया मेदिन्यामुक्तत्वेप्यमरसिंहादिभिरनभिहितत्वेनाप्रसिद्धत्वात्। अत एव समुच्चयविविक्ततया विशेषरूपमर्थमवगमयितुम् "चस्त्वर्थे" इति चशब्दविवृतिस्तत्र तत्र गन्थकृतां सङ्गच्छते। कानि तानीत्यत आह—तानीति। उक्तानीति।

कामक्रोधभयस्नेहहर्षशोकदयादयः।
तापकाश्चित्तजतुनस्तच्छान्तो कठिनन्तु तत्॥

### टिप्पणी

१ इति भातीति। तेषामुक्तरीत्या स्वाचार्यत्वान्नेह स्वस्य निश्चयशक्तिरिति भावः। पठेदित्यादावप्येतदनुवर्तते। २ नन्वेककारिकान्तर्गतयोरपि तयोर्भिन्नवाक्यगतत्वादर्थभेदाच्च न दोष इति चेत्तत्राह—समुच्चयस्यापि तुशब्दार्थताया इत्यादि। न चासमानाधिकरणत्वादत्रादिमपदेन सप्तम्यन्ततयैव भाव्यञ्च षष्ठ्यन्ततयेति शङ्कयम्, अभियुक्तसहस्रतिरस्कृतिप्रसङ्गात्। इहैव हि पूर्वोल्लासटीकायां भक्तियोगस्य पुरुषार्थत्वव्यवस्थापनावसरेषु बहुषु "भक्तस्य संसारमोक्षस्यावश्यकत्वा" दित्यादिक×मुदितमवलोक्यते। एतेन, तुशब्दार्थतयेति तृतीयान्तमेव साम्प्रतञ्च षष्ठ्यन्तमित्यपि प्रत्युक्तम्।

× उक्तम्भाषितमुदित-
अलिपतमाख्यातमभिहितं लपितम्।
इति पर्यायेऽमरः।

कामश्शरीरसम्बन्धविशेषस्पृहयालुता ।
सन्निधानासन्निधानभेदेन स भवेद्द्विधा ॥३॥

किञ्चिद्व्याख्या

इत्यनया कारिकयेत्यादिः । सङ्क्षेपात् = सङ्क्षेपमवलम्ब्य । अस्फुटतयेत्यर्थः । उद्देशमात्रेणैव हि पूर्वमुक्तानि न लक्षणाद्युक्त्यापि । ल्यब्लोपे पञ्चमी । सङ्क्षेपात्त्विति सम्बन्धः । तुरेवार्थे । यद्वा भक्तिविशेष इव सर्वथा पूर्वमनुक्तत्वन्तेषु प्रसक्तम्, न विस्तरेणानुक्तत्वमेवेत्यतो भक्तिविशेषाद्विशेषस्य द्योतकन्तुशब्दमादाय तानि त्वित्येव योज्यम् । यद्वा तानीत्यनेन व्यवहितेन तुकारयोजनायाः क्लिष्टत्वादाद्यकल्प एव ज्यायान्, तान्युक्तानीत्युदिते जातामवक्तव्यत्वशङ्कामपनेतुं, सङ्क्षेपादेवोक्तानि न विस्तरेण, अतो विस्तरेण वक्तव्यान्येवेत्यर्थस्य बोधयितव्यत्वात् । अथवोक्तानि त्विति यथास्थित एव सम्बन्धो न पुनस्तुशब्दस्य केनचन योजना कल्प्यते यथा भक्तिविशेष ईषदपि पूर्वन्नोक्तः, न तथा तानि, किन्तु सङ्क्षेपेणोक्तान्येवेत्यर्थः । द्वितीयादिचरणगतयोस्तुशब्दयोरर्थभेदान्न कथितपदत्वनामकः काव्यदोषः । तान्युक्तानि त्वित्यादर्शपुस्तकगततुशब्दस्य वाऽऽवधारणिकस्य स्थाने तादृशहिशब्दोऽभिषिच्यते । हि हेताववधारणे इत्यमरः । भक्तिस्तु = द्रुतचित्तप्रविष्टस्थिरगोविन्दाकारता तु चित्तद्रुतेः कारणानाम्भेदाद्भिद्यते, तान्यस्माभिः कामक्रोधेत्यादिकारिकया सङ्क्षेपादुक्तानि हि, अधुना तानि स्फुटं व्याख्यायन्त इत्यन्वयः, तानीत्यस्य द्वितीयवाक्यगतस्य तृतीयेऽप्यनुषङ्गात् । सङ्क्षेपादुक्तत्वमनुवादकोटौ चेत् प्रवेष्टुमर्हति तदा तु, सङ्क्षेपादुक्तानि हि तान्यधुनेतिरीत्या चरमार्धमेकान्वयम्भविष्यति ॥ २ ॥

प्रतिज्ञातरीत्या कामक्रोधादीनि विवेचयंश्चित्तद्रुतिद्वारा

किञ्चिद्व्याख्या

यथासम्भवन्तत्कार्यभूता भक्तौ,रतीतोल्लासैकोनत्रिंशकारिको-द्दीरितदिशा भक्तिव्यतिरिक्तानामपि स्थायिभावानां विवेचनीयत्वात्तांश्च विवेचयति—काम इत्याद्याभिर्द्वाविंशत्या कारिकाभिः । तत्रोद्देशक्रममनुसृत्य प्रथमया कामन्निरूपयति—शरीरस्य सम्बन्धविशेषः= [1]विशिष्टस्सम्बन्धः, कृदभिहित इत्यादिन्यायात् । स च सुरतरूपः तस्मिन् स्पृहयालुता= स्पृहयितुं शीलमस्येतीत्थम्भूतता । तथा च सुरतगोचरेच्छा-शीलत्वङ्कामपदार्थ इत्यर्थः । तद्विषयकोत्कटेच्छेति यावत् । अनुत्कटा तु सुरतेच्छा न चित्तन्द्रावयति अपितु केवलं शिथिलयति । अथ कथं "कमु कान्तौ, कान्तिरिच्छे"त्यतो निर्वृत्तस्य कामशब्दस्य विशिष्य सुरतेच्छाऽर्थ इति चेन्न, तस्यामपि तस्य शक्तेर्निरुढलक्षणाया वा सत्त्वात् । सुरतेच्छा-जनकतैव हि कामदेवस्य कामता, कामयन्ते सुरतमिच्छन्ति जना अनेन हेतुभूतेनेति, काम्यन्ते सुरतमेष्यन्ते जनाः प्रयोज्या अनेन प्रयोजकेनेति वा कामपदव्युत्पत्तेः । कामुकादीन्यपि पदानि तदिच्छयैव जीवन्ति न सामान्येच्छयेत्यविवादम् । यथाश्रुतघञन्तमेव वा कारिकान्तर्गतमिव कञ्जशरोपस्थापकमपि कामपदम्, कार्यकारणयोरभेदोपचारात् । भूयान् कामस्सुरतेच्छाऽस्या अस्तीति कामिनीपदव्युत्पत्तिः । तस्मा[2]दितरेच्छाया अद्रावकत्वाच्च विशेषग्रहणोपपत्तिः । शरीरसम्बन्धविशेषः स्पृहयालुतेति पदद्वयतया कारिकापाठस्तद्व्याख्या-

टिप्पणी

१ विशिष्टः = प्रकृष्टसुखजनकत्वात् प्रकृष्टः । तादृशस्यैव हि शरीरसम्बन्धस्योत्कटेच्छाविषयत्वसम्भवः । २ इतरेति । सुरतादितरेत्यर्थः । परदुःखप्रहाणादित इत्यपि द्रष्टव्यम् ।

## किञ्चिद्व्याख्या

नश्च केषाञ्चि"द्वबद्धम्पठित्वा कुसृष्टिङ्कुरुत" इति न्यायोदाहरणतया [1]भाति। एवमुपरिष्टादपि [2]बहुषु स्थलेषु स्वयमवसेयम्, न तु मया दर्शयिष्यते ग्रन्थविस्तरभयात्। स च कामो द्विविधः—आलम्बनसन्निधानकालावच्छिन्नस्तदसन्निधानकालावच्छिन्नश्च। सन्निधानासन्निधाने = सन्निकर्षविप्रकर्षौ। तौ चात्र मानसौ न तु शारीरौ, रसगङ्गाधरोक्तयुक्तेः। इत्थञ्च सन्निकृष्टोऽस्मीति धीस्सन्निकर्षो विप्रकृष्टोस्मीति विप्रकर्षः। [3]तदाह—सन्निधानेति। शरीरसम्बन्धविशेषस्पृहयालुता कामो भवेत्, स सन्निधानासन्निधानभेदेन द्विधा भवेदिति कारिकान्वयः। विधेयसमर्पकस्यापि कामपदस्यादौ प्रयोगो मूले कामनिरूपणप्रक्रमस्य झटित्यवगमनाय। एवमग्रेऽपि। घटः कलश इति घटपदविवरणस्थलेपि योजनयैव बोधः—कलशो घटपदवाच्य इति। तर्कसङ्ग्रहादौ तु बालानां सुखबोधाय प्रवृत्ते योजनाभयात् "गन्धवती पृथिवी" = या गन्धवती सा पृथिवी, "शीतस्पर्शवत्य आपः," "उष्णस्पर्शवत्तेज" इत्येवरीत्या स्थितम्। गन्धवत्त्वं पृथिव्या लक्षणं, शीतस्पर्शवत्त्वमपामित्याद्यर्थतात्पर्यकत्वात्तद्वाक्येषु लक्षणवाक्यत्वव्यवहारः। रूपवती पृथिवी, घटः पृथिवीत्यादेस्तु लक्षणपरत्वविरहान्न तत्र

टिप्पणी

१ भात्यभिप्रायोऽनुपदमुदितो न विस्मर्तव्यः। २ बहुषु स्थलेषु विंशादिकारिकान्तर्गतेषु

देहेन्द्रियादिदुःखे त्वविचारणपुरस्सरा।

इत्येवमादिरूपेषु। ३ तदिति। स च कामो द्विविध इत्यारभ्योक्तं कामद्वैविध्यमित्यर्थः।

तज्जन्यायान्द्रुतौ चित्ते या या श्रीकृष्णनिष्ठता ।
सम्भोगविप्रलम्भाख्या रतिस्सा सा क्रमाद्भवेत् ॥ ४ ॥

### किञ्चिद्व्याख्या

तद्व्यवहारः । "न तावदव्यभिचरितत्व"मित्यत्राव्यभिचरितत्वं व्याप्तिर्नेत्येवोद्देश्यविधेयभावो न तु व्याप्तिरव्यभिचरितत्वञ्चेतीति गादाधर्यां स्फुटम् । तत्र युक्तिरप्यभिहिता भवति कृष्णभट्टीये—व्याप्तेः पृष्टतयेति । अत्र पृष्टतापदेन जिज्ञासितत्वनियतमज्ञातत्वन्दर्शितम् । प्रवदन्ति च "ज्ञातमुद्देश्य,मज्ञातं विधेय"मित्यभियुक्ताः । अत एव कृष्णश्चार्जुनश्च कृष्णार्जुनौ, पीतमम्बरँय्यस्य स पीताम्बरः, घटश्च घटश्च घटौ, माता च पिता च पितराविति द्वन्द्वादिविवरणमवलोक्यते न तु कृष्णार्जुनौ कृष्णश्चार्जुनश्चेत्यादि । विग्रहवृत्त्यर्थौ हि क्रमेण ज्ञाताज्ञातौ । तस्मात् प्रकृते शरीरेत्यादिकमुद्देश्यं, काम इति विधेयमतस्तद्रीत्यैव लिखितम् । भवेदिति सम्भावनायां लिङ् । स चेह प्रयोक्तृविनयद्योतकः । इत्थमुत्तरत्रापि ॥ ३ ॥

"शृङ्गाररससर्वस्वं शिखिपिञ्छविभूषणम् ।
अङ्गीकृतनराकारमाश्रये भुवनाश्रयम् ॥"

चित्तद्रुतिद्वारा सन्निधानकालावच्छिन्नकामजामसन्निधानकालावच्छिन्नकामजाञ्च [1]शृङ्गारमिळितभक्तिरसस्थायिभूतभक्तिन्दर्शयति—तज्जन्यायामिति । चित्ते [2]तज्जन्यायान्द्रुतौ

टिप्पणी

१ शृङ्गारमिळितत्वञ्च भक्तिरसस्य तत्तादात्म्यरूपम् । अत एवाग्रे शृङ्गारादिभिर्नवभिः पदैर्नवानाम्भक्तिरसाना"न्नवरसमिळितं वे"ति प्रक्रमप्रोक्तानामुक्तिः । २ तेन = द्विविधकामेन जन्या तज्जन्या तस्याम् । तथा च सन्निधानकालावच्छिन्नकामजन्यायान्द्रुतौ सत्याँय्या श्रीकृष्णनिष्ठताऽसन्निधानकालावच्छिन्नकामजन्यायान्द्रुतौ सत्याँय्या श्रीकृष्णनिष्ठता चेति फलति।

किञ्चिद्व्याख्या

सत्याँव्या श्रीकृष्णनिष्ठता या श्रीकृष्णनिष्ठता च विद्यते, सा सा च क्रमात्=क्रममनुसृत्य सम्भोगविप्रलम्भाख्या रतिर्भवेदित्यन्वयः। अत एवोक्तम्—

स्थायी भावोऽत्र स प्रोक्तश्श्रीकृष्णविषया रतिः।

इति। अत्र=भक्तिरसे=भक्तिरससामान्ये। श्रीकृष्णविषया रतिर्नाम रत्याख्या श्रीकृष्णाकारतैव। अर्थसिद्धं समुच्चयं स्फुटयितुमन्वयवाक्ये चशब्दोपादानम्। न च निरुक्तलक्षणः काम एव "सम्भोगविषय इच्छाविशेषो रति"रित्यालङ्कारिकवचनबलाद्रतिपदार्थोऽस्तु, किन्तत्रान्यद्रतिविशिष्टचित्तगतविषयनिष्ठतापर्यन्तानुधावनेनेति वाच्यम्, रतेस्थविभावत्वा,दाशुविनाशिनश्च कामभावस्य स्थायिपद्मुख्यार्थत्वायोगात्, अपितु कथञ्चिदेव=केवलपरिभाषयैव तत्पदार्थत्वसम्भवः। श्रीकृष्णे निष्ठा यस्य, श्रीकृष्णस्य वा निष्ठा यस्मिंस्तस्य भावश्श्रीकृष्णनिष्ठता। स्थिरा श्रीकृष्णाकारतेत्यर्थः। कामजा या लौकिक[1] कान्तादिरतिः प्राकृतरसस्थायिनी, ततो भक्तिरसस्थायिनीं कामजरतिं भक्तिभूतां विविच्य दर्शयितुं सामान्यतः कान्तादिनिष्ठतेत्यप्रतिपाद्य श्रीकृष्णनिष्ठतेत्यभिहितम्। कामजायाश्चित्तद्रावकान्तरजायाश्च सकलविधाया अपि श्रीकृष्णरतेर्भक्तिरसस्थायित्वमुपरि दर्शयिष्यति। यदि रसस्यैव सम्भोगादिसञ्ज्ञा न स्थायिनस्तर्हि

टिप्पणी

१ कान्तापदोत्तरादिपदेन कान्तो गृह्यते। पञ्चसप्ततितमकारिकायान्तु विशेष्यस्थायिपदेनैव हासादिग्राहकेण विशेषणगतादिपदार्थस्सुलभः। कान्ता च कान्तश्च कान्तावितिविरूपैकशेषो हि तत्र कान्ताशब्दः।

किञ्चिद्व्याख्या

सम्भोगविप्रलम्भाख्येत्यस्य तदाख्यरसस्थायिनीत्यर्थः । विभावादिसँय्योगदशायामिति शेषो वा । रसाद्युदाहरणानि तु परमरमणीयानि प्रचुरप्रकाराणि श्रीदशमस्कन्धेऽतिसुलभानीति तत एव तानि समधिगन्तव्यानि, ग्रन्थ[1]गौरवगौरवभयान्नाहमुत्सहे तेषां विवेचनाय मनोरमतमान्यपीति ।

"[2]माधुर्यवारिधिमदान्धतरङ्गभङ्गी-
शृङ्गारसङ्कलितशीतकिशोरवेषम् ।
आमन्दहासललिताननचन्द्रबिम्ब-
मानन्दसम्प्लवमनुप्लवताम्मनो मे" ॥ ॥ ४ ॥

टिप्पणी

१ गौरवगौरवेति । गौरवादपि गौरवेत्यर्थः । २ मे मनः आनन्दसम्प्लवमनुप्लवतामित्यन्वयः । ×अत्र रूपकातिशयोक्तिः । आनन्द एव सम्प्लवः संसारसन्तापसागरसन्तारकत्वसाधर्म्यात् समीचीनप्लवत्वेनाध्यवसितश्श्रीकृष्ण इत्यर्थः । तथा च कथितसन्तारकत्वादानन्दरूपत्वेन परमप्राप्यत्वाच्च श्रीकृष्णमनुसृत्य प्लवतामिति फलितम् । "वल्गतीति प्लुतगतौ प्लवते शशति लय"मित्याख्यातचन्द्रिका । तस्य तथात्वादेवाह—माधुर्येति । मधुरधुरन्धरत्वादेव तस्मिन्

मधुराद्वैतमुपास्महे महः ।

बालन्नीलममी वयम्मधुरिमस्वाराज्यमाराध्नुमः ।

इत्याद्यभियुक्तोक्तिशतमवलोक्यते । प्रकृतपद्ये माधुर्यवारिधितरङ्गाणान्निरन्तरनिरर्गळोद्गमद्योतनाय मदान्धत्वकल्पनम् । तेषाम्भङ्ग्या = अतिमनोह-

× उपमापेक्षयोत्प्रेक्षास्थले, ततो रूपकस्थले, ततोऽपि रूपकातिशयोक्तिस्थले सादृश्यस्याधिक्यानुभवादत्र तस्य सन्तारकत्वरूपस्याधिकतमत्वलाभ इति भावः ।

टिप्पणी

रेण कौटिल्यभेदेन रासक्रीडादावन्तर्धानाविर्भावादिरूपेण, शृङ्गारेण च सङ्कलितश्शीतश्च सन्तापसंहारकतया शीतळः किशोरवेषो यस्य तम्। शृङ्गाररसस्यानुभावमाह—आ समन्तान्मन्दहासललितमाननचन्द्रबिम्बँय्यस्य तम्। यद्वाऽत्र नाऽऽङ् किन्त्वा इति मन्दहासस्मरणे। शृङ्गारसङ्कलितत्वादेव किशोरवेषस्य नारायणीयचरमदशके तारुण्यारम्भरम्यत्वमुक्तम्।

सुव्यक्तकान्तिभरसौरभदिव्यगात्र-
मव्यक्तयौवनपरीतकिशोरभावम्।

इत्येवमादि चाभियुक्ताः।

"+निसर्गमधुराधरन्निजदयार्द्रदिव्येक्षण-
म्मनोज्ञमुखपङ्कजम्मधुरसार्द्रमन्दस्मितम्।
रसज्ञहृदयास्पदं रमितवल्लवीलोचन-
म्पुनःपुनरुपास्महे भुवनलोभनीयम्महः" ॥

+ परमभागवतानामेषा गुरुवारिशैलशादिनवचनं सङ्केततो व्याख्याय तेषामेव वचनान्तरं गोपालं—निसर्गमधुरेति। निजेति। निजया = नित्यया ऽसाधारण्या वा दययाऽऽर्द्रे दिव्ये = लोकोत्तरे चेक्षणे यस्य तत्। अहो नहि यदीयहृदयास्पदमिदम्महस्स पुनररसिक एवेति दर्शयन्नाह—रसज्ञहृदयास्पदमिति।

"देवः पायात् पयसि विमले यामुने मज्जतीना-
ँय्याचन्तीनामनुनयपदैर्वञ्चितान्यंशुकानि।
लज्जालोलैरलसविलसैरुन्मिषत्पञ्चबाणै-
र्गोपस्त्रीणान्नयनकुसुमैरर्चितः केशवो नः" ॥

क्रोध ईर्ष्यानिमित्तं हि चित्ताभिज्वलनम्भवेत्।
तज्जन्यायान्द्रुतौ सा तु द्वेषशब्देन गृह्यते ॥ ५ ॥

किञ्चिद्व्याख्या

उद्देशक्रमेण प्राप्तङ्क्रोध [1] न्द्वेषापरपर्यायं लक्षयंश्चित्तद्रवणद्वारेण तज्जाम्भक्तिन्दर्शयति—क्रोध इति। ईर्ष्यानिमित्तं हि चित्ताभिज्वलनं क्रोधो भवेत्। तज्जन्यायान्द्रुतौ सत्यां [2] विद्यमाना सा=श्रीकृष्णनिष्ठता तु द्वेषशब्देन कर्तृभूतेन गृह्यते। ननु चित्तस्य कथञ्ज्वलनमित्याशङ्क्येर्ष्यैव तत्रेन्धनमित्युक्तमिहेर्ष्यानिमित्तं हीति भागेन। वस्तुतः पुनरीर्ष्यानिमित्तकमेव न तु भयनिमित्तकमपीति तदर्थः। तेन च, शुद्धक्रोध एवात्र लक्ष्यः ईर्ष्यानिमित्तकचित्ताभिज्वलनरूपत्वं लक्षणमिति दर्शितम्। क्रोधो हि शुद्धो भयमिश्रितश्चेति द्विधा भवति। तदभिप्रायेणैवाग्रे शुद्धरौद्र-रौद्रभयानकनामकौ रौद्ररसभेदावभिधास्यति शुद्धत्वञ्च क्रोधस्य भयमिश्रितत्वाभावो जातिविशेषो वा क्रोधत्वव्याप्यः। ग्रन्थसङ्क्षेपनिबन्धात् सूचनमेव भयजक्रोधस्य कृतम्। इत्थमपीर्ष्याजक्रोधो वक्ष्यमाणरीत्योपद्रावकप्रीत्यर्थचेतोव्याकुलत्वजनकरतिजननद्वारा भक्तिरसास्वादसम्पादकत्वान्मुखत एव कथितः। एवं भयस्यापि भक्तिरसानुगुणस्यैव लक्षणङ्कण्ठतः कथयिष्यति। भयजक्रोधस्य सूचितस्य चित्तद्रावकत्वप्रकारस्तु भयलक्षणस्थले भयविशेषस्य चित्तद्रुतिद्वारा

टिप्पणी

१ द्वेषापरपर्यायमिति। अत एव तर्कसङ्ग्रहे "क्रोधो द्वेष" इति। इहाप्येकचत्वारिंश्यान्द्वेषपदाभ्यामेव क्रोधश्चित्तद्रावकं व्यपदेक्ष्यति। २ चित्ते विद्यमानेत्यर्थः।

अत्र चेतोव्याकुलत्वं सोपद्रावकदर्शनात् ।
उपद्रावकनाशार्थन्तत्प्रीत्यर्थञ्च तद्द्विधा ॥ ६ ॥

## किञ्चिद्व्याख्या

द्वेषजनकतायास्सूचयिष्यमाणत्वाद्बूह्यः । तुशब्देनैतादृश्याश्श्रीकृष्णनिष्ठतायाः पूर्वोक्तश्रीकृष्णनिष्ठतातो विशेषो द्वेषशब्दभाक्प्रयोजको द्योत्यते । तस्य व्यवच्छेदार्थमवलम्ब्य तज्जन्यायान्त्विति योजनाकल्पनन्तु कैरपि कृतमश्रद्धेयमेव भाति। स्वरूपसतः क्रोधस्य यथोक्तरीत्या स्थायित्वायोगात्तज्जन्यद्रुतिकचित्तवृत्तेस्थायित्वानुसरणम् । इत्थमुपरि च । ईर्ष्या नाम पराभ्युदयासहनम् । तच्च प्रकृते शिशुपालादेर्भगवत्प्रकर्षासहनं, श्रीगोपिकादेर्भगवत्कर्तृकसपत्नीगमनरूपसपत्न्युत्कर्षासहनञ्च। कंसस्य तु यो भगवति द्वेषस्स नेर्ष्याजः अपितु स्वहन्तृत्वबुद्धिनिमित्तकभयज इत्येतदष्टमकारिकायान्द्वेषाहेतुरिति स्वमन्तूत्थवैक्लव्यविशेषणेन सूचयिष्यति । अत एवैकोनत्रिंश्यां शिशुपालादेः कंसस्य च द्वेषा"वीर्ष्याजभयजद्वेषा"वित्यविशेषमनुवदिष्यति ॥ ५ ॥

द्वेषस्य बहुषु समयेषु चेतोव्याकुलत्वजनकत्वाच्चेतोव्याकुलत्वतामुपचरन् फलभेदेन द्वैविध्यन्दर्शयति—अत्रेति । अत्र = क्रोधजन्यचित्तद्रुतिदशायां विद्यमाना सा = श्रीकृष्णनिष्ठता चेतोव्याकुलत्वं भवति । कुतः ? उपद्रावकदर्शनात् = उपद्रवकारिणश्श्रीकृष्णस्य दर्शनात् । लोके ह्युपद्रवकारिणि दृश्यमाने चेतोऽस्वास्थ्यमनुभवसिद्धम् । तत् = चेतोव्याकुलत्वं उपद्रावकनाशार्थम् = उपद्रावकस्य नाशोऽर्थो यस्य तद्रूपम् । तन्नाशेच्छया प्रवृत्तमित्यर्थः । तस्य = उपद्रावकस्य प्रीतिस्स्वविषया तदर्थञ्च सद्द्विधा ॥ ६ ॥

तत्राद्यन्द्वेष एव स्याद्द्वितीयं रतिशब्दभाक् ।
उपरिष्टात्तदुभयम्मया स्पष्टीकरिष्यते ॥ ७ ॥
द्वेषाहेतुस्स्वमन्तूत्थँव्वैकृत्यञ्चित्तगन्तु यत् ।
तज्जन्यायान्द्रुतौ याऽऽस्ते रतिस्सा भयमुच्यते ॥ ८ ॥

किञ्चिद्व्याख्या

उक्तयोश्चेतोव्याकुलत्वयोर्मध्ये प्रथमस्य भक्तिरसत्वानर्हतां चरमस्य तदर्हताञ्च दर्शयति—तत्रेत्यर्धकारिकया । तत्राद्यम् =उपद्रावकनाशार्थचेतोव्याकुलत्वं द्वेष एव स्यात् । एवेत्यनेन भक्तिरसत्वार्हतानिरासः । अत्र यद्यपि चेतोव्याकुलत्वस्य भक्तिरसत्वयोग्यत्वमप्रसक्तम् तथापि चेतोव्याकुलत्वं प्रति कारणीभूतस्य द्वेषस्य तदभेदेन पूर्वकारिकायामुपचरितत्वात्तत्प्रसक्तिरित्यभिप्रेत्य तन्निराकृतम् । द्वितीयम् =उपद्रावकप्रीत्यर्थचेतोव्याकुलत्वं रतिशब्दभाक् आगन्तुकक्रोधसहकारेण द्वेषपदव्यपदेश्यत्वेऽपि न तथा प्रसिद्धम् । अपितु नैसर्गिककामसहकारेण रतिपदवाच्यतयैवेत्यर्थः । तथा चेर्ष्याहेतुकविप्रलम्भरसस्थायित्वादुक्तचरयोः कामजरत्योर्मध्ये द्वितीयायाम्पञ्चविधायामन्तर्भवतीति भावः । ननु श्रीकृष्णविषयकस्थायिभावत्वे तुल्ये कथमेकस्य भक्तिरसीभवनानर्हत्वमपरस्य तदर्हत्वञ्चेत्यत आह—उपरिष्टादिति । तदुभयमिति । श्रीकृष्णगोचरं भक्तिरसत्वानर्हतदर्हद्वेषरतिद्वयमित्यर्थः । मया उपरिष्टात्=एकोनत्रिंशादौ स्पष्टीकरिष्यते ॥ ७ ॥

उद्देशक्रमागतं भयं लक्षयंस्तन्निबन्धनाम्भक्तिन्दर्शयति—द्वेषेति । न हेतुरहेतुः द्वेषस्याहेतुर्द्वेषाहेतुः स्वमन्तुना =स्वा-

स्नेहः पुत्रादिविषयः पाल्यपालकलक्षणः ।
सेव्यसेवकभावोऽन्यस्तोऽप्युक्तस्त्रिविधो बुधैः ॥ ९ ॥

किञ्चिद्व्याख्या

पराधेनोत्थमुत्पन्नं चित्तगं वैक्लव्यम् = व्याकुलीभावस्तु यत्, तद्भयमिति शेषः । तज्जन्यायाम् = तादृशभयजन्यायान्द्रुतौ सत्याँय्या रतिश्श्रीकृष्णविषयाऽऽस्ते, चित्तगमिति वैक्लव्यविशेषणाच्चित्त इत्यस्यात्र लाभः । सा बुधैर्भयमुच्यते । एतत्स्थायिकम्भक्तिरसमग्रे प्रीतिभयानकपदेन निर्देक्ष्यति । बुधैरित्युत्तरकारिकात आकर्षाल्लब्धम् । द्वेषहेतुभूतचित्तवैक्लव्यनिरसनार्थं वैक्लव्यस्य प्रथमं विशेषणम् । इष्टविच्छेदहेतुकस्य शोकाख्यस्य तस्य निवारकन्द्वितीयम् । वस्तुतस्तु स्वहन्तृत्वादिबुद्धिजन्मनो द्वेषजनकस्य तस्यावश्यनिवेश्यस्वमन्तूत्थत्वाभावाद्द्वेषाहेतुरिति न लक्षणे प्रविशति किन्तु स्वमन्तूत्थं स्वापकारकत्वादिज्ञानोत्थश्चेति भयन्द्विविधम् तत्राद्यश्चित्तद्रुतिद्वारेण रतेः कारणमपरन्द्वेषस्येत्येतत्सूचकमेव । अत एव, भयजद्वेषमप्युपरि भयजरतिवदनुवदिष्यति । सूच्यमानभयस्य द्वेषहेतुभूतचित्तद्रुतिजनकता तु न साक्षात् अपित्वीर्ष्याया इव क्रोधद्वारैवेति क्रोधलक्षणस्थले भयजक्रोधस्य सूचितत्वात् सुगमम् । न च भयलक्षणस्य तादृशभयेऽव्याप्तिरिति वाच्यम्, द्वेषाजनकभयत्वस्य तत्समनियतवैजात्यस्य वाऽत्र लक्ष्यतावच्छेदकत्वात् ॥ ८ ॥

अस्मिन् स्निह्याम्यस्मिन् स्निह्यामीत्याबालसिद्धस्स्नेहो द्विविधः— [१]पुत्रादिविषयत्वेन स्वाम्यादिविषयत्वेन च ।

टिप्पणी

१ पुत्रादिविषयत्वेन = पुत्रत्वादिविशिष्टविषयकत्वेन । पुत्रत्वादिप्रकारकत्वेनेति यावत् । एवमग्रेऽपि ।

भगवद्दास्यसख्याभ्याम्मिश्रितश्चापरञ्जगुः।
या कृष्णाकारता चित्ते तज्जन्यद्रुतिशालिनि ॥ १० ॥
पाल्यपालकभावेन, सा वत्सलरतिर्भवेत्।
सेव्यसेवकभावेन, प्रेयोरतिरितीर्यते ॥ ११ ॥

किञ्चिद्व्याख्या

तत्र प्रथमं सकार्यन्दर्शयति—स्नेह इति कारिकार्धेन। पाल्यान्तरग्राहकमादिपदम्। पाल्यपालकेति भावप्रधानम्। सम्बन्धीभूतपालनेत्यर्थः। तद्रूपत्वं स्नेहस्य कार्यकारणयोरभेदोपचारात्। यादृशस्नेहसत्त्वे नियमेन पाल्यपालकभावोऽस्ति तादृशस्यैव चित्तद्रावकस्नेहस्य लाभ उपचारस्य फलम्। इत्थमुपर्यपि। चरमस्य कार्यन्दर्शयंस्तद्विभजते—चरमार्धेन। पाल्यपालकलक्षणस्स्नेहः पुत्रादिविषयः, सेव्यसेवकभावस्स्नेहोऽन्यः। सोऽपि=सेव्यसेवकभावोऽपि बुधैर्द्विविध उक्तो भवतीति कारिकान्वयः। सम्बन्धीभूतपालनाभेदेन तादृशसेवनाभेदेन च स्नेहस्येहोपचरितत्वादेव पञ्चषष्टितम्यां षट्षष्टितम्याञ्च सम्बन्धपदेन स्नेहग्रहणम्। अत्र पालनं रक्षणं, सेवनमाश्रयणम्। द्वैविध्यमेव दर्शयति—भगवदित्यर्धेन।

ऐश्वर्यस्य समग्रस्य धर्म(वीर्य)स्य यशसश्श्रियः।
ज्ञानवैराग्ययोश्चैव षण्णाम्भग इतीङ्गना ॥

समग्रस्येति प्रत्येकं सम्बध्यते। इङ्गना=सञ्ज्ञा। एतादृशं समग्रमैश्वर्यादिकं नित्यमप्रतिबन्धेन यत्र वर्तते स भगवान्। नित्ययोगे मतुप्। तथा—

उत्पत्तिञ्च विनाशञ्च भूतानामागतिङ्गतिम्।
वेत्ति विद्यामविद्याञ्च स वाच्यो भगवानिति ॥

## किञ्चिद्व्याख्या

तत्र भूतानामित्यस्य प्रत्येकं सम्बन्धः। उत्पत्तिविनाशशब्दौ तत्कारणस्याप्युपलक्षकौ। आगतिगती = आगामिन्यौ सम्पदापदौ। एतादृशो भगवच्छब्दार्थश्श्रीवासुदेव एव पर्यवसित इति ग्रन्थकृत एव श्रीभगवद्गीताव्याख्यायां गूढार्थदीपिकाख्यायामाख्यातवन्तः। नारायणीयेऽपि प्रथमदशके "भगवच्छब्दमुख्याश्रयोऽसी"ति। अन्येषु भगवच्छब्दस्य लाक्षणिको वृत्तिरिति भावः। कारणमपि प्रतिपादितन्तत्रैव द्रष्टव्यम्। "बाललीलाविमोहितविधातरि करदीकृतपारिजातार्थपराजितपुरन्दरे बाणयुद्धविजितशशाङ्कशेखरे सकलसुरासुरजेतरि विविधदिव्यलीलाविलासशीले बालतरणिकिरणोज्ज्वलदिव्यपीताम्बरे निरुपमश्यामसुन्दरे" इत्येवमादीनि बहूनि विशेषणानि गूढार्थदीपिकायामवलोक्यन्ते। भगवत्पादैश्श्रीकृष्णस्य सर्वेभ्योऽप्यधिकतमत्वं सहेतुकतया संस्थापितमग्रे[1] दर्शयिष्यते। श्रीब्रह्मवैवर्तादौ पुनरतिप्रपञ्चितम्। दासस्य कर्म दास्यम्। सख्युः कर्म सख्यम्। मिश्रितमिति। परस्परमिश्रितं भगवद्दास्यसख्योभयमित्यर्थः। जगुः = सोत्साहमुच्चैरूचुः। निस्संशयलेशमुक्तवन्तो भवन्तीति यावत्। द्वौ सेव्यसेवकभावौ भगवद्दास्यसख्याभ्या,मपरं सेव्यसेवकभावस्मिश्रितश्च बुधा जगुरित्यन्वयः। दास्यं सख्यम्मिश्रितञ्चेति भगवता सह सेव्यसेवकभावसम्बन्धीभूतसेवनरूपस्त्रिविध इत्यर्थः। तत्र दास्यं प्रह्लादहनुमदादौ प्रसिद्धम्, सख्यन्तु[2] श्रीदा-

टिप्पणी

१ अग्र इति। व्रजेत्यादिसप्तकारिकाव्याख्योपक्रमस्थलीयटिप्पण्यामित्यर्थः। २ श्रीदामा च स्तोककृष्णश्चादो येषान्तेषु।

किञ्चिद्व्याख्या

मस्तोककृष्णादिषु बहुषु पशुपवालकेषु ख्यातम्, मिश्रितमर्जुनो-

टिप्पणी

इत्थं सताम्ब्रह्मसुखानुभूत्या
दास्यङ्गतानाम्परदैवतेन ।
मायाश्रितानान्नरदारकेण
साकं विजह्रुः कृतपुण्यपुञ्जाः ॥
(श्री० भा० १० । १२ । ११)

बिभ्रद्वेणुञ्जठरपटयोश्शृङ्गवेत्रे च कक्षे
वामे पाणौ मसृणकबळन्तत्फलान्यङ्गुलीषु ।
तिष्ठन् मध्ये स्वपरिसुहृदो हासयन्नर्मभिस्स्वै-
स्स्वर्गे लोके मिषति बुभुजे यज्ञभुग्बालकेळिः ॥
(श्री० भा० १० । १३ । ११)

इत्येतादृशादिशा × श्रीशुकदिव्ययोगीन्द्रैर्गीयमानेष्वित्यादिः । इत्थम् = पूर्वोक्तविविधप्रकारैर्विजह्रुरिति सम्बन्धः । इमानेव सखीनादाय

सदातृप्ताऽन्नं षड्रसवदखिलव्यञ्जनयुतं
सुवर्णामत्रे गोघृतचषकयुक्ते स्थितमिदम् ।
यशोदासूनो तत् परमदययाऽशान सखिभिः
प्रसादं वाञ्छद्भिस्सह तदनु नीरम्पिब विभो ॥

इति भगवत्पूज्यपादाः । अनेनैतैस्सममेव भगवत्पूजनमनल्पफल-

× श्रीशुकदिव्ययोगीन्द्रेति । निगमगीतसाक्षाच्छ्रीशुकचरणेत्यर्थः । एत एव हि श्रीमद्भागवतप्रवक्तारः । छायाशुकः पुनरन्योऽस्ति । यमेव किलैते पित्रे पुत्रविरहभीरवे दत्तवन्तः । नित्यपदशुकबादरायण्यादिपदानामुभयत्रापि प्रयोगसत्त्वादालोच्यैव तत्तत्तार्थनिर्णयः कार्यः । सर्ववेदेतिहासपुराणादिसारसारभूतश्रीमद्भागवते पुनरेत एव "यम्प्रव्रजन्त"मित्यादिना सङ्कीर्त्यन्ते न तत्र छायाशुकप्रसङ्गः ।

## किञ्चिद्व्याख्या

तत्र भूतानामित्यस्य प्रत्येकं सम्बन्धः। उत्पत्तिविनाशशब्दौ तत्कारणस्याप्युपलक्षकौ। आगतिगती=आगामिन्यौ सम्पदापदौ। एतादृशो भगवच्छब्दार्थश्श्रीवासुदेव एव पर्यवसित इति ग्रन्थकृत एव श्रीभगवद्गीताव्याख्यायां गूढार्थदीपिकाख्यायामाख्यातवन्तः। नारायणीयेऽपि प्रथमदशके "भगवच्छब्दमुख्याश्रयोऽसी"ति। अन्येषु भगवच्छब्दस्य लाक्षणिकी वृत्तिरिति भावः। कारणमपि प्रतिपादितन्तत्रैव द्रष्टव्यम्। "बाललीलाविमोहितविधातरि करदीकृतपारिजातार्थपराजितपुरन्दरे बाणयुद्धविजितशशाङ्कशेखरे सकलसुरासुरजेतरि विविधदिव्यलीलाविलासशीले बालतरणिकिरणोज्ज्वलदिव्यपीताम्बरे निरुपमश्यामसुन्दरे" इत्येवमादीनि बहूनि विशेषणानि गूढार्थदीपिकायामवलोक्यन्ते। भगवत्पादैश्श्रीकृष्णस्य सर्वेभ्योऽप्यधिकतमत्वं सहेतुकतया संस्थापितमग्रे[1] दर्शयिष्यते। श्रीब्रह्मवैवर्तादौ पुनरतिप्रपञ्चितम्। दासस्य कर्म दास्यम्। सख्युः कर्म सख्यम्। मिश्रितमिति। परस्परमिश्रितं भगवद्दास्यसख्योभयमित्यर्थः। जगुः=सोत्साहमुच्चैरूचुः। निस्संशयलेशमुक्तवन्तो भवन्तीति यावत्। द्वौ सेव्यसेवकभावौ भगवद्दास्यसख्याभ्या,मपरं सेव्यसेवकभावम्मिश्रितञ्च बुधा जगुरित्यन्वयः। दास्यं सख्यम्मिश्रितञ्चेति भगवता सह सेव्यसेवकभावसम्बन्धीभूतसेवनरूपस्त्रिविध इत्यर्थः। तत्र दास्यं प्रह्लादहनुमदादौ प्रसिद्धम्, सख्यन्तु[2] श्रीदा-

टिप्पणी

१ अग्र इति। व्रजेत्यादिसप्तकारिकाव्याख्योपक्रमस्थलीयटिप्पण्यामित्यर्थः। २ श्रीदामा च स्तोककृष्णश्चादी येषान्तेषु।

किञ्चिद्व्याख्या

मस्तोककृष्णादिषु बहुषु पशुपवालकेषु ख्यातम्, मिश्रितमर्जुनो-

टिप्पणी

इत्थं सताम्ब्रह्मसुखानुभूत्या
दास्यङ्गतानाम्परदैवतेन।
मायाश्रितानान्नरदारकेण
साकं विजह्रुः कृतपुण्यपुञ्जाः॥
(श्री० भा० १०. १२। ११)

बिभ्रद्वेणुञ्जठरपटयोश्शृङ्गवेत्रे च कक्षे
वामे पाणौ मसृणकवलन्तत्फलान्यङ्गुलीषु।
तिष्ठन् मध्ये स्वपरिसुहृदो हासयन्नर्मभिस्स्वैः
स्स्वर्गे लोके मिषति बुभुजे यज्ञभुग्बालकेलिः॥
(श्री० भा० १०। १३। ११)

इत्येतादृशदिशा ×श्रीशुकदिव्ययोगीन्द्रगीयमानेष्वित्यादिः। इत्थम् =पूर्वोक्तविविधप्रकारैर्विजह्रुरिति सम्बन्धः। इमानेव सखीनादाय

सदातृप्ताऽन्नं षड्रसवदखिलव्यञ्जनयुतं
सुवर्णामत्रे गोघृतचषकयुक्ते स्थितमिदम्।
यशोदासूनो तत् परमदययाऽशान सखिभिः
प्रसादं वाञ्छद्भिस्सह तदनु नीरम्पिब विभो॥

इति भगवत्पूज्यपादाः। अनेनैतैस्सममेव भगवत्पूजनमनल्पफल-

×श्रीशुकदिव्ययोगीन्द्रेति। निगमगीतसाक्षाच्छ्रीशुकचरणेत्यर्थः। एत एव हि श्रीमद्भागवतप्रवक्तारः। छायाशुकः पुनरन्योऽस्ति। यमेव किलैते पित्रे पुत्रविरहभारवे दत्तवन्तः। निरुपपदशुकबादरायण्यादिपदानान्तूभयत्रापि प्रयोगसत्त्वादालोच्यैव तत्तदर्थनिर्णयः कार्यः। सर्ववेदेतिहासपुराणादिसारसारभूतश्रीमद्भागवते पुनरेत एव "यम्प्रव्रजन्त"मित्यादिना सङ्कीर्त्यन्ते न तत्रच्छायाशुकप्रसङ्गः।

## किञ्चिद्व्याख्या

द्धवसुग्रीवप्रभृतौ प्रथितम् । एवं सेव्यसेवकभावत्रैविध्यप्रतिपादनात् [१] स्वामिस्नेहस्सखिस्नेहस्स्वामिसखस्नेहश्चेति त्रैविध्यं

### टिप्पणी

मिति जल्पितकल्पम् ।

"× गोधूळिधूसरितकोमळगोपवेष-
ङ्गोपालबालकशतैरनुगम्यमानम् ।
सायन्तने प्रतिगृहम्पशुबन्धनार्थ-
ङ्गच्छन्त‡मच्युतशिशु†म्प्रणतोऽस्मि नित्यम्" ॥

१ स्वामिनि स्नेहस्स्वामिस्नेहः । सख्यौ स्नेहस्सखिस्नेहः । स्वामी

---

× गोधूळिधूसरितेति। अत एवोक्तमानन्दमन्दाकिन्याम्मूलकृद्भिरेव—

धूळीधूसरितम्मुखन्तव शरत्पूर्णेन्दुनिन्दावहं
व्यालोलालककुण्डलद्युति चलन्नेत्रश्रिया प्रोल्लसत् ।
याऽऽलोक्यार्द्रविलोचना स्मितमुखी प्रस्यन्दमानस्तनी
पाणिभ्यामवलम्ब्य चुम्बितवती, तान्नन्दजायाम्भजे ॥ इति ।

विशिष्टान्वयबलान्नन्दजायाञ्च तदीयाम्भज इत्यर्थः ।

स त्वन्नन्दसि यस्य मन्दिरगतो नन्दाय तस्मै नमः ।

इति नन्दवन्दनस्य पृथगनुष्ठितचरत्वेऽप्यत्रेत्थमेव युक्तं वक्तुम् । ‡ प्रकटलीलारीत्या यद्यपि गतवन्तमिति वक्तव्यम् तथापि "वृन्दावनान्तरगतस्सदा क्रीडति माधव" इत्येतदादिस्कान्दादिदर्शितनित्यलीलाभिप्रायेण शतृप्रयोगः । † शिशुत्वादेवोक्तम्—

वर्ण्यँय्यशोदाशिशुबाललीला-
कथासुधासिन्धुषु लीलयामः । इत्यादि ।

यशोदाशिशोर्बाललीलाः = बाल्ये क्रियमाणाः क्रीडास्तासाङ्कथाः = ता वर्णयन्तो वाक्यविस्तरास्ता एव सुधासिन्धवस्तेषु बहुषु लीलयामः = क्रीडाः कुर्मः ।

किञ्चिद्व्याख्या

सेव्यसेवकभावसम्पादकस्य भगवति स्नेहस्य ध्वनितम्। एवं पुत्रादिस्नेहमन्यस्नेहञ्च विविच्य चित्तद्रुतिद्वारा तत्कार्यभूते भक्तौ सनामभेदन्दर्शयति—या कृष्णाकारतेति सार्धया। तज्जन्यया = द्विविधस्नेहजन्यया द्रुत्या भगवद्गोचरया शालितुं शोभितुं शीलमस्येत्येतादृशि चित्ते पाल्यपालकभावेन या कृष्णाकारताऽस्ति सा वत्सलरतिः = तदाख्या भवेत्, सेव्यसेवकभावेन या कृष्णाकारता विद्यते सा बुधैः प्रेयोरतिरितीर्यत इत्यन्वयः। पाल्यपालकभावत्वेनोपचरितस्नेहजन्यद्रुतिशालिनि चित्ते या कृष्णाकारता प्रविष्टा या च कृष्णाकारता सेव्यसेवकभावत्वेनोपचरितस्नेहजन्यद्रुतिशालिनि चित्ते निविष्टा, तदुभयङ्क्रमेण वत्सलरतिः प्रेयोरतिरिति चोच्यत[1] इति तु निष्कर्षः। ताच्छीलिकणिनिप्रयोगात् [2]कृष्णाकारतारूपचित्तवृत्तेस्थायित्वार्हतालाभः। एवं स्थायिभावद्वैविध्यप्रदर्शनेन वत्सलरसः प्रेयोरस इति स्नेहस्थले रसद्वैविध्यं सूचितम्। दास्यरतिस्सख्यरतिर्मिश्रितरतिश्चेति प्रेयोरति,र्दास्यरसस्सख्यरसो मिश्रितरसश्चेति प्रेयोरसश्च त्रेधेत्यपि बोध्यम् ॥ ९ ॥ १० ॥ ११ ॥

टिप्पणी

चासौ सखा च स्वामिसखः। स्वामी सखा च यस्य इत्यर्थः। स्वामिसखे स्नेहस्स्वामिसखस्नेहः। स्वामित्वप्रकारकस्नेह इत्यादिः क्रमेण त्रयाणाम्पर्यवसितार्थः। १ अन्तर्गतस्यार्थस्य बहिःप्रकाशनरूपं बहिर्गमने प्रवर्तनमिहेरणमिति हेतोः पर्यवसितं वा, साक्षादेव वेर्यत इत्यस्यार्थमाहोच्यत इति। २ कृष्णाकारतारूपेति। तद्विषयकचित्तवृत्तेश्चित्तप्रविष्टतदाकारतारूपत्वमादिमोल्लासतृतीयकारिकाव्याख्यायां स्पष्टम्।

हर्षश्चित्तसमुल्लासः कथ्यते स चतुर्विधः ।
एकः परानन्दमयश्रीशमाहात्म्यकारणः ॥ १२ ॥

किञ्चिद्व्याख्या

क्रमप्राप्तं हर्षन्निरूपयति—हर्ष इति । चित्तस्य समुल्लासः = सम्यगाह्लादो हर्षः । स शास्त्रविद्भिश्चतुर्विधः कथ्यते । विषादासंस्पर्शित्वमिहाह्लादस्य सम्यक्त्वम् । चतुर्विधहर्षस्य मध्ये प्रथमविधन्दर्शयति—एक इति । हर्ष इति स्थलचतुष्टयेऽप्यनुवर्तते । परानन्दमयस्य = परमानन्दरूपस्य, श्रीयते सर्वैरिति श्रीः = [1]सर्वसेव्या महालक्ष्मीः । श्रिञ् सेवायाम् । तस्या ईशश्श्रीकृष्णः, श्रीकृष्णः कमलानाथ इत्युक्तेः । लोकेऽपि

टिप्पणी

१ सर्वसेव्येति । अत एव

वाग्भूगौर्यादिभेदैर्विदुरिह मुनयो याँव्यदीयैश्च पुंसा-
ङ्कारुण्यार्द्रैः कटाक्षैस्सकृदपि पतितैस्सम्पदस्स्युस्समग्राः ।
कुन्देन्दुस्वच्छमन्दस्मितमधुरमुखाम्भोरुहां सुन्दराङ्गीं
वन्दे वन्द्यामशेषैरपि मुरभिदुरोमन्दिरामिन्दिरान्ताम् ॥

इत्यन्तकालीन × भगवत्पादकृतभगवत्पादादिकेशान्तस्तोत्रे वर्तते । मुरभित् = मुरासुरभेत्ता श्रीकृष्णः ।

---

× अन्तकालीनेति कृतिक्रियाविशेषणम् । अन्तकाले भगवत्पादकृतेत्यर्थः । तथा च नारायणीये—

त्वन्निष्ठमेव स हि नामसहस्रकादि
व्याख्यत्,भवत्स्तुतिपरश्च गतिङ्गतोऽन्ते । इति ।

आदिना श्रीमद्गीतादिपरिग्रहः ।

तज्जन्यायान्द्रुतौ शुद्धा रतिर्गोविन्दगोचरा।
एतदन्तं हि शास्त्रेषु साधनाम्नानमिष्यते ॥ १३ ॥

किञ्चिद्व्याख्या

कलवेणुरवः कलायनीलः
कमलाचुम्बनलम्पटोऽतिरम्यः। इति।

तस्य माहात्म्यं कारणं यस्य स तथा। तन्माहात्म्यश्रवणकीर्तनादिजन्य इत्यर्थः। तादृशो हर्षस्तत्तैकः। प्रथम इत्यर्थः। मुख्य इत्यपि।

एतादृशहर्षोद्देशेनैव

कृष्णकथासंश्रवणे महोत्सवस्सत्यवादश्च।
परयुवतौ द्रविणे वा परापवादे पराङ्मुखता ॥
ग्राम्यकथासूद्वेगस्सु तीर्थगमनेषु तात्पर्यम्।
यदुपतिकथावियोगे व्यर्थङ्गतमायुरिति चिन्ता ॥

इति प्रकरणग्रन्थे भगवत्पादोपदेशः ॥ १२ ॥

तत्फलभूतभक्तिन्दर्शयति—तज्जन्यायामित्यर्धेन। चित्ते तज्जन्यायाम् = प्रथमहर्षजन्यायां द्रुतौ सत्यां गोविन्दगोचरा या रतिरस्ति, सा शुद्धा = शुद्धपदाभिधेया। शुद्धसात्त्विकीति वा। अत एव

राजसी तामसी शुद्धसात्त्विकी मिश्रिता च सा।
( कारिका ४१ )

इति शुद्धसात्त्विकभक्तितया कलयिष्यमाणां प्रस्तुतरतिम्पुरस्कृत्य

शुद्धा व्यामिश्रिता चेति पुनरेषा द्विधा भवेत्।
तत्रानुपाधिश्शुद्धा स्यात् सोपाधिर्मिश्रितोदिता ॥

किञ्चिद्व्याख्या

अनुपाधिः परानन्दमहिमैकनिबन्धना ।

( कारिका ६३-६४ )

इत्येवम्भगवद्रतिविभागो भविष्यति। शुद्धेत्युक्त्या प्राधान्यं सूचितम्। तदुपपादयति—एतदन्तं हीति। हि=यतः शास्त्रेष्विति विषयसप्तम्यन्तम्। शास्त्राध्यापकैरित्यर्थः। साधनानामाम्नानमुपदेशः एतदन्तमिष्यते। यद्वा शास्त्रेषु यत् साधनानामाम्नानं तत् शास्त्रविद्भिरेतदन्तमिष्यते=ज्ञायते। इष गतावित्यस्य रूपम्। गत्यर्था हि ज्ञानार्थाः। इयमेव रतिः प्रार्थिता नारायणीयद्वितीयदशके—

त्वद्भक्तिस्तु कथारसामृतझरीनिर्मज्जनेन स्वयं
सिध्यन्ती विमलप्रबोधपदवीमक्लेशतस्तन्वती।
सद्यस्सिद्धिकरी जयत्ययि विभो सैवास्तु मे त्वत्पद-
प्रेमप्रौढिरसार्द्रता द्रुततरं वातालयाधीश्वर ॥ इति।

त्वत्पदयोः = [1]तव पादाम्बुजयोः

टिप्पणी

१ तव पादाम्बुजयोः

निखिलभुवनलक्ष्मीनित्यलीलास्पदाभ्या-
कमलविपिनवीथीगर्वसर्वङ्कषाभ्याम्।
प्रणमदभयदानप्रौढिगाढोद्धताभ्या-
× ङ्किमपि वहतु चेतः कृष्णपादाम्बुजाभ्याम् ॥

इति रीत्या विख्यातयोः।

× मम चेतः कृष्णपादाम्बुजाभ्यां हेतुभ्याङ्किमपि हर्षपरवशत्वन्दधातित्यर्थः। यद्वाऽत्र न तृतीया किन्तु चतुर्थी। कृष्णपादाम्बुजप्राप्त्यर्थ-

व्रीळा विकृतवाग्वेषचेष्टादिजनितोऽपरः ।
तज्जन्यायान्द्रुतौ चेतोविकासो हास उच्यते ॥ १४ ॥
लोकोत्तरचमत्कारिवस्तुदर्शनजः परः ।
तज्जन्यायान्द्रुतौ चेतोविकासो विस्मयो मतः ॥ १५ ॥

किञ्चिद्व्याख्या

कष्टा ते सृष्टिचेष्टा बहुतरभवखेदावहा जीवभाजा-
मित्येवम्पूर्वमालोचितमजित मया. नैवमद्याभिजाने ।
नो चेज्जीवाः कथं वा मधुरतरमिदन्त्वद्वपुश्चिद्रसार्द्रं-
नेत्रैश्श्रोत्रैश्च पीत्वा परमरससुधाम्भोधिपूरे रमेरन् ॥

इति प्रथमदशकप्रस्तुते त्वद्वपुर्भाति यावत् । प्रेम्णः प्रौढिरतिशयः स एव रसः, आस्वादनीयत्वात्. तेनाऽऽर्द्रता द्रवच्चित्तता तद्रूपा सैव द्रुततरमेव मेऽस्तु ॥ १३ ॥

द्वितीयतृतीयतुरीयविधहर्षां,स्तज्जांश्च भक्तीर्दर्शयति— व्रीळेत्यादिकारिकात्रयेण । व्रीळया, विकृतैर्वाग्वेषचेष्टादिभिश्च दर्शनादिद्वारा जनितो हर्षः अपरः = प्रथमहर्षादन्यः । द्वितीय इत्यर्थः । तज्जन्यायान्द्रुतौ सत्याँय्यश्चेतसो विकासो विस्तारः, स हास उच्यते ॥ १४ ॥

लोकादुत्तरमुपरितनं लोकोत्तरम् । लोकातीतमित्यर्थः । अत एव चमत्कारि = चमत्कारोऽतिशयेनास्य जनकतासं-

मिति तदन्तस्यार्थः । किमपि तत्पादाम्बुजयोस्सहर्षभरनिरन्तरस्मरणम् ।

"रागान्धगोपीजनवन्दिताभ्या-
म्योगीन्द्रभृङ्गेन्द्रनिषेविताभ्याम् ।
आताम्रपङ्केरुहविभ्रमाभ्यां
स्वामिन् पदाभ्यामयमञ्जलिस्ते" ॥

युद्धाभिपातजनितो वीराणाञ्जायते परः ।
ततश्चित्तस्य विस्तारो द्रुतस्योत्साह उच्यते ॥ १६ ॥

किञ्चिद्व्याख्या

सर्गेणास्तीत्येतादृशम् । अतिशयितचमत्कृतिजनकज्ञानगोचरीभूतमित्यर्थः । तादृशं यद्वस्तु तद्दर्शनजो हर्षः परः = उक्तहर्षाभ्यामन्यः । तृतीय इत्यर्थः । अतिशायन इनिप्रत्ययः । यथोक्तं शब्दशास्त्रे—

भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने ।
संसर्गेऽस्तिविवक्षायाम्भवन्ति मतुबादयः ॥ इति ।

अस्तीत्यर्थविवक्षायां विहिता मतुबादयो भूमाद्यर्थेषु भवन्तीत्यर्थः । तज्जन्यायान्द्रुतौ सत्याँव्यञ्जेतोविकासस्स विदुषां विस्मयो मतोऽभिप्रेतः ॥ १५ ॥

युद्धाभिपातेन = [1]अभ्यागमाभ्यागमेन जनितो हर्षः परः = उक्तहर्षेभ्योऽन्यः । चतुर्थ इत्यर्थः । ननु युद्धाभ्यागमनेन हर्षो नैव जन्यते, प्रत्युत भयमेवेत्यत आह—स तु वीराणाम् = अर्थाद्युद्धवीराणाम्पुरुषाणाञ्जायते, न पुनरितरेषाम् । ततो द्रुतस्य चित्तस्य विस्तारः उत्साहः "चोट्टि" इति केरळभाषायाङ्ख्यातः उच्यते । स चार्थाद्युद्धोत्साहः । दयाद्युत्साहांस्तु [2]दयाप्रकरणे प्रतिपादयिष्यति । युद्धोत्सा-

टिप्पणी

१ अभ्यागमस्य सङ्ग्रामस्य योऽभ्यागम आभिमुख्येनाऽऽगमनम् तेन ।

अभ्यामर्दसमाघातसङ्ग्रामाभ्यागमाहवाः । इत्यमरः ।

२ दयायाश्चित्तद्रावकत्वप्रकारो यतोच्यते, तद्दयाप्रकरणम् । इह तु दयापदेन कृपारूपो रूढ्यर्थ इवान्यदपि योगार्थद्वयङ्कश्चन लक्ष्यार्थश्च गृह्यते । तच्च दयाप्रकरणमंशादद्यादिकारिकाषट्करूपम् ।

इष्टविच्छेदजनितो यश्चित्ते क्लिष्टतोदयः ।
तज्जन्यायान्द्रुतौ विष्टा रतता शोक उच्यते ॥ १७ ॥

किञ्चिद्व्याख्या

हजनकचित्तद्रुतेर्दययाऽसम्भवाद्युद्धाभ्यागमजनितहर्षेण तत्सम्भवाच्च तस्यैव तद्धेतुत्वमुक्तन्न तु दयायाः । न चैवमपि दयोत्साहावहायामेव चित्तद्रुतौ दया कारणम्, न तु दानधर्मोत्साहसम्पादिकायामपीति तत्कारणयोरपरिगणनात् "कामक्रोधे"त्यादिकारिकाया न्यूनतापात इति वाच्यम्, दीयतेऽनयेति व्युत्पत्त्यौदार्यस्य, दीयते = रक्ष्यते धर्मोऽनयेति धर्मरक्षार्थप्रवृत्तेश्चापि[1] दयापदेन ग्रहणात् । दय—दानगतिहिंसारक्षणेषु । दीयते = हिंस्यतेऽनयेत्येवं युद्धाभ्यागमजनितहर्षे दयापदयोगसम्भवेऽपि रूढहर्षपदेनैव तस्य सुग्रहत्वाद्धर्षप्रकरणेऽस्मिन्नेव तन्निबन्धनचित्तद्रुतिहेतुकयुद्धोत्साहो वर्णितः ॥ १६ ॥

क्रमप्रसक्तं शोकं लक्षयंस्तदधीनभक्तिन्दर्शयति—इष्टविच्छेदेति । चित्ते इष्टस्य = प्रियस्य विच्छेदेन = वियोगेन जनितो यः क्लिष्टतायाः = क्लेशस्योदयः = उन्नतिः । कृदभिहित इतिन्यायादुन्नतः क्लेश इत्यर्थः । अनुन्नतस्य तु तस्य चित्तशिथिलीभावकत्वेऽपि तदद्रवीभावकत्वादुदयग्रहणम् । स शोक इति शेषः । तज्जन्यायाम् = शोकजन्यायान्द्रुतौ = द्रवीभावे सति विष्टा = विश प्रवेशन इति स्मरणात् प्रविष्टा रतता = रतिः । रतिमिश्रितश्शोक इत्यर्थः । रतिर्हि हासवि-

टिप्पणी

१ अपिना रूढ्यर्थभूता करुणा दयोत्साहसम्पादकचित्तद्रुतिकरी समुच्चीयते ।

दया घृणा स्याद्विषयतुच्छत्वज्ञानपूर्विका ।
तया द्रुते तु मनसि जुगुप्सा जायते स्थिरा ॥१८॥

किञ्चिद्व्याख्या

समयादोनिव शोकमपेक्ष्य न्यूना भवति । अत एवैतत्स्थलीयम्भक्तिरसन्निरूपपदकरुणपदेन कथयिष्यति न तु केवलरत्युद्बोधकपदेन प्रीतिकरुणपदेन वा । स च शोक उच्यते । कुत्र विष्ठेत्यपेक्षायाश्चित्त इति पूर्वार्धादनुषङ्गः । यद्वा द्रुतिपदमर्थाच्चित्तद्रुतिपरमधिकरणसप्तम्यन्तम् ॥ १७ ॥

[1]भक्तावनुपयुक्तामपि दयान्तस्या अपि स्फुटतया व्याख्यानस्य प्रतिज्ञातत्वात् प्रकरणशुद्ध्यर्थं लक्षयंश्चित्तद्रुतिद्वारा तत्कार्यभूतं स्थायिभावं भगवद्गोचरतया भक्तिभिन्नमपि प्रथमोल्लासैकोनत्रिंशकारिकानुरोधान्निरूपयति—दयेति । पूर्विकेति पाठो न दीर्घिकेति, तस्य वापीपर्यायत्वात् । कथञ्चिदादर्शपुस्तकरीत्या तत्पाठाभ्युपगमे तु दीर्घकालीनेत्यर्थ इति बलवतात्पर्थं तस्य तात्पर्यमङ्गीकार्यमतो घृणायाश्चित्तद्रावणसामर्थ्यं लभ्यते । यद्वा कार्यतो दीर्घत्वं विवक्षितम्, कार्यस्य च तथात्वङ्कालत इति जुगुप्सायास्थायित्वयोग्यतालाभः । विषयेषु=स्वगोचरेष्वनुपदमभिधास्यमानेषु पूतिव्रणादिप्रभृतिषु यत् तुच्छत्वस्य=हेयत्वस्य ज्ञानन्तेन दीर्घिका तत्पूर्विका वा घृणा=मनस्सङ्कोचः दया=दयापदार्थः स्यात् । तत्पदपर्यायपदवाच्यायान्तस्यान्तत्पदस्य लाक्षणिकत्वादिति भावः । तत्पदशक्यार्थस्य[2] चित्तद्रावक-

टिप्पणी

१ भक्ताविति । एकस्य तु दयापदयोगार्थस्यौदार्यरूपस्य तस्यानुपयोगो विपत इति वेदितव्यम् । २ चित्तद्रावकत्वान्वय्याधेयत्वरूपस्सम्बन्धष्षष्ठ्यर्थः ।

पूतिव्रणादिविषये कथितोद्वेगिनी बुधैः।
श्मशानोत्थपिशाचादिविषया क्षोभिणी भवेत् ॥१९॥

किञ्चिद्व्याख्या

त्वप्रकारन्त्वनुपदमेव "या त्वि"त्यादिकारिकया वक्ष्यति। तया द्रुते मनसि तु जुगुप्सा जायते। सा च त्रिधेत्यन्वयः। घृणाजुगुप्साशब्दयोः कोशे पर्यायत्वेनोक्तत्वेऽपि तदर्थयोरीषद्वैलक्षण्यमभिसन्धाय कार्यकारणभावेनोक्तिः। यथा कोपक्रोधशब्दयोस्तादृशत्वेऽपि "क्रुधद्रुहे"त्यादिपाणिनिसूत्रव्याख्यातॄणान्तदर्थयोः कार्यकारणभावकथनमवलोक्यते। तत्र हि कोपस्योत्कटतया परिणामः क्रोध इत्युक्तम्। तद्वदिहापि बोध्यम् ॥ १८ ॥

जुगुप्सायास्त्रैविध्यमुद्वेगिनी क्षोभिणी शुद्धेति भेदादिति सिद्धवत्कृत्याद्यान्तामुदाहरति—पूतीति। जुगुप्सेत्यनुकर्षः। पूतिव्रण आदिर्यस्य तस्मिन् विषये या जुगुप्सा सा बुधैरुद्वेगिनी कथिता भवतीत्यन्वयः। कृमिच्छर्द्यादिरादिपदार्थः। क्षोभिणीन्तामुदाहरति—श्मशानोत्थेति। कथिता बुधैरित्यनुषङ्गः। श्मशाने = शवदाहस्थान उत्था आविर्भूता ये पिशाचास्तदादिविषया जुगुप्सा बुधैः क्षोभिणी कथिता भवेदित्यन्वयः। रुधिरादीनामपि ग्राहकमादिपदम्। अत एव

[1]क्षोभात्मा रुधिरान्त्रादिदर्शनस्पर्शनादिजा।
उद्वेगात्मा कृमिच्छर्दिपूतिविष्ठादिजा भवेत् ॥

टिप्पणी

१ क्षोभस्यात्मा = कारणम्। यद्वा क्षोभात्मा = क्षोभरूपा, कार्य-

देहेन्द्रियादिदुःखत्वविचारणपुरस्सरा ।
या तु, शुद्धेति कविभिस्सा जुगुप्सा प्रकीर्तिता ॥२०॥
या तु शोच्यस्य रक्षार्थम्प्रवृत्तिरनुकम्पया ।
तया द्रुते हि मनसि दयोत्साहस्स्मृतो बुधैः ॥ २१ ॥

किञ्चिद्व्याख्या

इति जुगुप्साद्वयमभिहितमभियुक्तैः । श्मशानोत्थत्वस्य पिशाचादिविशेषणत्वे तु तत्स्थलीयप्रेतवेताळप्रभृतय एवादिपदेनोपादीयेरन् न स्थलान्तरस्थरुधिरादयोऽपीति न्यूनता स्यात् ॥ १९ ॥

अविवेकिनाञ्जुगुप्से उदाहृत्य शुद्धजुगुप्सामुदाहरति—देहेन्द्रियादीति । देहेन्द्रियादीनान्दुःखत्वन्दुःखसाधनत्वात् । तद्विचारणपुरस्सरा तु या अर्थाद्देहेन्द्रियादिविषयैव, सा जुगुप्सा कविभिः = पण्डितैः शुद्धेति प्रकर्षेण कीर्तिता भवति । पण्डितः कविरित्यमरः ॥ २० ॥

दयापदलक्ष्यार्थस्य चित्तद्रावकत्वप्रकारमुक्त्वा तत्पदमुख्यार्थस्य परदुःखप्रहाणेच्छारूपस्य प्रवृत्तिद्वारा तद्द्रावकतां सूचयंस्तन्निबन्धनं स्थायिभावमाह—या त्विति । आदौ मुख्यार्थस्य तद्द्रावकत्वप्रकारानुक्तिस्तूत्साहप्रसङ्गादुत्साहत्रयमव्यवधानेन वक्तुमभिष्टगोचरत्वादिना परस्परसमे [1]शोकजुगुप्से [2]तथा कथयितुञ्च । शोच्यस्यानुकम्प्यस्य रक्षार्थं

टिप्पणी

कारणयोरभेदोपचारात् । निमग्नेन क्षोभजनिकेति यावत् । एवमग्रेऽपि । कृम्यादिदर्शनस्पर्शनादिजेत्यर्थः । १ शोकेति । सप्तदशकारिकायां "शोक उच्यत" इत्युक्त एव शोकोऽत्र गृह्यते । चित्तद्रावकस्य तु तस्यात्वाभिर्वाच्य जुगुप्सया साम्यम् । २ तथा = अव्यवधानेन ।

सर्वस्वमपि दास्यामि प्रार्थयेति च यो महान्।
उद्यमो द्रुतचित्तस्य, दानोत्साहस्स उच्यते ॥२२॥

किञ्चिद्व्याख्या

अनुकम्पया = कृपया दयापरपर्यायया प्रवृत्तिस्तु या, तथा द्रुते मनसि [1]य उत्साहः स हि = स एव बुधैर्दयोत्साहस्स्मृतो भवति। तस्यैव प्रसिद्धदयापदार्थावलम्बित्वादिति भावः। प्रवृत्तिः = प्रयत्नः। स चेच्छाजन्यः कार्यजनको मनोधर्मः, तार्किकैरात्मधर्मत्वेनाभ्युपगतानां बुद्धिसुखदुःखेच्छादीनां मनोधर्मत्वस्यैवौपनिषदैरङ्गीकृतत्वात्। दयायाम् = इष्टे परदुःखप्रहाण उत्साहो दयोत्साहः। वस्तुतस्तु तृतीयातत्पुरुष एव दयोत्साहशब्द इति यथाश्रुतार्थपरमेव दयापदम्। प्रकटितश्चेदम्मूल एवानुकम्पयेत्यनेन। युद्धदानधर्मोत्साहशब्दानामपि तृतीयासमासत्वञ्चासम्भवदुक्तिकम्, अध्ययनेन वसतीत्यादिप्रयोगदर्शनेन फलसाधारणस्यैव हेतुत्वस्य तृतीयार्थत्वात्। न च प्रस्तुतोत्साहस्य शोच्यपालनोत्साह इत्येव सञ्ज्ञा न दयोत्साह इतीति शङ्क्यम्, स्मृतो बुधैरिति भागेनैव दत्तोत्तरत्वात्। अपिच स्थायिनस्तत्सञ्ज्ञकत्वे शोच्यपालनवीर इत्येव रसस्य सञ्ज्ञा समुचिता स्यान्न तु दयावीर इति। सुप्रथितो हि युद्धवीरो दयावीर इत्यादिवीररसविभागः ॥ २१ ॥

दयापदस्य योऽनुकम्पारूपो [2]रूढ्यर्थस्तद्धेतुकं स्थायि-

टिप्पणी

१ मनसीत्यस्यान्वयन्दर्शयन्दयोत्साहस्स्मृत इत्यस्य विशेष्यमध्याहरति—य उत्साहस्स इति। २ रूढिलभ्योऽर्थो रूढ्यर्थः। शाकपार्थिवादित्वान्मध्यमपदलोपः। रूढीत्युपलक्षणम्। दयते = रक्षत्यनयेति

तथा स्वधर्मरक्षार्थं या प्रवृत्तिः प्रयत्नतः ।
तया चित्तस्य विस्तारो धर्मोत्साहो द्रुतौ भवेत् ॥२३॥

किञ्चिद्व्याख्या

भावमुक्त्वा योगार्थंभूतौदार्यजं [1]भक्तिभूतन्तन्दर्शयति—सर्वस्वमपीति । तुभ्यमहं सर्वस्वमपि दास्यामि, प्रार्थय इतिच =इत्यपि द्रुतचित्तस्य महान् य उद्यम उत्साहः स दानोत्साह उच्यते । इतिपदस्येत्युक्तिसम्पादकत्वरूपमित्याकारकत्वमर्थः । अनुक्तसमुच्चायकचकारेणैतत्समशीलोक्त्यन्तरसम्पादकत्वस्यापि लाभादित्याद्याकारकत्वमुद्यमे दर्शितम् । द्रुतचित्तस्येत्यस्यौदार्येणेत्यादिः । दानगोचरोत्कटेच्छया तज्जन्यप्रवृत्त्येति वा तदर्थः ॥ २२ ॥

स्वधर्मरक्षार्थप्रवृत्तिरूपयोगार्थान्तरजं स्थायिभावङ्कथयति—तथेति । तथा स धर्मोत्साहो भवेदिति सम्बन्धः । स्वधर्मरक्षार्थं प्रयत्नतः=क्लेशं विषह्यापि या प्रवृत्तिर्भवति तया द्रुतौ सत्याश्चित्तस्य यो विस्तार उत्साहाख्यः, स धर्मोत्साहो भवेत् । वीररसस्थायिभावाभिधानस्यैतत्कारिकया समाप्तिरत्र तथापदेन द्योतिता । स्वधर्मपदेन परसाधारणोऽपि धर्मोऽहिंसादिरूपो गृह्यते, तस्यापि स्वसम्बन्धित्वात् । तथा च परकीयासाधारणधर्मनिरासकमत्र स्वपदम् । अस्ति हि वर्णाश्रमादिभेदेन धर्मभेदः ॥ २३ ॥

टिप्पणी

बोधोऽपि द्रष्टव्य इति पङ्कजादिवद्योगरूढमेव दयापदम् । योगार्थेति पूर्ववत् समासः । १ दयापदयोगार्थजत्वसाम्येऽपि दानधर्मोत्साहरूपस्थायिभावयोरादौ दानोत्साहकथने बीजन्दर्शयन् स्थायिभावं विशिनष्टि—भक्तिभूतमिति ।

वशीकाराख्यवैराग्यँयत् कामास्पृहतात्मकम् ।
तेन द्रुतस्य चित्तस्य प्रकाशश्शम उच्यते ॥२४॥

किञ्चिद्व्याख्या

चित्तद्रावकप्रतिपादिकाया 'कामक्रोध'त्यादिकारिकाया-मादिपदेन गृहीतं वशीकारनामकवैराग्यं लक्षयंस्तदधीनं स्थायिभावमभिदधाति—वशीकारेति। तस्यादिपदेनैव ग्रहणात्तत्कार्यभूतशमस्य भक्तिपदार्थत्वाभावो ध्वनितः। न चैवन्दया कुतस्स्वशब्देनोपात्तेति शङ्क्यम्, तस्या भक्तावुपयोगात्। [1]किन्तु, वाच्यार्थो लक्ष्यार्थो योगार्थद्वयश्चेत्येवञ्चतुर्विधस्य दयापदार्थस्य प्रायशस्तत्रानुपयोगाद्द्वन्द्वान्त्यतयैव तत्पदप्रयोगः। आदौ कामग्रहणस्य तु बीजं षड्विंशकारिकया स्फुटीभविष्यति। अनन्तरं क्रोधगणना तु क्रोधजभक्तेरुपद्रावकप्रीत्यर्थचेतोव्याकुलत्वजनिकायाः कामजरतित्वादिति[2] कृतम्। काम्यन्त इति कामा विषयाः तेष्वस्पृहता=स्पृहाशून्यत्वं तदात्मकँय्यत् वशीकाराख्यवैराग्यं तेन द्रुतस्य चित्तस्य प्रकाशो नैर्मल्यं शम उच्यत इत्यन्वयः। घटे तदभावाभावत्वस्येव स्पृहाविरहत्वस्य चित्तवृत्तिविशेष एव लाघवेन स्वीकारान्नार्थबाधः ॥ २४ ॥

टिप्पणी

१ ननु भगवतो दयनीयत्वाभावाद्दयोत्साहस्य तदविषयकत्वेन भक्तित्वाभावात् कथन्तस्यास्तत्रयामुपयोग इति शङ्कां, दयोन्माह-जुगुप्सा-दानोत्साह-धर्मोत्साहानुगुणानाञ्चतुर्णान्दयापदार्थानामुक्तचरणानमनुवादाद्दानोत्साहस्यापि दयाधीनस्य स्मारणेन परिहरन् परिहृतशङ्कामलङ्करोति—किन्त्विति। २ क्रोधस्य परहिंसादिहेतुभूतस्य भयजनकत्वात्तृतीयतया भयमुपात्तमित्यादिकमालोच्याहेतिकृतमिति ।

इतोऽन्यथा तु चित्तस्य न द्रुतिर्विद्यते क्वचित् ।
तदभावात्तु भावो न निरुक्तान्योऽस्ति कश्चन ॥२५॥
यावत्यो द्रुतयश्चित्ते भावास्तावन्त एव हि ।
स्थायिनो रसताँय्यान्ति विभावादिसमाश्रयात् ॥२६॥

किञ्चिद्व्याख्या

यावद्वक्तव्याकथनकृतन्यूनतामपनुदन्, प्रकटयंश्च स्वप्रतिपादितस्थायिभावानां सयुक्तिकताङ्कामजरत्यादिशमान्तभिन्नस्थायिभावासत्त्वमुपपादयति—इतोऽन्यथेति । इतोऽन्यथा =पूर्वोक्ताच्चित्तद्रुतिप्रकारादन्यप्रकारेण । निरुक्तकामक्रोधाद्यष्टकान्यतमभिन्नाद्भावादित्यर्थः । क्वचिदपि पुरुषे चित्तस्य द्रुतिः न तु=नैव विद्यते । तदभावात्तु=प्रकारान्तरेण चित्तद्रुतेरभावादेव निरुक्तेभ्यः कामक्रोधादिभ्योऽष्टभ्योऽन्यः कश्चन भावः=चित्तवृत्तिः चित्तवृत्तेस्थायित्वसम्पादको नास्ति । अतो नास्ति स्थायिभावान्तरमिति भावः । यद्वा निरुक्तेभ्यस्थायिभावेभ्योऽन्यः कश्चन भावः=स्थायिभावो नास्ति । द्रुतिपूर्वकाणामेव भावानां स्थायित्वादिति भावः ॥ २५ ॥

तदेव स्फुटयति—यावत्यो द्रुतय इति । चित्ते [1]याव-

टिप्पणी

१ यावत्यः=यावद्धर्मावच्छिन्नाः । यथाश्रुते त्वसर्वज्ञदुर्ज्ञेयत्वमापद्येत । तथा च यत्सङ्ख्याका इति विवरणपदस्य यत्सङ्ख्याकधर्मावच्छिन्ना इत्यर्थः । ते च धर्माः कामजद्रुतित्वक्रोधजद्रुतित्वादयः । एवन्तावत्पदस्य तावद्धर्मावच्छिन्नपरत्वात्तद्विवरणस्य तत्सङ्ख्याकधर्मावच्छिन्ना इत्यर्थः । ते च धर्माः कामजद्रुतिपूर्वकभावत्व-क्रोधजद्रुति-

धर्मोत्साहो दयोत्साहो जुगुप्सा त्रिविधा शमः ।
षडप्येतेऽन्यविषया, भगवद्विषया न हि ॥ २७ ॥
धर्मवीरो दयावीरो बीभत्सश्शान्त इत्यमी ।
अतो न भक्तिरसतांयान्ति भिन्नास्पदत्वतः ॥ २८ ॥

किञ्चिद्व्याख्या

त्यः = यत्सङ्ख्याकाः द्रुतयस्सन्ति तावन्त एव = तत्सङ्ख्याका एव भावाः = चित्तवृत्तयः [1]धारावाहिका भूत्वा स्थायिनस्सन्तः विभावादीनां समाश्रयात् = सम्यगाश्रयणात् । समुचितसमूहालम्बनात्मकैकज्ञानविषयत्वरूपसम्बन्धेन स्वसम्बद्धीकरणादित्यर्थः । तादृशसम्बन्धादिति यावत् । रसताम् = ध्वन्यात्मतया सहृदयास्वाद्यमानतां यान्ति हि एतद् रसशास्त्रे प्रसिद्धमित्यर्थः ॥ २६ ॥

एवँव्विवेचितानां स्थायिभावानां तत्तद्रसीयतान्दर्शयन् भक्तिरसान् विवेचयति—धर्मोत्साह इत्याद्याभिर्नवभिः । तत्र सूचीकटाहन्यायपरिपालनाय, [2]भक्तिरसत्वबाधकप्रतिपादनाय च शृङ्गारादीनामभक्तिरसत्वोपपादनानुगुणाय प्रथमतो भक्तिरसीभवनानर्हान् भावान्दर्शयंस्तत्स्थायिकरसानाम्भक्तिरसतान्निराचष्टे चतसृभिराद्याभिः । ननु भगवत्प्रसादजनककर्मण एव धर्मरूपत्वेनोत्तरमीमांसायां श्रीबादरायणचरणैः

टिप्पणी

पूर्वकभावत्वादयः । १ धारावाहिकाः = अविच्छिन्नप्रवाहसहिताः । भूत्वेत्यादि । पूर्वोल्लासाष्टमनवमकारिके सटीके अत्र स्मरणीये । २ भक्तिरसत्वबाधकेति । रसस्य भक्तिरसत्वे बाधकेत्यर्थः । भक्तिरसत्वे बाधकत्वञ्च तद्रसत्वाभावे नियामकत्वम् ।

किञ्चिद्व्याख्या

"फलमत उपपत्ते"रित्यधिकरणे व्यवस्थापितत्वात्तथाविधधर्मोत्साहस्य कथन्न भगवद्विषयकत्वमिति चेदुच्यते—इष्टसाधनतावासनैव भक्तिः। अत एव "मद्गुणश्रुतिमात्रेणे"त्यादिशास्त्रमूलिका

द्रुतस्य भगवद्धर्माद्धारावाहिकताङ्गता।
सर्वेशे मनसो वृत्तिर्भक्तिरित्यभिधीयते॥

इतीयमिष्टसाधनत्वरूपगुणश्रवणेनैव कामाद्युद्दीपनद्वारा प्रवृत्तया चित्तद्रुत्या घटितस्य भक्तिलक्षणस्य प्रक्रमे ग्रन्थकृतामुक्तिः। चैद्यादेरपि भक्तिस्तद्वासनैव। वर्तमानमूर्ताविष्टांशे स्वकीयत्वाग्रहणादीर्ष्यादिसहकारेण द्वेषपदवाच्यताङ्गतेति तु विशेषः। भाविततैा तु सैव स्वेष्टसाधनत्ववासनारूपताङ्गतवती समास्वाद्यत एव रतिरूपेण रसविद्भिः। वक्ष्यति च—

तयोर्भाविशरीरे तु प्रतिबन्धक्षये सति।
सैव चित्तद्रुतिर्भक्तिरसताम्प्रतिपद्यते॥ इति।

धर्मोत्साहस्थले त्विष्टसाधनत्वङ्कर्मणस्तद्द्वारभूतस्य च भगवत्प्रसादस्य समनुभूयते न तु भगवतः। भगवन्निष्ठेष्टसाधनताविषयकत्वमेव भक्तेः प्राणाः, तस्यैव भगवद्गुणश्रवणनिबन्धनत्वसम्भवात्। धर्मोत्साहः पुनरतदुपेतो न भक्तिपदास्पदमिति। हि=यतः धर्मोत्साहः, दयोत्साहः, त्रिविधा जुगुप्सा, शमः एते षडपि अन्यविषयाः भगवद्विषया न, अतः=धर्मोत्साहादीनां भगवद्विषयकत्वाभावात् यत् भिन्नास्पदत्वम्=सर्वं वाक्यमित्यादिन्यायाद्भिन्नमात्रास्पदत्वं तस्मात् धर्मवीरः, दयावीरः, बीभत्सः, शान्तः इत्यमी रसाः भक्तिरसताम्=प्रथमोल्लासदशमकारिकाकथितां पूर्णरसताञ्च

किञ्चिद्व्याख्या

यान्ति किन्तु तत्रत्यत्रयोदशकारिकादर्शितदिशा जाड्यस्य विशेषतोमिश्रणाद्धेतोर्नितरामूनां रसताँच्यान्ति। एतेन श्रृङ्गारादीनामपि भगवदितरास्पदत्वे जाड्यविमिश्रणवशाद्त्यन्ताल्पतैवेत्याविष्कृतम्। उल्लासान्तेऽप्येतदुपपादयिष्यति। परमितरास्पदत्वनियमविरहादिह ते न गृहीताः। भिन्नमात्रेति मात्रपदेन भगवदास्पदत्वनिरासः। आस्पदमालम्बनविभावः। एवञ्च भगवदालम्बनकत्वाभावलाभः। सविषयकत्वरक्षार्थमत्र स्थायिनाम्भगवदन्यविषयकत्वम्, सालम्बनकत्वनिर्वाहार्थं रसानाम्भगवदन्यालम्बनकत्वञ्च निवेदितन्न तु तयोर्हेतुकोटौ प्रवेशः। भगवच्छब्दार्थश्च दशमकारिकाव्याख्यायामाख्यातः। इह शान्तरसस्य भक्तिरसत्वासम्भवो रसगङ्गाधरेऽपि दर्शितः—कथमेत एव रसाः? भगवदालम्बनस्य रोमाञ्चाश्रुपातादिभिरनुभावितस्य हर्षादिभिः परिपोषितस्य श्रीमद्भागवतादिपुराणश्रवणसमये [1]भग-

टिप्पणी

१ भगवद्भक्तैरनुभूयमानस्येतोह वदतोऽपि विद्यत एव भगवद्भक्तिः। अत एव।

स्मृताऽपि तरुणातपङ्करुणया हरन्ती नृणा-
ममङ्गुरतनुत्विषां वलयिता शतैर्विद्युताम्।
कलिन्दगिरिनन्दिनीतटसुरद्रुमालम्बिनी
मदीयमतिचुम्बिनी भवतु कापि कादम्बिनी॥

इति ग्रन्थस्य प्रक्रमः। उपरि च—

आविर्भूता ×यदवधि मधुस्यन्दिनी नन्दसूनोः
कान्तिः काचि+न्निखिलनयनाकर्षणे कार्मणज्ञा।

× यदवधि = यद्दिनादारभ्याऽऽविर्भूता। + कान्त्याविर्भावस्योद्दीपन-

किञ्चिद्व्याख्या

वङ्क्तैरनुभूयमानस्य भक्तिरसस्य दुरपह्नवत्वात्। भगवद्-

टिप्पणी

श्वासो दीर्घस्तदवधि मुखे, पाण्डिमा गण्डयुग्मे,
शून्या वृत्तिः †कुलमृगदृशाश्चेतसि प्रादुरासीत् ॥

( पद्येऽस्मिन्नालम्बनस्य श्रीनन्दसूनो,र्दीर्घश्वासपाण्डिमादेरनुभावस्य, चिन्ताजळतादेर्व्यभिचारिणश्च संय्योगात् कुलमृगदृशाङ्कामजरतिरभिव्यज्यमाना विरहकालावच्छिन्नत्वाद्विप्रलम्भश्रृङ्गारमिळिता भक्तिरसस्सती भवति )

चराचरजगज्जालसदनं वदनन्तव ।
गळद्गगनगाम्भीर्यं वीक्ष्यास्मि हृतचेतना ॥

( कदाचन भगवतो वदनकमलमवलोकितवत्याश्श्रीयशोदादेव्या इयमुक्तिः )

---

विभावतामुपपादयन् कान्ति विशिनष्टि—निखिलनयनानामाकर्षणे विषये यत् कार्मणम् = मन्त्रतन्त्रादि, तज्ज्ञा । तेषामाकर्षणे नितान्तचतुरेत्यर्थः । कुतः ? मधु = क्षौद्ररसं स्यन्दयितुम् = स्रावयितुम् = विना विच्छेदलेशम्प्रवर्तयितुं शीलमस्या इति मधुस्यन्दिनी। निर्भरनिरन्तरनिरतिशयसुखस्फुरणवितरणनिपुणेत्यर्थः । † कुलपालिका मृगदृशः कुलमृगदृश इति शाकपार्थिवादिः । तासाम् । ऋते व्यभिचारादिदोषान् क्रियमाणकुलरक्षाणां सुन्दरीणामित्यर्थः । कुलस्त्री कुलपालिकेत्यमरः । परन्तु

कृष्णमेनमवेहि त्वमात्मानमखिलात्मनाम् ।

इत्यनया रीत्या सुपूज्यचरणश्रीबादरायणिभणितगरिमभरेण भगवता सह सङ्गादङ्गसङ्गरूपान्नन्दगोकुलसुन्दरीरादाय "मत्सङ्गान्मामुपागता" इति भगवतैव गदितान्नखलु नखलु पतिव्रतानाम्पातिव्रत्यपातनपातकपरमाणुरपि । पापं हि कोप एव भगवतः ।

ईर्ष्याजभयजद्वेषौ भगवद्विषयावपि ।
न भक्तिरसतां यातस्तस्मात्ताद्रतिविरोधतः ॥ २९ ॥

किञ्चिद्व्याख्या

नुरागरूपा भक्तिश्चात्र स्थायिभावः । न चासौ शान्तरसेऽन्तर्भावमर्हति, अनुरागस्य वैराग्यविरुद्धत्वादिति ॥२७॥२८॥

धर्मवीरादिरसानां भक्तिरसत्वाभावे तत्स्थायिनान्धर्मोत्साहादीनां भगवद्विषयकत्वाभावस्तन्त्रतया प्रतिपादितः । एवञ्च सतीर्ष्याजद्वेषस्य भयजद्वेषस्य च भगवद्विषयकत्वेन तत्स्थायिकरसयोर्भक्तिरसता स्यादित्याशङ्कां, भावस्य न केवलभगवद्विषयकत्वाभावस्तत्स्थायिकरसस्य भक्तिरसत्वाभावे प्रयोजकः अपितु प्रीतिविशिष्टतद्विषयकत्वाभाव एवेति सूचयन्नुक्तभावयोः प्रीतिरूपविशेषणाभावप्रयुक्तविशिष्टाभावसत्त्वात्तत्स्थायिकरसयोर्न भक्तिरसत्वमिति प्रदर्शनेन परिहरति—ईर्ष्याजेति । प्रीतिवैशिष्ट्यञ्च[1] भगवद्विषयकत्वस्य तादात्म्यस्वरूपोभयघटितसामानाधिकरण्येन । वस्तुतस्तु नैवम् अपितु स्थायिनो भगवद्विषयकत्वमिव प्रीतिविरोधित्वमपि रसस्य भक्तिरसत्वाभावे स्वातन्त्र्येण तन्त्रम्भवति ।

टिप्पणी

सन्तापयामि हृदय-
न्धावन्धावन्धरातले किमहम् ।
अस्ति मम शिरसि सतत-
न्नन्दकुमारः प्रभुः परमः ॥

इत्येवमादीन्युदाहरणानि विराजन्ते । एवन्तन्निर्मितेषु ग्रन्थान्तरेष्वपि करुणालहर्यादिषु स्फुटतरा तस्य तत्रभवतो भगवद्भक्तिः ।

१ भगवद्विषयकत्वनिष्ठप्रीतिवैशिष्ट्यञ्चाप्रकृतमिति चकारो द्योतयति ।

शुद्धो रौद्ररसस्तत्र तथा रौद्रभयानकः ।
नास्वाद्यस्सुधिया प्रीतिविरोधेन मनागपि ॥ ३० ॥

किञ्चिद्व्याख्या

इत्थश्श्लोकभावयोर्भगवद्विषयकत्वेऽपि द्वेषात्मकयोस्तयोस्साक्षात् प्रीतिविरोधित्वात्तत्स्थायिकरसयोर्न भक्तिरसत्वप्रसक्तिरित्येवमेव दर्शयन्नुक्तशङ्कान्निराकरोति—ईर्ष्याजेति । ईर्ष्याजभयजद्वेषौ भगवद्विषयावपि साक्षात् रतिविरोधतः = प्रीतिप्रतिबन्धकत्वात् भक्तिरसतां न यातः = न प्राप्नुतः । रतिविरोधे प्रमाणोपन्यासाय साक्षादिति विशेषणम् । स्पष्टमनुभूयमानादित्यर्थः । यद्वा स्वापकारित्वादिज्ञानस्य द्वेषद्वारा प्रीतिप्रतिबन्धकत्वात्तद्वैलक्षण्यन्दर्शयितुमव्यवधानेनेत्यर्थे साक्षात्पदम् । प्रतिबध्यप्रतिबन्धकभावश्च विषयनिष्ठप्रत्यासत्त्या विवक्षितः । विषयतासंसर्गेण हि प्रीतिम्प्रति तत्संसर्गेण द्वेषस्य प्रतिबन्धकत्वं प्रसिद्धम् । एवमुभयोस्स्वतन्त्रत्वनिवेदनात् स्थायिनः प्रीत्यविरोधित्वे सति भगवद्विषयकत्वं रसस्य भक्तिरसत्वे नियामकमिति लब्धम् ॥ २९ ॥

कथन्तर्हि तद्रूपभक्तयोस्थायित्वमित्याशङ्क्य तत्स्थायिकरसौ दर्शयंस्तयोर्भक्तिरसतान्निरस्यति—शुद्ध इति । तत्र = तथा सति शुद्धो रौद्ररसः, तथा रौद्रभयानकश्च [1] भगवदालम्बनः शुद्धरौद्रवद्रौद्रभयानकस्याप्येकरसतैव न तु रसद्वयतेति तथाशब्देन दर्शितम् । सुधिया कर्तृभूतेन प्रीतिविरोधेन = यत्र प्रीतिरनुपमानन्दमयी, तत्र भगवति धिग्द्वे-

टिप्पणी

१ द्वेषाद्यालम्बनकयोश्शुद्धरौद्र-रौद्रभयानकरसयोर्मनागास्वाद्यत्वात्तन्निरसनाय पूरयति—भगवदालम्बन इति ।

किञ्चिद्व्याख्या

षन्धिगद्वेषमित्येवमत्यन्ताप्रियत्वेन हेतुभूतेन मनागपि ना-स्वाद्यः=आस्वादयितुमनर्हः । सुधिया[1] सुतरां समास्वाद्य-स्यैव भक्तिरसत्वादीषदप्यनास्वाद्यस्य तस्य नास्ति तथा-त्वगन्धोऽपीति भावः । भक्तिरसव्यतिरिक्ततयैतत्सदृशानामपि भगवदितरालम्बनकरसानाम्मनागास्वाद्यत्वमनेन गम्यते । भक्तिरसास्वादयितॄणां विरळतान्द्योतयितुं सुधियेत्येकव-चनम् । इत्थमत्र विवेकः—क्रोधापरपर्यायद्वेषस्थायिको रसो रौद्ररसः । स च द्विविधः—शुद्धरौद्रो रौद्रभयानकश्च । तत्र प्रथमश्शुद्धद्वेषस्थायिकः, द्वितीयो भयमिश्रितद्वेषस्था-यिकः । ईर्ष्याजद्वेष एव शुद्धद्वेषो नाम । भयमिश्रितस्तु भयजद्वेष इति । यत्तु क्रोधस्थायिको रौद्ररसो, भयस्था-यिको भयानक इत्यन्यत्र विलोक्यते, तस्योक्त एवार्थे तात्पर्यम् । सप्तमस्कन्धे "द्वेषाच्चैद्यादयो नृपाः" इति शुद्धद्वेष एवोच्यते । कंसगतद्वेषस्य भयमिश्रितत्वादेव "भयात् कंस" इति । ननु

"शृङ्गारहास्यकरुणरौद्रवीरभयानकाः ।

बीभत्साद्भुतशान्ताश्चे"त्येवन्नवधा स्थितानां रसानां मध्ये शान्तरौद्रबीभत्सानाँय्यदि भक्तिरसत्वासम्भवस्तर्हि "नवरसमिळितं वा केवलं वा पुमर्थम्परममिह मुकुन्दे भक्तियोग"मिति प्रक्रमे भक्तियोगस्य नवरसमिळितत्वोक्ति-विरुध्येत, अपितु षड्रसमिळितत्वमेव युक्तं वक्तुमिति चेन्नैष दोषः, यथासम्भवन्नवरसमिळितत्वस्यैव विवक्षितत्वात् ।

टिप्पणी

१ तस्य=शुद्धरौद्रस्य रौद्रभयानकस्य च भगवदालम्बनकस्य । तथात्वेति । भक्तिरसत्वेत्यर्थः ।

कामजे द्वे रती शोकहासभीविस्मयास्तथा ।
उत्साहो युधि दाने च भगवद्विषया अमी ॥३१॥

किञ्चिद्व्याख्या

तथा च नवरसान्तर्गतरसैर्मिळितमित्यर्थः पर्यवसन्नः । तत्रापि भूयसाम्भक्तियोगे मेळनसत्त्वान्नवरसेत्युदितम् । यथा तर्कसङ्ग्रहे—रूपादिचतुष्टयम्पृथिव्याम्पाकजमनित्य,-मन्यत्रापाकजमिति । तत्र ह्यादिमपदमुत्तरवाक्येऽनुषज्य-मानमु[1]त्करीत्यैव व्याख्येयम्, जलादौ गन्धाद्यभावेन चतुष्टया-भावात् । वस्तुतस्तु शृङ्गारो हास्यः करुणो युद्धवीरो दानवीरः प्रीतिभयानकोऽद्भुतो वत्सलः प्रेयानित्यनेन प्रकारेण नवविधो रसो नवरसपदेनोच्यते । तन्मिळित-त्वञ्च तत्तादात्म्यरूपम् । [2]शुद्धस्तु शुद्धरतिस्थायिको भक्तिरसः "केवलं वे"त्यनेनैवाभिहितत्वान्न "नवरसमिळितं वे"त्युदितनवरसान्तर्भावमर्हतीति ध्येयम् ॥ ३० ॥

येषाम्भावानां सम्भवति भक्तिरसस्थायिता, तेषाम्मध्ये कांश्चन मिश्रभावरूपत्वेन, तत्स्थायिकरसान् मिश्ररसत्वेन च प्रतिपादयति—**कामजे** इत्यादित्रयेण । कामजे द्वे रती, तथा शोकहासभीविस्मयाः, युधि = युद्धे, दाने चोत्साहः

टिप्पणी

१ उत्करीत्येति । यथासम्भवं विद्यमानं रूपादिचतुष्टयमित्यर्थकतया, रूपादिचतुष्टयान्तर्गतगुणपर्यवसायितया चेत्यर्थः । २ शुद्धत्वञ्च भक्ति-रसस्य शुद्धरतिस्थायिकस्य पञ्चषष्टितम्यामाख्यास्यति । पञ्चविंश्यान्तु रसान्तरामिश्रितत्वरूपशुद्धत्वान्तरस्यैव वत्सलप्रेयोरससाधारणस्य प्रसङ्गा-द्विसम्पसङ्गतये "वी"त्यपि । तदेव शुद्धत्वान्तरमादाय चत्वारिंश्यां शुद्धास्त्रयः पुरैवोक्ता इति वक्ष्यति ।

व्यामिश्रभावरूपत्वँय्यान्त्येते क्षीरनीरवत् ।
विभावादिसमायोगे तथा भक्तिरसा अपि ॥ ३२ ॥
शृङ्गारः करुणो हास्यस्तथा प्रीतिभयानकः ।
अद्भुतो युद्धवीरश्च दानवीरश्च मिश्रिताः ॥ ३३ ॥

किञ्चिद्व्याख्या

अमी भगवद्विषया इति प्रथमकारिकान्वयः । अत्र भी-पदम्भयजरति"म्भयमुच्यत" इत्यभिहितचराम्प्रीतिभयानकरसस्थायिनीमनुवदति ॥ ३१ ॥

एते = भगवद्विषयाः [1] कामजरत्यादयस्सप्त । भगवद्गोचरतासहचरकामजरतित्वशोकत्वहासत्वभयजरतित्वविस्मयत्वयुद्धोत्साहत्वदानोत्साहत्वैतद्धर्मसप्तकान्यतमवन्त इत्यर्थः । क्षीरनीरवत् व्यामिश्रभावरूपत्वम् = हासाद्येकलोलीभावापन्नस्थायिभावात्मकत्वं यान्ति । तथा = यद्वद्व्यामिश्रभावरूपा भवन्ति तद्वत् विभावादीनां समायोगे = पूर्वोक्तैकज्ञानविषयत्वलक्षणसम्बन्धे सति भक्तिरसास्सन्तोऽपि भवन्ति । एषु च भावेषु शोकहासविस्मयादीनां रत्या सह मिश्रणमस्ति । परन्तु तेषां स्वशब्दैः, करुणहास्याद्भुतेत्यादिभिश्च रसनामभिरनन्तरकारिकान्तर्गतैरत्यपेक्षयाऽऽधिक्यं स्पष्टम् । अत्र रतेरल्पपरिमाणकत्वादेव पञ्चपञ्चितम्यामेतत्स्थलीयरतिन्न गणयिष्यति ॥ ३२ ॥

उक्तभक्तिरसानेव नामतो निर्दिशन्दर्शयति—शृङ्गारः,

टिप्पणी

१ कामजरतिरादिर्येषान्ते तथेति द्वे अपि कामजरती कामजरतित्वेनैकीकृते । अत एव सप्तेति गणितत्र पुनरष्टेति । अनन्तरकारिकायां रसोद्देशोऽप्येतदनुसारेणैव ।

## किञ्चिद्व्याख्या

करुणः, हास्यः, तथा=हास्यवदेकरसभूतः प्रीतिभयानकः, अद्भुतः, युद्धवीरश्च, दानवीरश्च ते हास्यादिना मिश्रिताः। द्विविधरतिस्थायिकस्यापि रसस्य शृङ्गारत्वेनैक्यविवक्षया शृङ्गार इत्येकवचनम्प्रयुक्तम्। भयमिश्रितद्वेषस्थायिकरसो रौद्रभयानक इव भयमिश्रितरतिस्थायिको रसः प्रीतिभयानकपदेन निगद्यते। धर्मदयावीरयोर्भक्तिरसत्वासम्भवेऽपि युद्धदानवीरयोर्द्वयोरपि तत्सम्भवं स्फुटयितुं प्रत्येकञ्चकारप्रयोगः। श्रीमद्भगवद्गीतायां विश्वरूपदर्शनानन्तरं "स्थाने हृषीकेश तवप्रकीर्त्ये"ति प्रक्रम्य प्रवृत्तमर्जुनवचनं प्रीतिभयानकस्य भक्तिरसत्व उदाहरणम्। ब्रह्मस्तुतौ "पश्येश मेऽनार्यमनन्त आद्य" इत्यादिकमेकादशस्कन्धे त्रिंशाध्याये "अजानता कृतमिद"-मित्येतत्प्रभृतिकलुब्धकवाक्यञ्च। शितविशिखहतो विशीर्णदंस इत्यादिर्भीष्मोक्तिर्युद्धवीरस्य तथात्वे। केचित्तु [1]गुणङ्कर्णाकृष्टमिति पद्यन्तस्य तथात्व [2]उदाहार्षुः। परञ्चासन्धालम्बनकस्य भगवत्सम्बन्धिनो युद्धवीररसस्य, भगवदालम्बनकस्य वा देवनिकरसम्बन्धिनोऽद्भुतरसस्योदाहरणमेतत्, न तु भगवदालम्बनकस्य किञ्चित्सम्बन्धिनो

### टिप्पणी

१ गुणङ्कर्णाकृष्टङ्करकिसलयन्तूणशिखरे।
धनुश्चक्रीभूतङ्क्षिपतदिषुवृन्दन्लत इतः।
रिपून् भूमौ सुप्तान् कलयति समन्देवनिकरे
जरासन्धस्याजौ जयति भुजवीर्यम्मुरभिदः॥

इति श्लोकः। भूमौ=युद्धभूमौ सुप्तान्=दीर्घनिद्राम्प्राप्तान्। मृता-निति यावत्। समम्=एककाल एव कलयति=पश्यति सति। २ उदा-

शुद्धा च वत्सलरतिः प्रेयोरतिरिति त्रयी ।
भावान्तरामिश्रितत्वादमिश्रा रतिरुच्यते ॥ ३४ ॥

किञ्चिद्व्याख्या

युद्धवीररसस्येति[1] भाति ॥ ३३ ॥

एवम्मिश्रभावान् मिश्ररसांश्च प्रदर्श्यामिश्रभावांस्तत्स्थायिकानमिश्ररसांश्च दर्शयति—शुद्धा चेति द्वयेन । शुद्धा रतिः, वत्सलरतिः, प्रेयोरतिरिति च त्रयी=त्रयोऽवयवा अस्यास्संहतेरिति व्युत्पत्त्या त्र्यवयवकसमुदायः । प्रत्येकमिति शेषः । ततश्च शुद्धरतित्वादिरूपप्रत्येकधर्मावच्छिन्नैव त्र्यनुग्राह्या भवति । भावान्तरामिश्रितत्वात्=कामजरत्यादीनां हासादिमिश्रितत्ववदस्यास्स्थायिभावान्तरमिश्रितत्वाभावात् बुधैरमिश्रा रतिरुच्यते । यद्यपि वत्सलादिरतिर्भगवदितरसाधारणी, शुद्धरतिस्तु परमसुखमयभगवन्महिमैक[2]मूलकत्वात्तदेकगोचरेति विशेषस्तथापि स्थायिभावान्तरामिश्रितत्वं समानमिति तुल्यवदुभयोरुपन्यासः । भावान्तरामिश्रितात्वादिति स्त्रीलिङ्गे प्रयोक्तव्ये "शरदः कृतार्थते"तिवत् सामान्ये नपुंसकम् । इत्थमुपरि च तत्रतत्र बोध्यम् ॥ ३४ ॥

टिप्पणी

हरणतयोक्तवन्त इत्यर्थः । १ इति भातीति तु द्वितीयकारिकाविवरणीयटिप्पण्यभिहिताभिप्रायकम् । २ एकपदेन काम × सम्बन्धादिरूपोपाधिनिरासः ।

---

× सम्बन्धपदेन पाल्यपालकभावतया सेव्यसेवकभावतया च पूर्वोपचरितौ पुत्रादिविषयस्नेहौ वत्सलप्रेयोरतिहेतुभूतावभिधीयेते ।

विशुद्धो वत्सलः प्रेयानिति भक्तिरसास्त्रयः ।
रसान्तरामिश्रितास्ते भवन्ति परिपुष्कलाः ॥ ३५ ॥
शृङ्गारो मिश्रितत्वेऽपि सर्वेभ्यो बलवत्तरः ।
तीव्रतीव्रतरत्वं हि रतेस्तत्रैव वीक्ष्यते ॥ ३६ ॥

किञ्चिद्व्याख्या

विशुद्धः वत्सलः प्रेयानिति त्रयो भक्तिरसा भवन्ति । वत्सलप्रेयोरसयोरपि रसान्तरामिश्रिततया शुद्धत्वव्यवहारसत्त्वाद्विभागं सङ्गमयितुमिह विपदम् । विशुद्धत्वञ्च शुद्धरतिस्थायिकत्वात् । ते रसान्तरामिश्रिताः अतः परिपुष्कला भवन्ति । इतरे तु तत्तद्रसान्तरमिश्रितत्वान्न तथा भवन्तीति भावः ॥ ३५ ॥

प्रतिपादितेषु सर्वेषु रसेषु शृङ्गारस्य निरतिशयचमत्कारकारकत्वलक्षणप्राबल्यमयं विशेषं सहेतुकमाह—शृङ्गार इति । [1]उक्तरसानां मध्ये शृङ्गारः मिश्रितत्वे सत्यपि

टिप्पणी

१ शृङ्गारस्यापि लौकिकस्य भक्तिरसेभ्यस्सर्वेभ्योऽप्यतिदुर्बलत्वात्तन्निरसनपुरस्सरं भगवदालम्बनकस्य तस्य श्रीगोपिकादिसंसर्गिणो ग्रहणाय पूरयत्युक्तेति । तादृशस्यैव शृङ्गारस्य पूर्वम्प्रसक्तत्वात् स एवात्र गृह्यते न पुनरनुपस्थितो लौकिकः । स्थायिभावोऽपि शृङ्गारस्य कामजरतिरूपो विशिष्य "श्रीकृष्णनिष्ठते"त्येवमेव सङ्कीर्तितो भवतीति भावः ।

विश्वेषामनुरञ्जनेन जनयन्नानन्द,मिन्दीवर-
श्रेणीश्यामळकोमळैरुपनयन्नङ्गैरनङ्गोत्सवम् ।
स्वच्छन्दं व्रजसुन्दरीभिरभितः प्रत्यङ्गमालिङ्गित-
श्शृङ्गारस्सखि मूर्तिमानिव मधौ मुग्धो हरिः क्रीडति ॥
इति श्रीपद्मावतीवल्लभ-कविकुलसार्वभौम-श्रीजयदेवचरणाः ।

किञ्चिद्व्याख्या

स्वेतरेभ्यस्सर्वेभ्यो रसेभ्यो बलवत्तरः। विद्यमानमपि रसान्तराणामन्योन्यमल्पाधिकबलभावमविकलय्यैकप्रकारेणैव रसान्तरत्वात्मकेन विवक्षणात्तमपं विहाय तरप्प्रयोगः। हि = यतः रतेः तीव्रतीव्रतरत्वं तत्रैव वीक्ष्यते। उभे अपि रती रतित्वेनैकीकृत्य तीव्रतीव्रतरेति कर्मधारयः प्रवृत्तः। यद्वा तीव्रा च तीव्रतरा च तीव्रतीव्रतरे इति द्वन्द्वः। सम्भोगाख्ये शृङ्गारे रतेस्तीव्रत्वम्, विप्रलम्भाख्ये तीव्रतरत्वम्। वीक्ष्यत इत्यनेन "न हि दृष्टेऽनुपपन्नन्नामे"ति न्यायमाश्रित्य मिश्रितत्वेऽपीत्यपिशब्दद्योतितविरोधः परिहृतः।

"[१]कळक्वणितकङ्कणङ्करनिरुद्धपीताम्बर-
ङ्क्रमप्रसृतकुन्तळङ्गळितबर्हभूषं विभोः।
पुनः प्रकृतिचापलस्प्रणयिनीभुजायन्त्रित-
म्मम स्फुरतु मानसे मदनकेळिशय्योत्थितम्" ॥ ॥ ३६ ॥

टिप्पणी

१ विभोर्मदनकेळिशय्योत्थितम् = भगवतो गोपिकारमणपरमोपकरणभूतस्य सुरतस्यान्ते तच्छय्याया उत्थानम्मम मानसे स्फुरत्वित्यन्वयः। तादृशसुरते मुहुर्मुहुः प्रवृत्तिमाह—प्रणयिनीभुजाभ्यामायन्त्रितम् = समन्तान्नियमितम्। निरुद्धमित्यर्थः। तद्धेतुभूतप्रणयिनीरतिवृद्धिविभावं वर्णयत्यन्यैः पञ्चभिरपि विशेषणैः। कळक्वणितक्वणनैर्ग्ययोस्तादृशे कङ्कणे यस्मिंस्तत्। करनिरुद्धम्पीताम्बरँय्यस्मिंस्तत्। क्रमप्रसृताः कुन्तळा यस्मिंस्तत्। गळिता बर्हभूषा यस्मिंस्तत्। × उद्दीपकत्वेन सकलशृङ्गारिजनसम्मतमात्मनो रत्यन्तमनोहरं वपुः प्रणयिनीर्दर्शयितु-

× केवलवपुष आलम्बनत्वेऽपि रत्यन्तदशाविशिष्टवपुष उद्दीपकत्वमेव, आलम्बनगुणस्यैव गुणविशिष्टालम्बनस्यापि तथात्वात्।

टिप्पणी

म्पीताम्बरनिरोधसमये भगवता कङ्कणकळक्वणनङ्कृतम् । प्रकृतिसिद्धश्चापलश्चपलकर्म यस्मिंस्तत् । भगवतः प्रकृतिसिद्धमपि चापलं रतान्तश्रान्त्या किञ्चिद्विरतमासीत्, ईषत्तच्छ्रान्त्यपगमे पुनरारब्धमिति पुनश्शब्देन दर्शितम् । अत्र चापलपदेनच्छुरितादिकमुच्यते ।

"+ स्तोकस्तोकनिरुध्यमानमृदुळप्रस्यन्दिमन्दस्मित-
म्प्रेमोद्भेदनिरर्गळप्रसृमरप्रव्यक्तरोमोद्गमम् ।
श्रोतृश्रोत्रमनोहरव्रजवधूलीलामिथोजल्पित-
म्मिथ्यास्वापमुपास्महे भगवतः क्रीडानिमीलद्दृशः" ॥

+ हृदम्भोजे कृष्णस्सजलजलदश्यामळतनु-
स्सरोजाक्षस्स्रग्वी मकुटकटकाद्याभरणवान् ।
शरद्राकानाथप्रतिमवदनश्श्रीमुरळिकां
वहन्ध्येयो गोपीगणपरिवृतः कुङ्कुमचितः ॥

इति पारिव्राज्याश्रमोद्धर्तारो भगवत्पादा म्लिखितमेव गोपिकाकदम्बकैर्भगवन्तमुपासितवन्त इति तथाऽवतीर्णं स्वामिश्रीविल्वमङ्गलपद्यमीषद्व्याख्याय तदुत्तरपद्येनोपास्ते—स्तोकेति । भगवत्पादोक्तौ गोपीगणपरिवृत इति । अत एवोक्तम्—

शरणमशरणानां शारदाम्भोजनेत्र-
न्निरवधिमधुरिम्णा नीलवेषेण रम्यम् ।
स्मरशरपरतन्त्रस्मेरनेत्राम्बुजाभि-
र्व्रजयुवतिभिरव्याद्ब्रह्म संवेष्टितन्नः ॥ इत्यादि ।

क्रीडानिमीलद्दृशो भगवतो मिथ्यास्वापम्पाद्मादिप्रसिद्धवृन्दावनलीलाकलापान्तर्गतं वयमुपास्महे । कथम्भूतन्तम् ? श्रोतृश्रोत्रमनोहराणि व्रजवधूनां लीलामिथोजल्पितानि = विलासशालिमिथोवचांसि यस्मिंस्तम् । मत्परोक्षमिमा मामुद्दिश्य किं वदन्तीत्यवगन्तुङ्कौतुकादेव भगवता कपटनिद्रा स्वीकृतेति भावः । तादृशजल्पितश्रवणसमये हर्षप्रेमातिशयेन

केचित् केवलसङ्कीर्णाः केचित् सङ्कीर्णमिश्रिताः ।
केचित् केवलमिश्राश्च शुद्धाश्च स्युश्चतुर्विधाः ॥३७॥

किञ्चिद्व्याख्या

प्रबन्धधर्मोत्साहो दयोत्साह इत्यारभ्य भक्तिरसत्वानर्ह-

---

भगवतो व्याजनिद्रासंश्रयणन्दुर्घटमासीदित्याह—स्तोकस्तोकेत्यादिविशे-षणाभ्याम् । स्तोकस्तोकनिरुध्यमानम्, मृदुलकोमलं यथा तथा प्रस्यन्दि प्रस्रावि मन्दस्मितँयस्मिंस्तम् । प्रेमोद्भेदेनोन्नतप्रेम्णा निरर्गल-प्रसृमरप्रव्यक्तरोमोद्गमम् = निरर्गलमनिवार्यं यथा तथा प्रसृमरो व्यापी प्रव्यक्तोऽतिस्फुटो रोमोद्गमो रोमाञ्चो यस्मिंस्तम् । अधिरूढमर्यादम्मन्य,-मिह परमहंससर्वस्वे विलज्जमेव विवदमान,मरसिकधुरन्धरमनुसन्धाय किञ्चिदिवोच्यते—

असङ्गिनो न प्रभवन्ति कामा
हरेरिवाऽऽभीरवधूरसस्य ।

इति शङ्करविजये शिष्यान् प्रति भगवल्लीलारसिकभगवत्पादोदाहरणा-दितो भक्तपरवशतानिलसितमेवेदृशी भृशवशीभवदखिलस्थिरचरनिकरस्य भगवतो लीलेति विभावनीयम् । अतिविशदमेव प्रकरणप्रभृतिषु बहुषु ग्रन्थेषु भगवत्पादानां श्रीगोकुलतिलकलीलाविलासेषु परमरसिकत्वम् । सन्दृश्यते च शास्त्रेषु सिद्धानामपि तद्विलासपीयूषपानपरम्परागोचरनि-रन्तरनिरततेत्यहह महती दुरवस्था भक्तिवासनागन्धविरहितस्येत्यतो जनानधरीकृतनिखिलमधुरिम-विविधभगवल्लीलामृतमय-श्रीमद्भागवतशास्त्र-मवश्यमसकृदभ्यस्यतेत्यभ्यर्थयामीत्यन्यत्र विस्तरः ।

("वेदः पुराणङ्काव्यञ्च प्रभुर्मित्रम्प्रियेव च ।
बोधयन्तीति हि प्राहुस्त्रिवद्भागवतम्पुनः" ॥
"सर्ववेदान्तसारं हि श्रीभागवतमिष्यते ।
तद्रसामृततृप्तस्य नान्यत्र स्याद्रतिः क्वचित्" ॥)

( प्रथमोल्लासटीकोपक्रमगत"योगास्त्रयो मया प्रोक्ता" इत्यतत्यटि-

तत्र केवलसङ्कीर्णा रौद्रो रौद्रभयानकः।
धर्मवीरो दयावीरो बीभत्सश्शान्त इत्यमी ॥ ३८ ॥

किञ्चिद्व्याख्या

रसान्, भक्तिरसांश्च मिश्रितानमिश्रितांश्च विविच्य सामान्यतो रसान् विभजते—केचिदिति। रसा इति शेषः। केचित् केवलसङ्कीर्णाः, केचित् सङ्कीर्णमिश्रिताः, केचित् केवलमिश्राश्च, केचिच्छुद्धाश्चेत्येवं रसाश्चतुर्विधास्स्युरित्यन्वयः। पृथक् चकारप्रयोगश्शुद्धानां विशेषात्। विजातीयस्य विजातीयेन सह मेळनं सङ्करः। मेळनञ्चात्र सादृश्यरूपस्सम्बन्धः, सादृश्यञ्च रसत्वेन, केन रसेन सह सङ्कीर्णा इत्यपेक्षायामिहोत्थितायां भक्तिरसेनेति च प्रकृतवशाल्लभ्यते। ततश्च भक्तिरसभिन्ना रसा इति सङ्कीर्णपदपर्यवसितार्थः ॥ ३७ ॥

चतुर्विधरसेषु केवलसङ्कीर्णानुदाहरति—तत्रेति। रौद्रः =शुद्धरौद्रः रौद्रभयानकः धर्मवीरः दयावीरः बीभत्सः शान्तः इत्यमी रसाः तत्र केवलसङ्कीर्णाः। एतेन भक्तिरसत्वानर्हत्वे सति रसत्वं केवलसङ्कीर्णत्वमिति सूचितम्। रसत्वमात्रोक्तौ सङ्कीर्णमिश्रितप्रभृतिषु रसेष्वतिव्याप्तिरतस्तद्वारणाय सत्यन्तम्। घटादिव्यावृत्तये विशेष्यम्। स-

---

प्पण्यां सप्रमाणसहत्वं संस्थापिता श्रीमद्भागवतशास्त्रस्य वेदादिसकलशास्त्रसारतापि सुस्मर्तव्या )

"विदग्धगोपालविलासिनीनां
सम्भोगचिह्नाङ्कितसर्वगात्रम्।
पवित्रमाम्नायगिरामगम्यं
ब्रह्म प्रपद्ये नवनीतचोरम्" ॥

मिश्रा एवान्यविषयाः प्रोक्तास्सङ्कीर्णमिश्रिताः ।
भगवद्विषयास्ते तु ख्याताः केवलमिश्रिताः ॥ ३६ ॥
शुद्धास्त्रयः पुरैवोक्तास्सङ्कीर्यन्ते न केनचित् ।
एवन्निरूपिता भक्ति,स्सङ्क्षेपादुच्यते पुनः ॥ ४० ॥

किञ्चिद्व्याख्या

त्यन्तान्तर्गतानर्हत्वस्थानेऽनाश्रयत्वनिवेशे शृङ्गारादेर्भगवदन्यालम्बनकत्वदशायां भक्तिरसत्वानाश्रयत्वात्तत्राति- प्रसक्त्या तन्निरसनार्थमनर्हत्वोपादानम् । तथा सति भगवदालम्बनकतावस्थायां तस्य भक्तिरसत्वसम्भवेन तद्- नर्हत्वविरहान्नातिव्याप्तिः । शृङ्गारभक्तिरस-करुणभक्तिरसादिस्थल एकैक एव चित्ररसाख्यो रस इति सिद्धान्तात्, न तु निरुक्तस्थले शृङ्गाराख्यो भक्त्याख्यश्च द्वौ रसौ, करुणाख्यं भक्त्याख्यञ्च रसद्वयमित्यादिकमस्ति ॥ ३८ ॥

सङ्कीर्णमिश्रितान् केवलमिश्रितांश्च रसानुदाहरति— मिश्रा एवेति । मिश्रा एव = शृङ्गारः करुणो हास्य इत्यादिना पूर्वमुक्ता मिश्रिता एव रसाः अन्यविषयाः = भगवदन्यालम्बनास्सन्तः सङ्कीर्णमिश्रिताः प्रोक्ता भवन्ति । त एव भगवद्विषयाः = भगवदालम्बनास्सन्तस्तु केवलमिश्रिताः ख्याताः = प्रसिद्धाः । एवञ्च भगवदन्यालम्बनकत्वविशिष्टं मिश्रितत्वं सङ्कीर्णमिश्रितत्वम्, भगवदालम्बनकत्वविशिष्टन्तत् केवलमिश्रितत्वमिति च पर्यवसितम् ॥ ३९ ॥

शुद्धांस्तानुदाहरति—शुद्धा इत्यर्धेन । शुद्धास्त्रयो रसाः पुरा = पूर्वमेवास्माभिरुक्ताः, ये केनचिदपि रसान्तरेण कर्तृभूतेन न सङ्कीर्यन्ते = शृङ्गारादयो हास्यादिनेव न

राजसी तामसी शुद्धसात्त्विकी मिश्रिता च सा ।
ईर्ष्याजद्वेषजाऽऽद्या स्याद्भयजद्वेषजा परा ॥४१॥
हर्षजा शुद्धसत्त्वोत्था कामशोकादिजेतरा ।
सत्त्वजत्वे तु सर्वासाङ्गुणान्तरकृता भिदा ॥४२॥

### किञ्चिद्व्याख्या

मिश्र्यन्ते । यद्वा कर्मकर्तरि प्रयोगोऽयमिति कर्तृव्यापाराविवक्षणात् सहार्थयोगे तृतीया । केनचिदपि रसान्तरेण सह न मिश्रीभवन्तीत्यर्थः । पूर्वोक्तमप्येतत् सुखप्रतिपत्तये स्मारितम् । चित्तद्रुतेः कारणानामिति द्वितीयकारिकयोपक्रान्तं भक्तेर्निरूपणमेकेन चरणेनोपसंहरन् प्रकारान्तरेण तदुक्तिमपरेण प्रतिजानीते—एवमिति । एवं अस्माभिः भक्तिर्निरूपिता । सा पुनः=प्रकारान्तरेण सङ्क्षेपादुच्यते ॥४०॥

प्रतिज्ञातामपूर्वापेक्षया सङ्क्षेपेण भक्त्युक्तिमुपक्रमते—राजसीति । चतुर्विधेति प्रथमार्धस्य शेषः । राजसी=प्रबलाद्रजसो जाता, तामसी=तादृशस्तमस उत्पन्ना, शुद्धसात्त्विकी=गुणान्तरामिश्रितसत्त्वगुणादुद्भूता, मिश्रितगुणोत्थतया मिश्रिता च सती सा=भक्तिः चतुर्विधा । पूर्वोक्तभक्तीनामत्रान्तर्भावन्दर्शयंश्चतुर्विधभक्तिं यथाक्रममुदाहरति—ईर्ष्याजेत्यर्धद्वयेन । ईर्ष्याजद्वेषजा सा तत्राद्या=राजसी स्यात् । भयजद्वेषजा सा परा=आद्यभक्तेरन्या । द्वितीयत्वेनाभिहितातामसीत्यर्थः । इह द्वेषपदाभ्यां चित्तद्रावकावेव द्वेषौ गृह्येते, न पुन"रीर्ष्याजभयजद्वेषा"वित्यत्रेव स्थायिभूतौ ॥ ४१ ॥

हर्षजा सा शुद्धसत्त्वादुत्था=शुद्धसात्त्विकी । काम-

किञ्चिद्व्याख्या

शोकादिजा सेतरा=उक्ताभ्यस्तिसृभ्योऽन्या। तुरीया मिश्रितेत्यर्थः। [1]अत्र हर्षपदेन चतुर्विधहर्षस्य मध्ये

एकः परानन्दमयश्रीशमाहात्म्यकारणः।

इति प्रथमनिर्दिष्टो हर्षो गृह्यते, इतरेषाम्मिश्रितायामेव भक्तावुपयोगात्। कामशोकादीति समनन्तरपरिगृहीते-भ्यस्तिभ्यो भक्तिकारणेभ्योऽन्ये भगवद्विषयास्समग्रा अपि चित्तद्रावकभावा उच्यन्ते। पूर्वं वत्सलप्रेयोभक्त्योस्थायि-भावान्तरामिश्रितत्वमुक्तम्, इह तु परस्परमिश्रितगुणोत्थत्वा-देव मिश्रितत्वन्दर्शितमतो न पूर्वापरविरोधः। ननु साङ्ख्यमते

एवं सति सुखाकारः प्रविष्टो मानसे यदा।

इति पूर्वोक्तरीत्या सुखाकारस्यैव भक्तित्वेन, तस्य च

तमोरजस्सत्त्वगुणा मोहदुःखसुखात्मकाः।

इति सात्त्विकत्वेन सर्वासामपि भक्तीनां सात्त्विकत्वाद्वि-भागोऽयमनुपपन्न इत्याशङ्क्य तन्मतरीत्याऽपि विभागमुपपा-दयति—सत्त्वजत्वे त्विति। सर्वासाम्भक्तीनां सत्त्वजत्वे सति तु गुणान्तरकृता=रजस्तमःप्रयुक्ता भिदा=भेदो

टिप्पणी

१ ननु हास-विस्मय-युद्धोत्साहरूपाणामपि भक्तीनां हर्षजात्वाच्छुद्ध-सात्त्विकीत्वं स्यादत आहात्रेति। कामशोकादिजेत्यनेन न केवलमेक-त्रिंशकारिकापरिगणिता एव भक्तयोऽनूद्यन्ते, तथा सति वत्सलप्रेयोभक्त्योर-कलनेन विभागासङ्गतिप्रसङ्गात्। अतस्ते अपि ग्रहीतुं पुत्रादितदन्य-स्नेहावप्यादिपदेनोपादीयेते, न तु केवलं हासादिदानोत्साहान्तानामेव कारणानीत्याह— कामशोकादीतीति।

तत्राद्ये रतितान्नैव यातस्सुखविरोधतः ।
रतिशब्दन्तु भजतस्सुखमय्यौ परे द्रुती ॥ ४३ ॥

किञ्चिद्व्याख्या

भवति । तथा च रजोभिभूतसत्त्वजत्वे राजसी, तमोभिभूततज्जत्वे तामसी, रजस्तमोभ्यामुत्कटं यत् सत्त्वं तदुत्थत्वे सात्त्विकी, [1]रजस्तमोन्यतरसमप्रधानसत्त्वोद्भूतत्वे मिश्रितेति विभागः पर्यवसितः ॥ ४२ ॥

चतुर्विधाम्भक्तिमुदाहृत्य तत्राद्ययोर्भक्तिरसस्थायित्वाभावमन्त्ययोस्तत्स्थायित्वञ्च दर्शयति—तत्रेति । तत्राद्ये = राजसीतामस्यौ भक्ती सुखविरोधतः रतितां नैव यातः । राजस्यान्तामस्याश्च भक्तौ रतित्वस्य सन्देहोऽपि नेत्यर्थः । एतत्स्थायिकरसयोर्भक्तिरसत्वस्यापि विशयविरहस्त्विशकारिकया दर्शितो "मनागपी"ति । भगवद्भक्त्योरपि राजसीतामस्योस्सुखव्यक्तिविरोधित्वमनुपदं व्यक्तम्भावि । सुखमय्यौ = सुखाभिव्यञ्जिके परे द्रुती = शुद्धसात्त्विकीमिश्रिते भक्ती तु रतिशब्दं भजतः । द्रुतिकार्यत्वाद्भक्तिर्द्रुतिपदेन गदिता । यद्वा चित्तद्रुतिप्रविष्टो यो भगवत आकारस्तस्यैव भगवदाकारायाश्चित्तद्रुतेरपि भक्तित्वात् सा तत्पदेन निर्दिष्टा । तस्य तत्साधारण्यादेव

सैव चित्तद्रुतिर्भक्तिरसताम्प्रतिपद्यते ।

इति पञ्चपञ्चाश्यां वक्ष्यति ॥ ४३ ॥

टिप्पणी

१ रजस्तमोन्यतरेति । उभयसमप्राधान्यस्थलसामान्यमेवान्यतरसमप्राधान्यम् ।

भक्तिश्चतुर्विधाऽप्येषा भगवद्विषया स्थिरा।
दृष्टादृष्टोभयैकैकफला भक्तिस्त्रिधा भवेत्॥ ४४॥

राजसी तामसी भक्तिरदृष्टफलमात्रभाक्।
दृष्टादृष्टोभयफला मिश्रिता भक्तिरिष्यते॥ ४५॥

किञ्चिद्व्याख्या

नन्वेवं भक्तिरसास्थायिन्योराद्ययोर्भक्त्योर्भगवद्विषयकत्त्वं वा स्थिरत्वं वा नास्तीति वक्तव्यम्। तथा च भक्तिलक्षणस्य पूर्वोक्तस्यान्त्ययोरेव सत्त्वमाद्ययोः पुनरव्याप्तिरेवेत्याशङ्काम- न्त्ययोरिवाद्ययोरपि भगवद्विषयकत्वे सति स्थिरत्वमस्त्येवा- नुरूपफलसत्त्वेनोपपत्तेरित्याशयेन परिहरति—भक्तिश्चतुर्वि- धाप्येषेत्यादिना। चतुर्विधाऽप्येषा भक्तिर्भगवद्विषया सती स्थिरा, यतः भक्तिः दृष्टादृष्टोभयैकैकफला सती त्रिधा भवेत्। दृष्टादृष्टोभयमेकैकञ्च फलं यस्यास्सा तथेति त्रिपदबहुव्रीहिः। एकैकशब्दस्यासमासत्वेऽपि समासवदेकपदत्वान्न चतुष्पदता बहुव्रीहेः। अत एवैकमेकमिति नोक्तं विग्रहे। दृष्टादृष्टो- भयफला, दृष्टमात्रफला,ऽदृष्टमात्रफला चेत्यर्थः, दृष्टा- दृष्टयोरुपस्थितत्वेन मध्यमपदस्य तयोर्मध्य एकैकमित्यर्थक- त्वात्॥ ४४॥

तत्रादृष्टमात्रफलामुभयफलाञ्च भक्तिमुदाहरति— राजसीति। राजसी तामसी च भक्तिः तत्रादृष्टफलमात्र- भाक्। मात्रपदेन दृष्टफलस्यैकस्यैव व्यवच्छेदाददृष्टमात्र- फलभागित्यर्थः। मिश्रिता भक्तिश्शास्त्रविद्भिर्दृष्टादृष्टोभय- फलेष्यते=स्वीक्रियते॥ ४५॥

शुद्धसत्त्वोद्भवाऽप्येवं साधकेष्वस्मदादिषु ।
दृष्टमात्रफला सा तु सिद्धेषु सनकादिषु ॥ ४६ ॥

किञ्चिद्व्याख्या

शुद्धसात्त्विकभक्तेरधिकरणभेदेनोभयफलकतान्दृष्टमात्रफलकताञ्च दर्शय[1]न्नुभयफलाया अन्यथाऽप्युदाहरणपूर्वकन्दृष्टमात्रफलामुदाहरति—शुद्धसत्त्वोद्भवेति । अस्मदादिषु =अस्मदादिरूपेषु साधकेषु=साधनानुष्ठातृषु विद्यमाना शुद्धसत्त्वोद्भवाऽपि भक्तिः एवम्=दृष्टादृष्टोभयफला । वस्तुतः पुनरेवमित्यस्य मिश्रितेवेति यथाश्रुत एवार्थः, दृष्टादृष्टोभयफलेति ह्यपिशब्दवशादनुषज्यते । चैत्रस्सुन्दरो मैत्रोऽपीत्यत्र यथा विधेयपदस्योत्तरवाक्येऽनुकर्षस्तद्वत् । सनकादिषु=तदात्मकेषु, सिध्यन्ति फलन्ति फलवन्तो भवन्ति स्मेति सिद्धाः । प्राप्तफला इत्यर्थः । जीवन्मुक्ता इति यावत् ।

निर्वर्तते सम्भवति सिद्धौ सिध्यति राध्यति ।
निष्पद्यते च राध्नोति साध्नोति फलतीति च ॥

इत्याख्यातचन्द्रिका । एतादृशेषु सिद्धेषु तु

आत्मारामाश्च मुनयो निर्ग्रन्था अप्युरुक्रमे ।
कुर्वन्त्यहैतुकीम्भक्तिमित्थम्भूतगुणो हरिः ॥

( श्री० भा० १ । ७ । १० )

टिप्पणी

१ उभयफलाया यत् अन्यथाऽपि = शुद्धसात्त्विकभक्तिरूपेणाप्युदाहरणम्, तत्पूर्वकम् ।

किञ्चिद्व्याख्या

[1]नैर्गुण्यस्था रमन्ते स्म गुणानुकथने हरेः ।
(श्री० भा० २ । १ । ७)

इत्युपगीयमानेषु विद्यमाना सा=शुद्धसत्त्वोद्भवा भक्तिः दृष्टमात्रफला । अस्मदादिष्विति साधकोदाहरणञ्ग्रन्थकृताङ्केवलाविनयविलसितमेव, तेषां सिद्धत्वात् । समस्ति च तदीयजीवन्मुक्तत्वानुवादो

वंशीविभूषितकरान्नवनीरदाभात्
पीताम्बरादरुणबिम्बफलाधरोष्ठात् ।
पूर्णेन्दुसुन्दरमुखादरविन्दनेत्रात्
कृष्णात् परङ्किमपि तत्त्वमहन्न जाने ॥

इत्यद्वैतसिद्धिगतपद्यविवरणावसरे लघुचन्द्रिकायामखण्डपण्डितमण्डलमण्डनायमानश्रीब्रह्मानन्दसरस्वतीचरणविरचितायां

यद्यत् सम्भवदुक्तिकम्परवचस्सम्भूष्य तद्दूषितं
व्याख्यातश्च [2]निगूढभावगहनो वाणीसुधासागरः ।
सर्वन्तच्छरदिन्दुसुन्दरमुखश्रीकृष्णलीलातनौ
मालाभावमवाप्य सज्जनमनोमालां समाकर्षतु ॥

इत्येवम्भगवति समर्पितायाम् । इत्थञ्चेत्थमागतम्—

टिप्पणी

१ अत एव

परिनिष्ठितोऽपि नैर्गुण्य उत्तमश्लोकलीलया ।
गृहीतचेता राजर्षे आख्यानं यदधीतवान् ॥ इति ।
(श्री० भा० २ । १ । ९)

२ गाम्भीर्यमाधुर्यपरिपूर्णाम्महतीमद्वैतसिद्धिन्दर्शयति—निगूढेत्यादि ।

दृष्टादृष्टफला भक्तिस्सुखव्यक्तेर्विधेरपि ।
निदाघदूनदेहस्य गङ्गास्नानक्रिया यथा ॥ ४७ ॥

किञ्चिद्व्याख्या

शुद्धसात्त्विकभक्तिर्द्विधा—साधकनिष्ठा सिद्धनिष्ठा च । तत्र प्रथमा मिश्रितभक्तिवद्दृष्टादृष्टोभयफला । चरमा दृष्टमात्रफलेति ॥ ४६ ॥

ननु जलताडनादिकमफलकम्, भोजनप्रभृतिकन्दृष्टफलकम्, ज्योतिष्टोमप्रमुखमदृष्टफलकमिति किल लोकस्थितिः, भक्तिः कथमुभयफलेत्याशङ्क्य तस्यास्तथात्वे हेतुं वदन्दृष्टान्तमाह—दृष्टादृष्टेति । भक्तिः निदाघे ग्रीष्मे निदाघेन वौष्ण्येन दूनम्=खिन्नम् । ग्लानमिति यावत् । एतादृशन्देहं यस्य तस्य पुरुषस्य । आद्यकल्पे द्रवनस्यौष्ण्यहेतुकत्वमर्थसिद्धम् । गङ्गास्नानमेव क्रिया यथा=इव सुखव्यक्तेः=आनन्दस्फूर्तेः विधेरपि वैदिकादागमिकात् पौराणाच्च दृष्टादृष्टफला=दृष्टादृष्टे फले यस्या इति व्युत्पत्तेर्दृष्टादृष्टोभयफला । "व, वा, यथा, तथे,वै,वं साम्ये" इत्यमरः । यथेत्यस्य येन प्रकारेणेत्यर्थकत्वे तु, निदाघदूनदेहस्य गङ्गास्नानक्रिया सुखव्यक्तेर्विधेरपि यथा दृष्टादृष्टफला तथा भक्तिर्दृष्टादृष्टफलेत्यन्वयः । परन्तदर्थकत्वेऽपि तस्यात्रोत्तरवाक्यस्थत्वान्न तथाशब्दोपादानापेक्षा । ततश्च, भक्तिस्सुखव्यक्तेर्विधेरपि दृष्टादृष्टफला, यथा निदाघदूनदेहस्य गङ्गास्नानक्रियेत्यन्वयवाक्यम् । गङ्गास्नानत्वेन शास्त्रविहितङ्कर्म गृह्यते न यथाकथञ्चिन्मज्जनमिति दर्शयितुमिह क्रियेत्युक्तम् ॥ ४७ ॥

रजस्तमोभिभूतस्य दृष्टांशः प्रतिबध्यते ।
शीतवातातुरस्येव नादृष्टांशस्तु हीयते ॥४८॥

तथैव जीवन्मुक्तानामदृष्टांशो न विद्यते ।
स्नात्वा भुक्तवताम्भूयो गङ्गायाङ्क्रीडताँय्यथा ॥४९॥

### किञ्चिद्व्याख्या

ननु राजसीतामस्योरपि निरतिशयानन्दघनभगवद्भक्त्यो-स्सत्त्वे सुखव्यक्तेरावश्यकत्वात् कथमुपपद्यते तयोरदृष्टमात्र-फलकत्वमुक्तपूर्वमित्याशङ्कायां तत् सदृष्टान्तमुपपादयति— रजस्तमोभिभूतस्येति । गङ्गास्नानक्रियेत्यस्य विभक्तिविपरि-णामेनानुषङ्गः । गङ्गास्नानक्रियायां शीतवातेनातुरस्येव रज-स्तमोभ्यामभिभूतस्य = व्याप्तस्य जनस्य दृष्टांशः दृष्टादृष्टो-भयमयस्य भगवद्भक्तिफलस्येत्यादिः । प्रतिबध्यते = प्रतिबन्ध-म्प्राप्नोति अदृष्टांशस्तु न हीयते = हानन्न विन्दति । ओहाक् त्यागे । उभयत्रापि लकारः कर्मकर्तरि । वास्तविककर्तृत्वन्तु रजस्तमसोरर्थतः प्रसज्यते । शीतवातस्य ग्रीष्मकाले दृष्टां-शाप्रतिबन्धकत्वाद्दृष्टान्ते युतपदन्ततपदं वाऽनुपादायातुर-पदप्रयोगः ॥ ४८ ॥

नन्वेवं प्रतिबन्धकवशाद्राजसीतामस्योरदृष्टमात्रफलक-त्वेपि सनकादिगतभक्तेश्शुद्धसात्त्विकत्वादुभयफलकत्वमाव-श्यकमेवेति कुतस्तस्या दृष्टमात्रफलकत्वमभिहितमधस्तादिति विशङ्क्य तद्गतजीवन्मुक्तत्वस्य तस्यास्तथात्वे हेतुत्वं भाविदे-हविरहद्वारकं सूचयन्दृष्टान्तमाह—तथैवेति । उपदर्शितस्य दृष्टांशाभावस्य प्रकारोऽत्र तथाशब्देन बोध्यते । अत एवैव-

वर्तमानतनुभोग्यफलं तद्दृष्टमुदाहृतम् ।
भाविदेहोपभोग्यं यत्तददृष्टमुदीरितम् ॥ ५० ॥

किञ्चिद्व्याख्या

कारः प्रयुक्तः । ततश्च यथेत्यस्य सादृश्यार्थकत्वे, तथैव = [1]पूर्वोक्तस्थले यथा दृष्टांशो न विद्यते तद्वदेव जीवन्मुक्तानां, गङ्गायां स्नात्वा भुक्तवतां भूयस्तस्या [2]ङ्क्रीडतां यथाऽदृष्टांशो न विद्यत इति योज्यम् । अन्यार्थकत्वे तु, तथैव जीवन्मुक्तानामदृष्टांशो न विद्यते, यथा गङ्गायां स्नात्वा भुक्तवतां भूयस्तस्याङ्क्रीडतामदृष्टांशो न विद्यत इति । कन्दुकादिक्रीडनाददृष्टफलकत्वेनाप्रसक्ताद्व्यावृत्तिं दर्शयितुं गङ्गायाङ्क्रीडतामित्येव कारिकायामुक्तम् । स्नानस्य तु गङ्गाधिकरणकत्वमनुपदोक्तिमुपस्थितत्वात् सिध्यतीति भावः । गङ्गायां स्नात्वा भुक्तवतां भूयस्तस्याङ्क्रीडतामित्यस्मदुक्तिस्तूभयोरपि तथात्वं मूलाभिप्रेतं विशदयितुमित्यवसेयम् । भुक्तवतामिति सत्यपि भूतनिर्देशे भूयःपदमुत्तरकालस्फुटीकरणाय । सनकादिदृष्टान्तभूतानामास्तिकत्वशङ्कान्निवारयितुं भोजनात् पूर्वङ्गङ्गायां स्नातत्वन्दर्शितम् । यद्वा पूर्वस्नानेन वैधेनादृष्टांशस्य विद्यमानत्वेऽप्युत्तरङ्क्रियमाणायाः क्रीडायाः केवलन्दृष्टार्थकतैवेति दर्शयितुम् । क्रीडतामिति हेतौ शतृप्रत्ययः ॥ ४९ ॥

भाविदेहरहितानान्दृष्टमेव फलं सम्भवति नादृष्टमपीति

टिप्पणी

१ पूर्वोक्तस्थल इति । [illegible] इत्यर्थः ॥ [illegible]ति यावत् । २ [illegible]

रजस्तमःप्रचण्डत्वे सुखव्यक्तिरसत्समा ।
तीव्रवायुविनिर्भिन्नदीपज्वालेव भासते ॥ ५१ ॥

किञ्चिद्व्याख्या

दृष्टादृष्टयोः फलयोस्स्वरूपोक्त्या दर्शयति—वर्तमानेति । यद्वा दर्शनगोचरत्वरूपदृष्टत्वस्य तदभावात्मकस्य चादृष्टत्वस्यातिप्रसक्त्यादिग्रस्तत्वात् फलविशेषणीभूतदृष्टत्वादृष्टत्वे निर्वक्ति—वर्तमानतनौ = तदवच्छेदेन प्राप्यम् = अनुभवितव्यं फलं दृष्टमुदाहृतम् = विद्वद्भिर्दृष्टमुक्तं भवति । भाविदेहोपभोग्यं फलं यत् तत्तैरदृष्टमुदीरितम्भवति । एवञ्च वर्तमानशरीरावच्छेदेनानुभवितव्यत्वं फलस्य दृष्टत्वम्, भाविदेहावच्छेदेन तददृष्टत्वमित्यदोषः ॥ ५० ॥

[1]ननु रजस्तमोभिभूतस्य दृष्टांशप्रतिबन्ध उक्तः, दृष्टांशश्चाभिव्यक्तसुखात्मक एव । तत्प्रतिबन्धकत्वं रजस्तमसोस्तदनुत्पादप्रयोजकत्वमिति वक्तव्यम् । तच्च न सङ्गच्छते, सुखस्य स्वप्रकाशपरमानन्दभगवद्रूपत्वेन नित्यत्वादित्याशङ्क्य नात्र प्रतिबन्धकत्वमुक्तरूपम् अपितु सुखस्य कार्याक्षमतासम्पादकत्वलक्षणम्, कार्यञ्च विभावादिसहकारेण भक्तिरसतयाऽऽस्वाद्यत्वम्, रजस्तमसोश्च तादृशप्रतिबन्धकत्वसत्त्वान्नोक्तासङ्गतिरित्यभिप्रायेणो[2]त्कटरजस्तमस्सत्त्वे सुखव्यक्तेः कार्याक्षमतां सदृष्टान्तं [illegible] सुखव्यक्तिशब्दयोग्यतैव नास्तीत्याह—रजस्तम इत्यादिद्वयेन ।

टिप्पणी

१ ननु प्रतिबध्यमानत्वेनोक्तस्य [illegible] भासमानत्वायुक्तिर्विरुध्यत इत्याक्षेपमाक्षेपान्तर[illegible]भ्यामपाकुर्वन् कारिकाद्वय[illegible]ति—ननिति । २ [illegible]मुत्कटत्वम् ।

तस्मात् स्वयम्प्रभानन्दाकाराऽपि मतिसन्ततिः।
प्रतिबन्धवशान्न स्यात् सुखव्यक्तिपदास्पदम् ॥५२॥

रजःप्रबलसत्त्वांशादीर्ष्याजद्वेषमिश्रिता।
मनोवृत्तिः परानन्दे चैद्यस्य न सुखायते ॥५३॥

### किञ्चिद्व्याख्या

रजस्तमसोः प्रचण्डत्वे = उत्कटत्वे सति सुखव्यक्तिः तीव्रवायौ = तीव्रवायुस्थले विनिक्षिप्तः = [1] निक्षिप्तो यो दीपस्तस्य ज्वालेव। यद्वा तीव्रवायुना विनिक्षिप्ता = क्षिप्ता = चालिता दीपज्वालेवासत्समा भासते ॥ ५१ ॥

तस्मात् = उक्तस्थले सुखव्यक्तेः कार्याक्षमत्वात् स्वयम् = आत्मनैव प्रभा = प्रकाशः = भानं यस्य चिद्रूपस्य स स्वयम्प्रभः। भासकान्तरनिरपेक्षभान इत्यर्थः। स चासावानन्दश्च तस्याकारो यस्यां सा तथा। तादृश्यपि मतिसन्ततिः = धारावाहिकी मनोवृत्तिः प्रतिबन्धस्य = उत्कटरजस्तमोरूपप्रतिबन्धकस्य तत्कर्तृकप्रतिबन्धस्य वा वशात् = आयत्तत्वात् सुखव्यक्तिपदस्याऽऽस्पदम् = प्रतिपादनार्हा न स्यात् ॥ ५२ ॥

उत्कटरजस्तमस्थल उक्तस्य सुखव्यक्तिविरहस्य प्रकारं क्रमेण सोदाहरणन्दर्शयति—रजःप्रबलेति द्वाभ्याम्। प्रकृष्टं

### टिप्पणी

१ निक्षिप्त इति। वीत्यंशः प्रसूत इत्यत्र प्रेतिवद्धात्वर्थपर इति भावः। एवमग्रेऽपि। यथोक्तम्—

धात्वर्थम्बाधते कश्चित्, कश्चित्तमनुवर्तते।
तमेव विशिनष्ट्यन्य उपसर्गगतिस्त्रिधा ॥ इति।

तमःप्रबलसत्त्वांशाद्भयजद्वेषमिश्रिता।
मनोवृत्तिः परानन्दे कंसस्य न सुखायते ॥५४॥

किञ्चिद्व्याख्या

बलं यस्य तत् प्रबलम्। रजः प्रबलं यस्मात् = यदपेक्षया, स रजःप्रबलः स चासौ सत्त्वांशश्च तस्मात् ईर्ष्याजद्वेषमिश्रिता परानन्दे = परमे सुखे मनोवृत्तिः। चैद्यमनोवृत्तिविषयीभूतस्य भगवतः परमसुखैकरूपत्वादिति भावः। चैद्यस्य न सुखायते = न [1]सुखा भवति। अत्रेर्ष्याजद्वेषमिश्रितत्वांशे रजःप्रबलत्वांशः परानन्दविषयकत्वांशे सत्त्वांशश्च हेतुरिति [2]विशिष्टे विशिष्टस्य तथात्वम्। सुखायतेति वक्तव्ये सुखायत इति वर्तमाननिर्देशो ग्रन्थकृता [3]मतिरमणीयपवित्रविचित्रचरित्रभगवदनुध्यानकृताद्भुतवृत्तान्तस्य वर्तमानवत् प्रतिभासात्। यद्वा वर्तमानसामीप्ये भूते लट्। सामीप्यप्रतिभासः पुनरुदितरीत्यैव ॥ ५३ ॥

तमःप्रबलेति विवृतप्रायम् ॥ ५४ ॥

टिप्पणी

१ सुखा = सुखव्यञ्जिका। × त्रिषु द्रव्ये पापम्पुण्यं सुखादि चेति कोशात्, सुखो वायुस्सुखा युवतिस्सुखम्भोजनमित्यादिव्यवहारदर्शनाच्चात्र स्त्रीलिङ्गप्रयोगः। २ विशिष्ट इति। सामानाधिकरण्येनेति भावः। तथात्वम् = हेतुत्वम्। ३ अतिशब्दः पदत्रयेण प्रत्येकं सम्बध्यते, रमणीयतायाः पवित्रताया विचित्रतायाश्च भगवच्चरित्रगतायाः प्रत्येकमतिशयितत्वात्।

---

× त्रिष्वित्यादि। द्रव्ये वर्तमानाः = नियमेन सविशेष्यकाः पापशब्दः पुण्यशब्दस्सुख-श्रश्रेयस-शिव-भद्रादिशब्दाश्च विशेष्यानुसारेण त्रिलिङ्गा इत्यर्थः। यथा—पापः पुमान्, पापा स्त्री, पापकुलमित्यादौ।

तयोर्भाविशरीरे तु प्रतिबन्धक्षये सति ।
सैव चित्तद्रुतिर्भक्तिरसताम्प्रतिपद्यते ॥५५॥
अधुनाऽपि भजन्ते ये द्वेषात् पाशुपतादयः ।
तेषामप्येवमेव स्यादथवा वेनतुल्यता ॥५६॥

### किञ्चिद्व्याख्या

राजसतामसभक्त्योर्यददृष्टमात्रफलकत्वं प्रागभिहितं तत्र दृष्टफलकत्वाभावांशं सोदाहरणमुपपाद्यादृष्टफलकत्वांशस्य प्रकारन्दर्शयति—तयोरिति । तयोः =चैद्यकंसयोः सैव = तादृशमनोवृत्तिरूपैव चित्तद्रुतिः भाविशरीरे =तदवच्छेदेन तु प्रतिबन्धक्षये सति भक्तिरसतां प्रतिपद्यते । सतीत्यनन्तरं साधारणीकरणव्यापारेणेत्यध्याहारः । तेन तद्व्यापाराविष्करणात् पूर्वमितरकाव्यस्थल इव चैद्यादेरत्रापि भगवद्गुणगणश्रवणस्थले दुरदृष्टवशान्मत्सराद्याविर्भावेण न खलु सहृदयानाम्भक्तिरसास्वादसम्भव इति प्रतीयते ॥ ५५ ॥

न केवलम्पुरातनानाञ्चैद्यादीनामेव भक्तेरदृष्टमात्रफलकत्वम् अपित्विदानीन्तनेष्वपि केषाञ्चित्तथेत्याह—अधुनाऽपीति चरणत्रयेण । अधुनाऽपि ये पाशुपतादयः, शाक्तैयगाणपतप्रभृतयोऽन्ये वा ये भगवद्द्वेषिणस्तत्सङ्ग्राहकमादिपदम् । द्वेषाद्भजन्ते =भगवन्तमनन्तकल्याणगुणगणार्णवमपि दोषारोपविषयीकरणादिना सेवन्ते, तेषामपि एवमेव =चैद्यादिवदेव फलं स्यात् । सम्भावनायां लिङ् । भगवत्पादैस्तेषाञ्जीकर्णादिस्थलेषु गत्वा विजयश्शङ्करविजये

टिप्पणी

१ तथा =चैद्यादीनामिव । भक्तेरदृष्टमात्रफलकत्वमित्यनुषङ्गः ।

द्रुतौ सत्याम्भवेद्भक्तिरद्रुतौ तु न किञ्चन।
चित्तद्रुतेरभावेन वेनस्तु कतमोऽपि न ॥५७॥
रजस्तमोविहीना तु भगवद्विषया मतिः।
सुखाभिव्यञ्जकत्वेन रतिरित्यभिधीयते ॥५८॥

किञ्चिद्व्याख्या

समुपलभ्यते। भगवद्द्वेषिषु सर्वेषु पाशुपतादिष्वेतादृश-फलस्यासम्भवमभिसन्धायाह—अथवा तेषां वेनतुल्यता स्यात्। तथा च ये तावच्चैद्यादिवद्भगवति दृढद्वेषास्तै-षान्तत्तुल्यफलकत्वम्, ये पुनरदृढद्वेषास्तेषां वेनवन्न किञ्चि-दपि फलमस्ति, प्रत्युता[1]नेककल्पावधि निरयनिषेवणमेवा-वशिष्यत इति फलितम्। यद्वा द्वेषानुबन्धपरिकल्पितो-ऽपि चैद्यादेर्यो भगवत्समाधिपरिपाकः, आधुनिकानां भग-वद्द्वेषिणां मध्ये केषुचिदपि तद्भागधेयासम्भवसम्भावनया पूर्वकल्पमवच्छेदकावच्छेदेनैव परित्यज्य कल्पान्तरं सम्भा-वयति—अथवेति ॥ ५६ ॥

सिद्धवत्कृत्योक्तं वेनस्याकिञ्चित्फलकत्वं सहेतुकन्दर्श-यति—द्रुताविति। भगवति विषये चित्तस्य द्रुतौ सत्यां भक्तिर्भवेत्, अद्रुतौ सत्यान्तु किञ्चन फलन्न भवेत्, वेनस्तु चित्तद्रुतेरभावेन भक्तानाम्मध्ये कतमोऽपि न ॥ ५७ ॥

त्रिचत्वारिंशकारिकार्थोपपादनन्निरवशेषयति—रजस्तमो-विहीनेति। रजस्तमोभ्यां सुखव्यक्तिप्रतिबन्धकाभ्यां विहीना

टिप्पणी

१ अनेककल्पाः = तेषामवधिः एतावधिर्यस्य तत्।

रजस्तमस्समुच्छेदतारतम्येन गम्यते ।
तुल्येऽपि साधनाभ्यासे तारतम्यं रतेरपि ॥५६॥

किञ्चिद्व्याख्या

भगवद्विषया मतिस्तु शुद्धसात्त्विकी मिश्रिता च भक्तिः सुखाभिव्यञ्जकत्वेन रतिरित्यभिधीयते ॥ ५८ ॥

स्नेहस्यैव विकार इत्याद्याकारिकाया रतिलक्षणकारिकायाः कस्याञ्चिदादर्शपुस्तके दृष्टत्वेऽपि तल्लक्षणस्य स्नेहव्यतिरिक्तचित्तद्रावकस्थलायरतिष्वव्याप्तिग्रस्तत्वान्न सा ग्रन्थान्तर्गतेति तामविगणय्य समनन्तरकारिका व्याक्रियते—एवञ्चतसृणाम्भक्तीनाम्प्रथमयोररतिताञ्चरमयो रतिताञ्च सुखाभिव्यक्तौ रजस्तमःप्रतिबन्धतद्विरहपुरस्सरमुपपाद्य, ननु भगवद्रतिहेतुभूतस्य तद्दर्शनतद्गुणश्रवणाद्यभ्यासस्य तौल्येऽपि रतितारतम्यन्दृश्यमानमनुपपन्नमित्याशङ्कान्निरसितुम्प्रस्तुतरजस्तमः[1]क्षयतारतम्यस्य तत्र हेतुत्वान्नानुपपत्तिरित्याह—रजस्तमस्समुच्छेदेति । साधनाभ्यासे तुल्ये सत्यपि रजस्तमस्समुच्छेदस्य तारतम्येन = न्यूनाधिकभावेन = [2]तद्धेतुकं सत् रतेरपि तारतम्यन्तारतम्यापन्न[3]सुखव्यञ्जकत्वरूपम् गम्यते = शास्त्राज्ज्ञायते । [4]अस्फुटस्यापि रजस्तमस्समुच्छेदतारतम्यस्य भगवद्रतितारतम्ये हेतुत्वं

टिप्पणी

१ क्षयपदेन मूलस्थं समुच्छेदपदं विवृतम् । २ दण्डेन घट इतिवदिहापि तृतीयार्थस्य क्रियानन्वयित्वाद्विवृणोति—तद्धेतुकं सदिति । यदि तस्य तदन्वयित्वमिष्यते तर्हि, जन्यत इतीति मूलेऽध्याह्रियेत । ३ व्यञ्जकत्वस्य व्यञ्जनक्रियाया वा विशेषणमापन्नान्तम् । ४ रजस्तमस्समुच्छेदतारतम्येन

विरहे यादृशन्दुःखन्तादृशी दृश्यते रतिः ।
मृदुमध्याधिमात्रत्वाद्विशेषोऽत्रापि वीक्ष्यते ॥६०॥

किञ्चिद्व्याख्या

शास्त्रसिद्धमिति भावः ॥ ५९ ॥

एवम्भगवद्रतितारतम्ये कारकहेतुं रजस्तमःक्षयतारतम्यरूपमुक्त्वा, ननु रतितारतम्यस्य दर्शनमेव कथमिति तटस्थशङ्कावशाज्ज्ञापकहेतुमपि विरहकालीनदुःखतारतम्यात्मकं, प्रसङ्गात्तस्य विशेषञ्च रतितारतम्यविशेषज्ञापकम्प्रतिपादयति—विरह इति । विरहे सति यादृशम् = यत्समानधर्मकं दुःखमस्ति, तादृशी = तत्समानधर्मिका । विरहकालीनदुःखसमानधर्मिकेत्यर्थः । यथा—यतो धनी ततस्सुखीत्यस्य धनित्वात् सुखीत्यर्थे पर्यवसानम् । रतिर्दृश्यते । विरहकालीनदुःखरूपकार्यतारतम्याद्रतिरूपकारणतारतम्यं स्पष्टमुपलभ्यत इत्यर्थः । अत्रापि = ज्ञापके विरहकालीनदुःखतारतम्ये, ज्ञाप्ये रतितारतम्ये चापि । विशेषपदार्थान्वय्यन्तर्भूतत्वं [१] वीक्षणक्रियान्वय्याधेयत्वं वा सप्तम्यर्थः । मृदुमध्याधिमात्रत्वाद्विशेषो वीक्ष्यते । मृदुमध्याधिमात्रत्वस्य विशेषवीक्षणे हेतुत्वं विशेषस्य तद्रूपतान्दर्शयितुमुक्तम् । मृद्वी = अल्पा च, मध्या = मध्यमा च, अधिका च मृदुमध्याधिकाः । ताः मा-

टिप्पणी

जन्यत इत्येतावन्मात्रमनभिधाय मूले तद्धेतुकं सद्रम्यत इत्युक्तौ कारणन्तस्यास्फुटत्वमेवेति दर्शयंस्तदुक्तेर्भावमाहास्फुटस्येत्यादि । १ विशेषान्वयित्वेऽस्येत्येव मूले वदेच्च पुनरत्रेतीत्यस्वरसात् कल्पान्तरमाह—वीक्षणक्रियेति ।

वैकुण्ठे द्वारकायाञ्च श्रीमद्वृन्दावने तथा ।
मृदुतीव्रा मध्यतीव्रा तीव्रतीव्रा च सा क्रमात् ॥६१॥

किञ्चिद्व्याख्या

मात्राः =परिमाणानि यस्य विरहकालीनदुःखस्य रतेश्च, तन्मृदुमध्याधिमात्रम् । तस्य भावस्तत्त्वम् । द्वन्द्वान्त इति न्यायान्मृदुमात्रत्वं मध्यमात्रत्वमधिमात्रत्वञ्चेत्यर्थः । तथा च विरहकालावच्छिन्नदुःखस्याल्पपरिमाणकत्वे रतेरप्यल्पपरिमाणकत्वं, मध्यमपरिमाणकत्वे तथात्व,मधिकपरिमाणकत्वे तादृशत्वञ्च स्फुटमिति फलितम् । इयञ्च भगवद्रतिः केवलकामजैवेति न भ्रमितव्यम् । पूर्वमपि हि "रजस्तमोविहीना तु भगवद्विषया मति"[2]रिति सामान्याया एव प्रसक्तिः । परं षट्लिङ्गयाप्रसङ्गात् कामजैव तीव्रतीव्रतरतया वर्णिता । अग्रेऽपि तां विशिष्य वक्ष्यति सोपाधिकरत्यन्तर्गततया—
कामसम्बन्धभयतस्सोपाधिस्त्रिविधा मता । इति ।

"[1]साष्टाङ्गपातमभिवन्द्य समस्तभावै-
स्सर्वान् सुरेन्द्रनिकरानिदमेव याचे ।
मन्दस्मितार्द्रमधुराननचन्द्रबिम्बे
नन्दस्य पुण्यनिचये मम भक्तिरस्तु" ॥ ॥ ६० ॥

"गोपा गावो गोपिकाश्च तथा वृन्दावनम्मम ।
सर्वमेवात्र नित्यमेव चिदानन्दरसात्मकम् ॥

टिप्पणी

१ प्रस्तुतां सामान्यतो भगवद्रतिमभियुक्तपद्येन सम्प्रार्थयते—साष्टाङ्गेति । २ भक्तिः =रतिः ।

### किञ्चिद्व्याख्या

इदमानन्दकन्दाख्यं विद्धि वृन्दावनम्मम।
यस्मिन् प्रवेशमात्रेण न पुनस्संसृतिं विशेत्" ॥

(पाद्मे भगवदुद्धवसंवादे भगवद्वचनमिदमादिकम्)

"यस्तु तद्गच्छति वरो वृन्दारण्यम्महामतिः।
तस्यापराधङ्कुर्वन्तो गच्छन्ति नरकायुतम् ॥
वृन्दावनमिति ह्येतन्नास्त्यक्षरचतुष्टयम्।
वदने यस्य मूर्खस्य, तन्दृष्ट्वा स्नानमाचरेत्" ॥

(ब्रह्माण्डपुराणे शिवनारदसंवादे शिववचनान्येतत्प्रमुखानि) [1]उत्तमभागवतस्यापि प्राकृतमध्यमोत्तमभेदेनेव समधिकपरिमाणाया अपि भगवद्रतेरल्पमध्यमाधिकभेदेन त्रैविध्यं सोदाहरणन्दर्शयति—वैकुण्ठ इति। वैकुण्ठे द्वारकायाञ्च श्रीमद्वृन्दावने तथा=च सा=भगवद्रतिः क्रमात् मृदुतीव्रा=अल्पाधिका, मध्यतीव्रा=मध्यमाधिका, तीव्रतीव्रा=अधिकाधिका च भवति। शास्त्रप्रामाण्यादिति भावः। महापण्डित इत्यत्र महत्त्वस्य पाण्डित्य इव [2]विशिष्टान्वयबलेनेह मृदुत्वादेस्तीव्रत्वे पर्यवसानादल्पाधिक्या मध्यमाधिक्याऽधिकाधिक्या चेति त्रैविध्यम्पर्यवसितम्। चकारस्सत्त्वेऽपि पृथक् तथाशब्दप्रयोगश्श्रीवृन्दावनस्य मुख्यत्व[3]ख्यापनाय। अत एव कथितं श्रीमदिति। तत्र च विषये किञ्चित् प्रस्तूयते—

टिप्पणी

१ उत्तमभागवतस्यापीति। अतीतोल्लासाष्टमकारिकाटीकायां सविस्तरायां सप्रमाणमभिहितमेतत्। २ विशिष्टान्वयेति सप्तमीसमासः। ३ ख्यापनमाविष्करणम्।

किञ्चिद्व्याख्या

अहो मधुपुरी धन्या वैकुण्ठाच्च गरीयसी ।
दिनमेकन्निवासेन हरौ भक्तिः प्रजायते ॥
अयोध्या मधु(थु)रा माया काशी काञ्ची ह्यवन्तिका ।
पुरी द्वारवती चैव [1]मुक्तिपुर्यः प्रकीर्तिताः ॥
एवं सप्तपुरीणान्तु सर्वोत्कृष्टं हि माधु(थु)रम् ।
श्रूयताम्महिमा देवि वैकुण्ठभुवनोत्तमः ॥

इत्येवम्प्रभृतयश्श्रीपाद्मे पाताळखण्डे श्रीपार्वतीम्प्रति श्रीशिवोक्तयः । एवं श्रीब्रह्माण्डादावपि—

त्रैलोक्यवर्तितीर्थानां सेवनाद्दुर्लभा हि या ।
परानन्दमयी सिद्धिर्मधु(थु)रास्पर्शमात्रतः ॥इत्यादि ।

मधुपुरी = मधुरा । तत्रैकमपि दिनन्निवासेन हरौ भक्तिः =

अथाब्रवीच्छनैर्बाला तपसाऽतीव कर्शिता ।
ब्रह्मविद्याऽहमतुला योगीन्द्रैर्या विमृग्यते ॥
साऽहं हरिपदाम्भोजकाम्यया सुचिरन्तपः ।
चराम्यस्मिन् वने घोरे ध्यायन्ती पुरुषोत्तमम् ॥
ब्रह्मानन्देन पूर्णाऽहन्तेनानन्देन तृप्तधीः ।
तथापि शून्यमात्मानम्मन्ये कृष्णरतिं विना ॥

इत्येवम्ब्रह्मविद्ययाऽपि बाल्येऽपि कस्मिंश्चन भयानककानने दुश्चरतपोऽतिचिरमाचरन्त्या समाशास्यमानत्वेन श्रीपाद्मप्रतिपादितो भक्तिरसस्थायिभावः प्रजायते = प्रकर्षेण जायते, प्रजावदाचरतीति च । प्रतिबन्धकप्रारब्धसत्त्वे तु प्राणवियोगदशायामेतल्लाभः । माया = हरिद्वारम् । द्वारवती = द्वारका । पुर्यन्तराणि पञ्च स्वनामख्यातानि । सप्तपुरीणाम्मध्ये ।

टिप्पणी

१ सप्तैता मोक्षदायिका इत्यपि पाठः ।

किञ्चिद्व्याख्या

सर्वैरुत्कृष्टम् सर्वोत्कृष्टम्, [1]प्रकारकात्स्न्र्ये सर्वपदम्, सर्वप्रकारैरुत्कृष्टमित्यर्थः। मधुरैव माधुरम्। स्वार्थिकोऽण्प्रत्ययः। माधुरन्तु एवम्=उक्तविधानां सप्तपुरीणां सर्वोत्कृष्टं हीत्यन्वयः। हिरवधारणे। न च पाद्मादीनाम्पुराणत्वेनार्थवादत्वान्नोक्तपुरीणाम्मुक्तिपुरीत्वमपीत्यधिक्षेपः कस्यचिदास्तिकम्मन्यस्य विदुषां हृदयङ्गमः, प्रत्युतोपहासास्पदमेव, पुराणत्वेनार्थवादत्वादित्यस्य शपथमात्रत्वात्, भूतार्थवादस्य स्वार्थे प्रामाण्यात्, पुराणलङ्घनस्य पाष(ख)ण्डधुरीणधर्मत्वाच्च। उक्तञ्च श्रीनारदीये—

वेदार्थादधिकम्मन्ये पुराणार्थं वरानने।
वेदः प्रतिष्ठितो देवि पुराणे नात्र संशयः॥
पुराणमन्यथा कृत्वा तिर्यग्योनिमवाप्नुयात्।
सुदान्तोऽपि सुशान्तोऽपि न गतिम्प्राप्नुयात् क्वचित्॥

इत्यादि। श्रीस्कान्दादौ च—

श्रुतिस्मृती हि नेत्रे द्वे पुराणं हृदयं स्मृतम्।
श्रुतिस्मृतिभ्यां हीनोऽन्धः काणस्स्यादेकया विना।
पुराणहीनाद्धृच्छून्यात् काणान्धावपि तौ वरौ॥

इत्यादि। अत एव "श्रुतिभिर्महापुराणै"रित्याद्यास्सर्वज्ञभगवत्पादानामुक्तयः। परिपालिता च तैस्सनिबन्धन्तत्र तत्र पुराणानां विरोधम्परिहृत्य स्वार्थप्रमापकता। तदीयग्रन्थमध्ये श्रीमत्सहस्रनामभाष्यमेव मया प्रथममवलोकितम्। तदैव पुराणेषु नामकीर्तनादिभागवतधर्मेषु च बलवती तेषामव-

टिप्पणी

१ प्रकारकात्स्न्र्य इति। क्वचिदवयवकात्स्न्र्येऽपि समस्ति सर्वपदम्। यथा—त्वगिन्द्रियन्तु सर्वशरीरवर्तीत्यादौ।

## किञ्चिद्व्याख्या

सम्वतामतिरवयवा, न केवलमधुनैव। किम्बहुना, एतत्कु-स्तकसम्मतेषु समग्रेष्वपि भगवन्महिमसु तत्तद्ग्रन्थस्तुलक्ष भवति महती तेषाम्बहुमतिः। किन्त्वगणितभगवतोऽस्तुष्क-कर्मज्ञाननिष्ठयोर्न कणशोऽपि सा विशदीभवत्यदृश[1] इव दिक्ककर्दमधियः। किमिदमर्थवादत्वम्, अविचित्वं विधिशेषत्वं वाऽतत्परत्वं वेति विकल्प्य तु विदूषणमभव-वचनमकौमुदीदर्शितदिशा द्रष्टव्यम्। तस्मात् सुस्थित-मेवोदाहृतश्रीपद्मादिवचनानां स्वार्थसाधकत्वम्।[2] अन्तर-वयवो हि श्रीमथुराया विशिष्टविपिनचतुर्विंशतिरूपतया निगमनिगदितायाः श्रीमद्वृन्दावन[3]मप्रधानभूतः। उक्तञ्च सुपूज्यचरणैः श्रीमाधवभट्टैः—

अस्ति स्वस्तिकरी समस्तजगतां, निर्वाणगर्वापहा,
क्षोणीमण्डलमध्यभूषणमणिः, काचित् पुरी माधवी।
रम्या, कृष्णतरङ्गिणीसहचरी, कर्मद्रुमोन्मूलिनी,
सत्यानन्दचिदात्मनोऽनवरतस्वेच्छाविहारस्थली॥
स्निग्धच्छायतरुप्रसूनविलसन्माधुर्यलोभभ्रम-
त्कालिन्दीपुलिनोपवर्तिपवनप्रालेयितप्राङ्गणम्।
अन्तेवासमुखप्रभृत्यहिम प्रेमैकलभ्याभर-
स्फूर्तिप्रमोहविहारमत्रनन्तरमस्ति वृन्दावनम्॥

इत्यारभ्य सविस्तरम्। निर्व्याजस्य सो सर्वः—शतको-टिजन्मसमुपार्जितसुविमलसुकृतनिकरपरिपाकेण दुरासद-

### टिप्पणी

१ अन्धोऽदृगिति पर्यायेऽमरः। २ स्वोक्तेरप्रकृतप्रतिपादकत्वकृतो-न्मत्तप्रलपितत्वशङ्कामपनुदत्यन्तरित्यादि। ३ अन्तरवयवं विशिनष्टि—प्रधानभूत इति।

### किञ्चिद्व्याख्या

साधनचतुष्टयसम्पन्नस्य विधिवत् सत्तमगुरुमुपसन्नस्य कस्यचिदनल्पकालमसकृदभ्यस्तश्रवणमनननिदिध्यासनमुखतः पटुतमसंस्कारसहितमेव तत्त्वसाक्षात्कारमचिरेण सम्पाद्य सप्रयासमनोनाशवासनाक्षयसम्पत्तिद्वारा कथमपि साध्यत्वात् सुदुर्लभमहं सर्वोत्कृष्टमहमिति च, [1] अधिकारविधुराणामप्यतिसुलभतया निर्वाणस्य निर्वाणतृणीकारिभगवद्भक्तेश्च वितरणेन तमपहन्तीति निर्वाणगर्वापहा । कृष्णा कृष्णस्य वा तरङ्गिणी कृष्णतरङ्गिणी =

मुरारिकायकाळिमा [2] ललामवारिधारिणी
तृणीकृतत्रिविष्टपा त्रिलोकशोकहारिणी ।
मनोनुकूलकूलकुञ्जपुञ्जधूतदुर्मदा
धुनोतु मे मनोमलङ्कळिन्दनन्दिनी सदा ॥
विहाररासखेदभेदधीरतीरमारुता
गता गिरामगोचरे यदीयनीरचारुता ।
प्रवाहसाहचर्यपूतमेदिनीनदीनदा
धुनोतु मे मनोमलङ्कळिन्दनन्दिनी सदा ॥
जलच्युताच्युताङ्गरागलम्पटाळिशालिनी
विलोलराधिकाकचान्तचम्पकाळिमालिनी ।

### टिप्पणी

१ अधिकारेण विधुराणाम् = प्रकर्षेण विश्लिष्टानाम् । "विधुरन्तु प्रविश्लेषे" इत्यमरः । प्रकृष्टो विश्लेषः, प्रकृष्टो विश्लेषो यस्येति च प्रविश्लेषशब्देन विवक्षितम् । द्वितीयस्यार्थस्य तेनाविवक्षितत्वे तु विधुराणामित्यत्र धर्मधर्मिणोरभेदोपचारेण विश्लेषप्रकर्षस्याऽधिकरणत्वादतिप्रकर्षेण विश्लिष्टानामित्यर्थः पर्यवस्यति । २ आललाममेतस्य समन्ताद्भूषणेत्यर्थः ।

किञ्चिद्व्याख्या

सदावगाहनावतीर्णभर्तृभृत्यनारदा
धुनोतु मे मनोमलङ्कलिन्दनन्दिनी सदा ॥
सदैव नन्दनन्दकेळिशालिकुञ्जमञ्जुळा
तटोत्थफुल्लमल्लिकाकदम्बरेणुसूज्ज्वला ।
जलावगाहिनान्नृणा[1]म्भवाब्धिसिन्धुपारदा
धुनोतु मे मनोमलङ्कलिन्दनन्दिनी सदा ॥

इत्यनेन पथा भगवत्पूज्यपादसम्प्रार्थिता श्रुतिविश्रुता श्रीयमुना। सा सहचरी यस्यास्सा कृष्णतरङ्गिणीसहचरी। अनवरतस्य स्वेच्छया विहारस्य स्थली। प्रेमैकलभ्यमिति। न च प्रेमप्रदस्य प्रेमैकलभ्यतामन्योन्याश्रयो ग्रसत इति वाच्यम्, श्रीवृन्दावनगोचरस्यैव प्रेम्णोऽत्र विवक्षितत्वात्, तस्यैव स्वरसतः प्रतीतेर्न तु श्रीभगवदीयस्य। पूर्णब्रह्मणो रहोविहारभवनम् = रहस्यक्रीडागृहम्। अत एव

वृन्द्रावनद्रुमतलेषु गवाङ्गणेषु
वेदावसानसमयेषु च दृश्यते यत्।
तद्वेणुवादनपरं शिखिपिञ्छचूड-
म्ब्रह्म स्मरामि कमलेक्षणमभ्रनीलम् ॥

इति [2]कर्णामृतगाथा जगति जेगीयते। वेदावसानाना-म् = उपनिषदां समयेषु = सिद्धान्तेषु। समयेऽस्मिन्नपि वि-पुलकलिमलकुलकलुषे निरन्तरनिरस्तसमस्तमलस्य।

टिप्पणी

१ भवोऽब्धिरिव भवाब्धिरित्युपमा। ततश्च रूपकम्। यद्वाब्धि-पदस्येह केवलमवयवार्थ एव सिन्धुविशेषणतया विवक्षितः। प्रथमषष्ठा-ध्यविंशस्य भावार्थदीपिका पुनरवलोकितव्या। २ कर्णामृतेति।

किञ्चिद्व्याख्या

परब्रह्मणश्श्रीमद्वृन्दावने विशिष्य विद्यमानत्वादेव वेदान्तप्रकरणे भगवत्पादै(उपदेशस्य परब्रह्मपरत्वव्यञ्जकमिदम्पद्द्वयम् )रेवमुपदिश्यते—

यमुनातटनिकटस्थित-
वृन्दावनकानने महारम्ये।

टिप्पणी

×सार्धं समृद्धैरमृतायमानै-
राध्मायमानैर्मुरळीनिनादैः।
मूर्धाभिषिक्तम्मधुराकृतीना-
म्बालङ्कदा नाम विलोकयिष्ये॥
शिशिरीकुरुते कदा नु न-
श्शिखिपिञ्छाभरणश्शिशुर्दृशोः।
युगळं, विगळन्मधुद्रव-
स्मितमुद्रामृदुना मुखेन्दुना॥
मधुरमधरबिम्बे मञ्जुळम्मन्दहासे
शिशिरममृतवादे शीतळन्दृष्टिपाते।
विपुलमरुणनेत्रे विश्रुतं वेणुनादे
मरतक(कत)मणिनीलम्बालमालोकये नु॥
किशोरवेषेण† कृशोदरीदृशां
विशेषदृश्येन, विशाललोचनम्,।

---

× सार्धमित्यादि।

कृष्णस्य दर्शने बुद्धिर्जायते यस्य देहिनः।
वक्त्रावलोकनाचस्य, पापँय्याति सहस्रधा॥

इत्यादिना श्रीस्कान्दे प्रभासखण्डे श्रीकृष्णदिदृक्षाप्रभावो वर्णितः।

† निशाकरपदार्थान्वयि वैशिष्ट्यन्तृतीयार्थः।

किञ्चिद्व्याख्या

तिष्ठन्तङ्घननीलं

स्वतेजसा भासयन्तमिह विश्वम् ॥

(तिष्ठन्तम्, न तु पुरैवेषत्कालमुषित्वा ततो गतवन्तम्। ष्ठा—गतिनिवृत्तौ। स्वतेजसेत्यादि। यदादित्यगतन्तेज इत्यादिश्रीमुखोक्तेस्तमेव भान्तमित्यादिश्रुतेरिति वाऽभिप्रायः। स्वस्य सच्चिदानन्दरूपस्य तेजसा=चिदंशेन। एतेन घननीलमित्यनन्तरनिर्दिष्टनैल्यस्य चिन्मयत्वमाविष्कृतम्। समुदाहरिष्यते च सप्तकारिकाव्याख्योपक्रमस्थटिप्पण्यां सच्चिन्मयो नीलिमेति।)

पीताम्बरपरिधान-

श्चन्दनकर्पूरलिप्तसर्वाङ्गम्।

टिप्पणी

यशोदया लब्धयशोनवाम्बुधे +

र्निशामये नीलनिशाकरङ्कदा ॥

कारुण्यकर्बुरकटाक्षनिरीक्षणेन

तारुण्यसंवलितशैशववैभवेन।

---

+ यशोदया लब्धँय्यद्यशस्तदेव नवाम्बुधिस्तस्य। लौकिकाम्बुधिर्नीलः, यशोमयस्य पुनरम्बुधेश्शौक्ल्यान्नवतोक्ता। अम्बुधिबन्धो( बन्धुत्वमिह जनकत्वेनापि, न केवलं वृद्धिकारित्वेनैव। )र्निशाकरस्य तामाह—नीलेति। नवाम्बुधेर्नीलनिशाकरमिति सम्बन्धः। बन्धुत्वस्य सम्बन्धविधयैव कण्ठतः कथनादाधिक्यन्ध्वनितम्। कृशोदरीदृग्विशेषदृश्यकिशोरवेषवैशिष्ट्यं विशाललोचनत्वञ्चापि निशाकरस्य नवतैव। निशामय इति। ईक्ष इत्यर्थः। लट् तु भविष्यदर्थे, कदाशब्दयोगात्। शिशिरीकुरुते कदा न्विति पूर्वोदाहरणेऽप्येवम्।

किञ्चिद्व्याख्या

आकर्णपूर्णनेत्र-

ङ्कुण्डलयुगमण्डितश्रवणम् ॥

टिप्पणी

आपुष्णता भुवनमद्भुतविभ्रमेण

श्रीकृष्णचन्द्र शिशिरीकुरु लोचनम्मे ॥

अस्तोकस्मितभरमायतायताक्ष-

न्निश्शेषस्तनमृदितं व्रजाङ्गनाभिः ।

निस्सीमस्तबकितनीलकान्तिधार-

न्दृश्यासन्त्रिभुवनसुन्दरम्महस्ते ॥

पिञ्छावतंसरचनोचितकेशपाशे

पीनस्तनीनयनपङ्कजपूजनीये ।

चन्द्रारविन्दविजयोद्यतवक्त्रबिम्बे

चापल्यमेति नयनन्तव शैशवे नः ॥

पुनः प्रसन्नेन मुखेन्दुतेजसा

पुरोऽवतीर्णस्य कृपामहाम्बुधेः ।

तदेव लीलामुरलीरवामृतं

समाधिविघ्नाय कदा नु मे भवेत् ॥

बहुलचिकुरभारम्बद्धपिञ्छावतंस-

ञ्चपलचपलनेत्रञ्चारुबिम्बाधरोष्ठम् ।

मधुरमृदुलहासम्मन्दरोदारलील-

म्मृगयति नयनम्मे मुग्धवेषम्मुरारेः ॥

बहुलजलदच्छायाचोरं विलासभरालस-

म्मद*शिखिशिखालीलोत्तंसम्मनोज्ञमुखाम्बुजम् ।

* मद्युक्तशिखीत्यर्थः, शाकपार्थिवादित्वात् । विशेषणेन शिखिनो यौवनशालित्वलाभः ।

किञ्चिद्व्याख्या

मन्दस्मितमुखकमलं
सुकौस्तुभोदारमणिहारम् ।

टिप्पणी

कमपि कमनीलोलापाङ्गप्रसङ्गनिकेतन-
म्मधुरिमपरीपाकोद्रेकं वयम्मृगयामहे ॥

इत्यादिना दर्शनाभिनिवेशभरेण भगवन्तमन्तस्सन्ततमवभासमान-×मक्षिगोचरीकृतवन्तो भागवतवतंसास्स्वामिश्रीविल्वमङ्गलपादाः किल कर्णामृतकृतः ।

सा कापि सर्वजगतामभिरामसीमा
कामाय नो भवतु गोपकिशोरमूर्तिः ।
या शेखरे श्रुतिगिरां, हृदि योगभाजा,-
म्पादाम्बुजे च सुलभा व्रजसुन्दरीणाम् ॥

इति कर्णामृतपद्यस्य श्रीकृष्णकळेबर-परब्रह्मणो*रैक्यप्रतिपादकतया

---

× अक्षिगोचरीकरणात् पूर्वं स्वप्नदर्शनं सञ्जातँ यथा—

वेणीमूले विरचितघनश्यामपिञ्छावचूडो
विद्युल्लेखावलयित इव स्निग्धपीताम्बरेण ।
मामालिङ्गन् मरतक(कत)मणिस्तम्भगम्भीरबाहु-
स्स्वप्ने दृष्टस्तरुणतुलसीभूषणो नीलमेघः ॥ इति ।

अजितस्य विजितता भक्तवात्सल्येनेह तृतीयचरणेन दर्शिता ।

* ऐक्येति । सिद्धान्तमिमङ्ग्रन्थान्ते दर्शयिष्यति । महदपि यथा चन्द्रमण्डलन्दूरत्ववशादल्पपरिमाणतया परिदृश्यते तद्वदसङ्कुचितसकल-शक्तिशालिन्या जगद्धितकारिण्या च भगवदिच्छया परिच्छिन्नस्येव परिपूर्णस्य भाने किमिति चित्रम् ? ।

किञ्चिद्व्याख्या

वलयाङ्गुलीयकाद्या-
नुज्ज्वलयन्तं स्वलङ्कारान् ॥
( शोभनानलङ्कारानुत्कर्षेण ज्वलयन्तम् )
गळविलुळितवनमालं
स्वतेजसाऽपास्तकलिकालम् ।
भुञ्जानं सह गोपैः
कुञ्जान्तरवर्तिनं हरिं स्मरत ॥ इत्यादि ।

( कुञ्जान्तरवर्तिनमिति । अत एव "पूर्णब्रह्मरहोविहार-भवन"मिति श्रीमद्बृन्दावनस्य विशेषणन्दृष्टम् । )

नित्यानन्दैकरसं
सच्चिन्मात्रं स्वयञ्ज्योतिः ।
पुरुषोत्तममजमीशं
वन्दे श्रीयादवाधीशम् ।
यं वर्णयितुं साक्षा-
च्छ्रुतिरपि मूकेव मौनमाचरति ॥

इति प्रक्रमोऽपि प्रकरणस्य निरुक्तपरब्रह्मप्रणमनरूपत्वा-न्नैतरगोचरः । यं साक्षाद्वर्णयितुमिति सम्बन्धः । अनेन श्रुत्यर्थविचारखेदमृते [1] केवलभक्तिपथनिरतत्वमेव तदर्थ-

टिप्पणी

प्रथितस्य द्वितीयपादो मुक्तावलीमञ्जूषायां "म्भवो भवतु भव्याये"ति चतुर्थ्यु-पपादकतयोदाहृतः । कामाय = इष्टाय अनवरततद्दर्शनतत्कीर्तनादिरूपाय ।

१ भक्त्यनुष्ठानसहितस्य कदाचित्फलिष्यतोऽपि मार्गान्तरस्य क्लेशमय-त्वात्, स्वतन्त्रस्य च श्रीमद्बृन्दावनादिविहरणपरमधुरकथाश्रवणादेरमित-सुखमयत्वात् केवलेत्युक्तम् । तदर्थेति । श्रुत्यर्थभूतपरब्रह्मेत्यर्थः ।

"कोमलं कूजयन् वेणुं श्यामलोऽयङ्कुमारकः ।
वेदवेद्यम्परम्ब्रह्म भासताम्पुरतो मम" ॥

किञ्चिद्व्याख्या

सुलभत्वाय समुचितमिति सूचितम् ।

"[१]परमिममुपदेशमाद्रियध्व-
न्निगमवनेषु नितान्तचारखिन्नाः ।
विचिनुत भवनेषु वल्लवीना-
मुपनिषदर्थमुलूखले निबद्धम्" ॥

अनितरसाधारण एव श्रीनन्दनन्दनचन्द्रचन्द्रिकाचकोरचराचरनिरन्तरनिरन्तरस्य[२] श्रीमद्वृन्दावनस्य विविधः

टिप्पणी

१ श्रीमद्वृन्दावनविलसत्परब्रह्मोपदेशप्रसङ्गात्तदेवोपदिशति श्रुत्यर्थविचारपरिक्लिष्टान् प्रति सानुशोचनम् । २ तच्चन्द्रिकाचकोरभूतचराचरनिरन्तरस्य सतो निरन्तरस्येति सम्बन्धः । इह नैरन्तर्यस्य प्रथमस्य दैशिकत्वाच्चरमस्य च कालिकत्वात्तादृशचराचरैर्निबिडतया सदा विद्यमानस्येत्यर्थः । कदाचित् प्रकटङ्कदाचिदतथेत्येवं प्राकट्याप्राकट्याभ्यामेव हि तैर्नैबिड्यस्य श्रीमद्वृन्दावनीयस्य विशेषो न तु कर्हिचिदस्ति कर्हिचिन्नेति सत्त्वासत्त्वाभ्याम्, श्रीपाद्मस्कान्दप्रभृतिभिश्श्रीमद्वृन्दावनलीलाया नित्यत्वेन व्यवस्थापितत्वात्

दास्यस्सखायः पितरौ प्रेयस्यश्च हरेरिह ।
सर्वे नित्या मुनिश्रेष्ठ वसन्ति गुणशालिनः ॥

( इह वृन्दावने )

यथा प्रकटलीलायाम्पुराणेषु प्रकीर्तिताः ।
तथा ते नित्यलीलायां सन्ति वृन्दावने भुवि ॥
गमनाऽऽगमने नित्यङ्करोति वनगोष्ठयोः ।
गोचारणं वयस्यैश्च विनाऽसुरविघातनम् ॥ इत्यादि ।

अत एव, वृन्दावनस्यान्तेष्ववयवेषु सम्यक्चरितुं शीलं स्वभावो

स्पर्शे शब्दे तथा रूपे रसे गन्धे च केवले।
समुच्चिते च सा तत्रेत्येकैका षड्विधा भवेत् ॥ ६२ ॥

किञ्चिद्व्याख्या

प्रभावश्रीतापनीयश्रुतौ श्रीपाद्मब्रह्माण्डादौ च समुद्घुषितो ग्रन्थविस्तरभयान्नोदाह्रियत इति।

"[1]यत्राघासुरकेशिधेनुकबकारिष्टप्रलम्बादयः
क्रोधाग्नौ भवता हुता दितिसुतास्सन्तर्पिता देवताः।
यस्मिंस्ते पदपङ्कजद्वयरजो ब्रह्मादिसम्प्रार्थित-
म्भेजुर्गोमृगपक्षिभूरुहलता, वृन्दावनन्तद्भजे" ॥ ॥६२॥

इयन्निसर्गसंसर्गौपम्येत्यादिकारिका काचिदादर्शपुस्तके यद्यपि दृश्यते तथापि यतिभङ्गाद्यसमञ्जसत्वग्रस्ता न ग्रन्थकृताम्

मधुसूदसरस्वत्या वाचं वेत्ति सरस्वती।
वाचं वेत्ति सरस्वत्या मधुसूदसरस्वती ॥

इत्येवमादिलोकगीतिगीतानामस्पृष्टदुष्टप्रबन्धबन्धनगन्धानाङ्कृतिरिति तां विसृज्यैव विव्रियते—उक्तायास्त्रिविधाया

टिप्पणी

ऽस्येति "वृन्दावनान्तसञ्चारी"ति श्रीमन्नामधेयमपि।

"बर्हापीडाभिराममृगमदतिलककुण्डलाक्रान्तगण्ड-
कञ्जाक्षङ्कम्बुकण्ठं स्मितसुभगमुखं स्वाधरे न्यस्तवेणुम्।
श्यामं शान्तन्त्रिभङ्गं रविकरवसनम्भूषितं वैजयन्त्या
वन्दे वृन्दावनस्थँय्युवतिशतवृतम्ब्रह्म गोपालवेषम्" ॥

१ यत्र यागशालायाम्। सन्तर्पिता निस्तुलतृप्तिशालिन्यः कृताः।

शुद्धा व्यामिश्रिता चेति पुनरेषा द्विधा भवेत् ।
तत्रानुपाधिश्शुद्धा स्यात् सोपाधिर्मिश्रितोदिता ॥६३॥

किञ्चिद्व्याख्या

अपि भगवद्रतेश्शब्दस्पर्शादि[1] विषयहेतुकतया प्रत्येकं षड्विधत्वन्दर्शयति—स्पर्श इति । विषयसम्बन्धवशादनुभूते सतीति लभ्यते । केवले स्पर्शे, तथा केवले शब्दे, तथा केवले रूपे, तथा केवले रसे, तथा केवले गन्धे च, समुच्चिते तत्र=मिळिते स्पर्शादौ चानुभूते सति सा= मृदुतीव्रादिभेदभिन्ना भगवद्रतिर्भवतीति हेतोरेकैका सा षड्विधा भवेत् । ततश्च मृदुतीव्रा मध्यतीव्रा तीव्रतीव्रा च भगवद्रतिः शब्दजा स्पर्शजा रूपजा रसजा गन्धजा समुच्चित-विषयजा चेति प्रत्येकं षोढेत्यर्थः । पूर्वार्धे केवल इति पञ्च-स्वपि प्रत्येकं सम्बध्यत इति दर्शयितुम्मध्ये तथेति कथितम् । सृष्टिक्रममनुसृत्य "शब्दे स्पर्शे" इति वक्तव्ये प्रथमतस्पर्श-ग्रहणमालिङ्गनादिसुखस्याधिक्यादुच्चारणासुकरत्वनिरसन-फलकत्वाच्च । पृथक् चकारप्रयोगेण समुच्चितविषयजाया मुख्यत्वञ्ज्ञापितम् ॥ ६२ ॥

सामान्यतो भगवद्रतेः प्रकारान्तरेण द्वैविध्यमाह—शुद्धेति । शुद्धा व्यामिश्रिता चेति एषा=भगवद्रतिः पुनः= प्रकारान्तरेण द्विधा भवेत् । अत्र प्रथमा रतिः

राजसी तामसी शुद्धसात्त्विकी मिश्रिता च सा ।

टिप्पणी

१. विषयेति ।

"रूपं शब्दो गन्धरसस्पर्शाश्च विषया अमी ।
गोचरा इन्द्रियार्थाश्च" इत्यमरः ।

अनुपाधिः परानन्दमहिमैकनिबन्धना ।
भजनीयगुणानन्त्यादेकरूपैव सोच्यते ॥ ६४ ॥

किञ्चिद्व्याख्या

इति भक्तिसामान्यविभागे तृतीया प्रथमहर्षजा, द्वितीया तुरीया । राजसीतामस्यौ तु भक्तौ रतित्वविरहादिह न गृह्यते । शुद्धाया मिश्रितायाश्च भगवद्रतेर्निरुपाधिकत्वसोपाधिकत्वरूपौ विशेषौ विभजनबीजभूतावाह—तत्रेति । तत्र शुद्धैषाऽनुपाधिस्स्यात्, मिश्रितैषा विद्वद्भिस्सोपाधिरुदिता भवति ॥ ६३ ॥

अनुपाधिं सोपाधिश्च भगवद्रतिं विविच्य दर्शयति—अनुपाधिरिति चतुष्टयेन । परानन्दमहिमैकनिबन्धना = परमानन्दरूपभगवन्माहात्म्यश्रवणकीर्तनादिमात्रनिदाना रतिः तत्रानुपाधिः । रतेस्सोपाधेरिवानुपाधेरपि विभागप्रसक्तेराह—भजनीयेति । भजनीयस्य भगवतो गुणानामानन्त्यात् सा = उक्तलक्षणाऽनुपाधिरतिः एकरूपैवोच्यते । यद्यप्यनुपाधिरतेर्गुणाधीनत्वाद्भगवद्गुणानाञ्च बहुत्वाद्गुणभेदेन विभागो न्याय्यः तथापि तेषामनन्तत्वेन तदधीनरतेरपि तथात्वात् सोऽशक्य इति तस्या एकविधतयैव गणनमित्युक्तम् । यथा—

सङ्ख्यातुमशक्यतया
चुम्बनपरिरम्भणादिबहुभेदात् ।
अयमेक एव धीरैः
कथितस्सम्भोगशृङ्गारः ॥

इति स्थितं साहित्यदर्पणे । एकः = एकप्रकारः इति विवरणञ्च विद्यते तद्व्याख्यायाम् । एतावांस्तु विशेषः—सम्भो-

विभावादिसमायोगे शुद्धभक्तिरसो भवेत् ।
कामसम्बन्धभयतस्सोपाधिस्त्रिविधा मता ॥ ६५ ॥
शृङ्गारमिश्रिता भक्तिः कामजा भक्तिरिष्यते ।
सम्बन्धजा रतिर्याति पूर्वोक्तां रसतान्द्विधा ॥ ६६ ॥

किञ्चिद्व्याख्या

गश्शृङ्गारस्य बहुप्रकारत्वाद्विभागाशक्यत्वम्, भगवद्रतेस्त्व-नुपाधेरनन्तविधत्वादतितरामिति ॥ ६४ ॥

अनुपाधिकशुद्धरतिस्थायिकरसङ्ग्रन्थोपक्रमे "केवलं वे"-ति विशेषतो निर्दिष्टन्दर्शयति—विभावेत्यर्धेन । सा विभा-वादिसमायोगे सति शुद्धो भक्तिरसो भवेत् । सोपाधिमि-श्रितरतिं विभजंस्तत्स्थायिकरसान्दर्शयति—कामसम्बन्धेति सार्धद्वयेन । सोपाधीरतिः कामसम्बन्धभयतः = तद्रूपोपा-धिभेदात् त्रिविधा मता = विदुषामभिप्रेता । रतिमि-श्रितानामपि करुणहास्याद्भुताद्याख्यभक्तिरसस्थायिभूतानां शोकहासविस्मयादिसञ्ज्ञकभावानां रत्यपेक्षयाऽऽधिक्येन तत्स्थलीयन्यूनरतेरगणनीयत्वादग्रहणमिहेत्यवगमितमधस्ता-देव ॥ ६५ ॥

कामजा भक्तिः = भगवद्रतिः विभावादिसमायोगे सति शृङ्गारेण मिश्रिता = तादात्म्यमापन्ना भक्तिः = भक्तिरसः इष्य-ते = अङ्गीक्रियते विद्वद्भिः । सम्बन्धजा रतिः = पाल्यपालक-भावत्वेनोपचरितस्नेहजन्या भगवति वत्सलरति,स्सेव्य-सेवकभावत्वेनोपचरितजन्या तत्र प्रेयोरतिश्च द्विधा पूर्वोक्तां रसतां याति ॥ ६६ ॥

एको वत्सलभक्त्याख्यः प्रेयोभक्तिस्तथा परा।
भयजा भक्तिरध्यास्ते रसम्प्रीतिभयानकम् ॥ ६७ ॥
एकदैव यदि व्यक्तमिदं रतिचतुष्टयम्।
तदा तु पानकरसन्यायेन परमो रसः ॥ ६८ ॥

किञ्चिद्व्याख्या

द्विधात्वमेवाह—एक इत्यर्धेन। तत्रैको रसो वत्सलभक्त्याख्यः। तथा परा प्रेयोभक्तिः। परो रसः प्रेयोभक्त्याख्य इत्यर्थः। भयजा = स्वमन्तूत्थचित्तवैक्लव्याज्जाता भक्तिः = भगवद्रतिः प्रीतिभयानकं रसमध्यास्ते। प्रीतिभयानके भक्तिरसे स्थायित्वेनास्त इत्यर्थः ॥ ६७ ॥

यदा तु रतिचतुष्टयस्यैकदा समूहालम्बनात्मिकाऽभिव्यक्ति[1]स्सामाजिकस्य भवति तर्हि रसचतुष्टयस्य युगपदास्वादचतुष्टयासम्भवात् समूहालम्बनात्मक एक एवाऽऽस्वादः। न च घटपटाविति समूहालम्बने घटपटयोरिव रसानामपि [2]पार्थक्येन भानापत्तिः तथा च तेषामपरस्परसंसृष्टत्वेनाभिव्यक्तेर्विलक्षणचमत्कृतिहेतुभूताया अभावात्तादृशचमत्कृत्यनुदयप्रसङ्ग इति वाच्यम्, यथा [3]गुळ-शुण्ठी-कर्पूरैलाद्यनेकपदार्थसंसृष्टपानकरसास्वादस्थले गुळादिरसानां विनैव पार्थक्येन भानन्तावद्रसगोचरायास्समूहालम्बनात्मिकाया एकस्या एव विलक्षणप्रतीतेरभ्युपगमस्तद्वदिहापीत्यदोषादित्या-

टिप्पणी

१. सामाजिकस्य = नाट्यद्रष्टुस्सभ्यस्य। काव्यश्रोतुरित्यपि द्रष्टव्यम्, इतरथा श्रव्यकाव्यस्य, नाट्यादन्यत्र दृश्यकाव्यस्य च श्रोतॄणामसङ्ग्रहेण न्यूनतापत्तेः। २. पार्थक्येन = ताटस्थ्येन। ३. गुळेत्यादिसंसृष्टान्तं पानकविशेषणम्।

एकद्वयादिरतिव्यक्तिभेदाद्रसभिदा भवेत् ।
तस्मात् कुत्रचिदभ्यासङ्कुर्याद्रतिचतुष्टये ॥ ६६ ॥

**किञ्चिद्व्याख्या**

ह—एकदेति । इदं रतीनाम्=अनुपाधिकशुद्धरतेस्सोपाधीनाञ्च कामसम्बन्धभयजानाम्मिश्रितरतीनाञ्चतुष्टयमेकदैव व्यक्तं यदि, तदा तु पानके ये रसास्तेषां सम्बन्धिना न्यायेन=लोकप्रसिद्धयुक्त्या गदितविलक्षणप्रतीतिरूपया । तमनुसृत्येति यावत् । परमः रसः=रसास्वादो भवति । रसास्वादस्य परमत्वमेकैकरसास्वादापेक्षयाऽतिशयितचमत्कृतिजनकत्वम् ॥ ६८ ॥

ननु रतिमेळनस्थले रसानामुक्तरीत्या पार्थक्येन भानासम्भवाद्रसभेदज्ञानन्न स्यात् ततश्च भेदस्याप्रामाणिकत्वेनैकद्वयादिरसास्वादस्थले चमत्कृतिभेदस्याऽऽनुभविकस्य दत्तजलाञ्जलितापात इत्याशङ्क्य तद्भेदज्ञानोपायन्दर्शयति—एकद्वयादीत्यर्धेन । [1]द्वावादी यासान्ता द्वयादयः । एका च द्वयादयश्चैकद्वयादयः । एका द्वे इत्यादय इत्यर्थः । एकद्वयादीनां रतीनां या व्यक्तयस्तासां भेदाद्रसभिदा=रसभेदज्ञानं भवेत्=भवितुमर्हति । अर्हार्थे लिङ् । भगवद्रतिनिरूपणप्रयोजनतया [2]तदभ्यासं विधत्ते—तस्मादिति । तस्मात्= रसिकसार्वभौमसमास्वाद्यभक्तिरसस्थायिभावभूतभग-

**टिप्पणी**

१. एकपदस्य द्विपदेन द्वन्द्वासम्भवात् सम्भवत्समासस्य विग्रहन्दर्शयति—द्वावित्यादि । आदिपदस्य विधेयसमर्पकस्य नियतपुंलिङ्गत्वात्तदनुसारेणाह—द्वाविति । द्वे रती इत्यर्थः । २. तदभ्यासम्=भगवद्रत्यभ्यासम् ।

व्रजदेवीषु च स्पष्टन्दृष्टं रतिचतुष्टयम् ।
तच्चित्तालम्बनत्वेन स्वचित्तन्तादृशम्भवेत् ॥ ७० ॥

किञ्चिद्व्याख्या

तद्रतेरत्यर्थकृतार्थत्वसमर्पणसमर्थत्वात् रतिचतुष्टये=तस्य मध्ये कुत्रचित् अभ्यासं कुर्यात् ॥ ६९ ॥

तद्रत्यभ्यासाय परमदृष्टान्तभूतं स्थलन्दर्शयन्नभ्यासेन तद्रतिस्सुसम्पादेत्याह—व्रजेति । व्रजति व्याप्नोति [1]मूलप-

टिप्पणी

१. मूलपरब्रह्मण इति । अत एव

तत्रोद्वहत्पशुपवंशशिशुत्वनाट्य-
म्ब्रह्माद्वयम्परमनन्तमगाधबोधम् ।
वत्सान् सखीनिव पुरा परितो विचिन्व-
देकं सपाणिकबळम्परमेष्ठ्यचष्ट ॥

(श्री० भा० १० । १३ । ६१)

अहो भाग्यमहो भाग्यन्नन्दगोपव्रजौकसाम् ।
यन्मित्रम्परमानन्दम्पूर्णम्ब्रह्म सनातनम् ॥

(श्री० भा० १० । १४ । ३२)

इत्येतत्प्रभृतिकवचननिचयाः । श्रीगोपालमहामन्त्राश्च—

कोमळङ्कूजयन् वेणुं श्यामळोऽयङ्कुमारकः ।
वेदवेद्यम्परम्ब्रह्म भासताम्पुरतो मम ॥

इत्येवम्प्रमुखाः । श्रुतयश्च—

* सच्चिदानन्दरूपाय कृष्णायाक्लिष्टकारिणे ।
नमो वेदान्तवेद्याय गुरवे बुद्धिसाक्षिणे ॥

---

* श्रीगोपालतापनीयश्रुतिरियं श्रीमत्सहस्रनामस्तुत्यमिष्टदैवतं स्पष्टयन्ती भाष्यारम्भे मङ्गलम्भवति ।

एकद्व्यादिरतिव्यक्तिभेदाद्रसभिदा भवेत् ।
तस्मात् कुत्रचिदभ्यासङ्कुर्याद्रतिचतुष्टये ॥ ६९ ॥

**किञ्चिद्व्याख्या**

ह—एकदेति । इदं रतीनाम् = अनुपाधिकशुद्धरतेस्सोपाधीनाञ्च कामसम्बन्धभयजानाम्मिश्रितरतीनाञ्चतुष्टयमेकदैव व्यक्तं यदि, तदा तु पानके ये रसास्तेषां सम्बन्धिना न्यायेन = लोकप्रसिद्धयुक्त्या गदितविलक्षणप्रतीतिरूपया । तमनुसृत्येति यावत् । परमः रसः = रसास्वादो भवति । रसास्वादस्य परमत्वमेकैकरसास्वादापेक्षयाऽतिशयितचमत्कृतिजनकत्वम् ॥ ६८ ॥

ननु रतिमेळनस्थले रसानामुक्तरीत्या पार्थक्येन भानासम्भवाद्रसभेदज्ञानन्न स्यात् ततश्च भेदस्याप्रामाणिकत्वेनैकद्व्यादिरसास्वादस्थले चमत्कृतिभेदस्याऽऽनुभविकस्य दत्तजलाञ्जलितापात इत्याशङ्क्य तद्भेदज्ञानोपायन्दर्शयति—एकद्व्यादीत्यर्धेन । [1] द्वावादी यासान्ता द्व्यादयः । एका च द्व्यादयश्चैकद्व्यादयः । एका द्वे इत्यादय इत्यर्थः । एकद्व्यादीनां रतीनां या व्यक्तयस्तासां भेदाद्रसभिदा = रसभेदज्ञानं भवेत् = भवितुमर्हति । अर्हार्थे लिङ् । भगवद्रतिनिरूपणप्रयोजनतया [2] तदभ्यासं विधत्ते—तस्मादिति । तस्मात् = रसिकसार्वभौमसमास्वाद्यभक्तिरसस्थायिभावभूतभग-

**टिप्पणी**

१. एकपदस्य द्विपदेन द्वन्द्वासम्भवात् सम्भवत्समासस्य विग्रहन्दर्शयति—द्वावित्यादि । आदिपदस्य विधेयसमर्पकस्य नियतपुंलिङ्गत्वात्तदनुसारेणाह—द्वाविति । द्वे रती इत्यर्थः । २. तदभ्यासम् = भवंवद्रत्यभ्यासम् ।

व्रजदेवीषु च स्पष्टन्दृष्टं रतिचतुष्टयम् ।
तच्चित्तालम्बनत्वेन स्वचिन्तादृशम्भवेत् ॥ ७० ॥

किञ्चिद्व्याख्या

वद्रतेरत्यर्थङ्कृतार्थत्वसमर्पणसमर्थत्वात् रतिचतुष्टये=तस्य मध्ये कुत्रचित् अभ्यासं कुर्यात् ॥ ६९ ॥

तद्रत्यभ्यासाय परमदृष्टान्तभूतं स्थलन्दर्शयन्नभ्यासेन तद्रतिस्सुसम्पादेत्याह—व्रजेति । व्रजति व्याप्नोति [1] मूलप-

टिप्पणी

१. मूलपरब्रह्मण इति । अत एव

तत्रोद्वहत्पशुपवंशशिशुत्वनाट्य-
म्ब्रह्माद्वयम्परमनन्तमगाधबोधम् ।
वत्सान् सखीनिव पुरा परितो विचिन्व-
देकं सपाणिकबळम्परमेष्ठ्यचष्ट ॥

(श्री० भा० १० । १३ । ६१)

अहो भाग्यमहो भाग्यन्नन्दगोपव्रजौकसाम् ।
यन्मित्रम्परमानन्दम्पूर्णम्ब्रह्म सनातनम् ॥

(श्री० भा० १० । १४ । ३२)

इत्येतत्प्रभृतिकवचननिचयाः । श्रीगोपालमहामन्त्राश्च—

कोमळङ्कूजयन् वेणुं श्यामळोऽयङ्कुमारकः ।
वेदवेद्यम्परम्ब्रह्म भासताम्पुरतो मम ॥

इत्येवम्प्रमुखाः । श्रुतयश्च—

* सच्चिदानन्दरूपाय कृष्णायाक्लिष्टकारिणे ।
नमो वेदान्तवेद्याय गुरवे बुद्धिसाक्षिणे ॥

---

* श्रीगोपालतापनीयश्रुतिरियं श्रीमत्सहस्रनामस्तुत्यमिष्टदैवतं स्पष्टयन्ती भाष्यारम्भे मङ्गलम्भवति ।

किञ्चिद्व्याख्या

स्वब्रह्मणो नित्यलीलास्पदतया तद्रूपत्वादिति व्रजो

टिप्पणी

कृष्णो ब्रह्मैव शाश्वतमित्याद्याः । अत एव च महाभारते—

सर्वे वेदास्सर्वविद्यास्सशास्त्रा-
स्सर्वे यज्ञास्सर्व इज्याश्च कृष्णः ।
विदुः कृष्णम्ब्राह्मणास्तत्त्वतो ये
तेषां राजन् सर्वयज्ञास्समाप्ताः ॥

इति सिद्धान्तः । अपि चेदमेव श्रुतिस्मृतितत्त्वम्

मीनादिभिरवतारैर्निहतास्सुरविद्विषो बहवः ।
नीतास्ते × निजरूपन्तत्र च मोक्षस्य का वार्ता ॥
ये यदुनन्दननिहतास्ते तु न भूयः पुनर्भवम्प्रापुः ।
+ तस्मादवताराणामन्तर्यामी प्रवर्तकः कृष्णः ॥

× निजरूपम् = सुरविद्विड्रूपमेव । + यस्मात् सुरानितरांश्च रिपुतो भवतश्च रक्षितुं श्रीकृष्ण एव निष्णातो नावतारास्तस्मादेष तेषामन्तर्यामितया प्रवर्तयितेत्यर्थः । एष तु नावतारः किन्त्ववतार्येवेति बहुशास्त्रसिद्धम् । अत एव गीयते गीतगोविन्दादिना—

वेदानुद्धरते जगन्ति वहते भूगोळमुद्बिभ्रते
दैत्यन्दारयते बलिञ्छलयते क्षत्रक्षयङ्कुर्वते ।
पौलस्त्यञ्जयते हलङ्कलयते कारुण्यमातन्वते
म्लेच्छान् मूर्छयते दशाकृतिकृते कृष्णाय तुभ्यन्नमः ॥

इत्यादि । क्वचिदवतारत्वव्यवहारस्तु

कृष्णमेनमवेहि त्वमात्मानमखिलात्मनाम् ।
जगद्धिताय सोऽप्यत्र देहीवाऽऽभाति मायया ॥

( श्री० भा० १० । १४ । ५५ )

किञ्चिद्व्याख्या

देशविशेषः । मायाविलासाद्देशविशेषतया प्रतीयमान-

टिप्पणी

ब्रह्माण्डानि †बहूनि पङ्कजभवान् प्रत्यण्डमत्यद्भुतान्
गोपान् वत्सयुतानदर्शयदजं विष्णूनशेषांश्च यः ।
शम्भुर्यच्चरणोदकं स्वशिरसा धत्ते च, मूर्तित्रयात्
कृष्णो वै पृथगस्ति कोप्यविकृतस्सच्चिन्मयो नीलिमा ॥

इत्युक्तलोकप्रतीत्यभिप्रायकः ।

यद्रोमरन्ध्रपरिपूर्तिविधावदक्षा
वाराहजन्मनि बभूवुरमी समुद्राः ।
तन्नाम नाथमरविन्ददृशँय्यशोदा
पाणिद्वयान्तरजलैस्स्नपयाम्बभूव ॥

इत्यत्राप्यवतारितैव विदिता भवति स्वरतपरतन्त्रस्य भगवतः । एव-मिहापि "शम्भुर्यच्चरणोदकं स्वशिरसा धत्त" इत्यत्र यच्चरणेत्यनेन ।

"कृष्णः पूर्णषडैश्वर्यमाधुर्याणाम्महोदधिः ।
अन्तर्भूतसमस्तावतारो निखिलशक्तिमान्" ॥

† बहूनीति ।

क्वाहन्तमोमहदहङ्खचराग्निवार्भू-
संवेष्टिताण्डघटसप्तवितस्तिकायः ।
क्वेदृग्विधाविगणिताण्डपराणुचर्या-
वाताध्वरोमविवरस्य च ते महित्वम् ।

इति स्वदृष्टप्रकारेण ब्रह्मोक्तेरिति भावः । विष्णूनिति । अय-मभिसन्धिः—त्रिपादूर्ध्वं उदैत्पुरुष इति पुरुषसूक्तसूक्तो यस्त्रिपाद्विभूति-महानारायणः ( पादत्रयविभूतिको महानारायणः ) तस्य पादत्रयविभूति-

## किञ्चिद्व्याख्या

न्तदिति यावत्। न चैवङ्कटत्वेन प्रतीयमानम्ब्रह्मैव घटो नामे-

### टिप्पणी

इति रीत्या वेदान्तप्रकरणे प्रबोधसुधाकरतया प्रसिद्धे निष्पक्षपात-संशयलेशे सर्वविदो भगवत्पादा युक्तियुक्तमतिक्षिपन्। इत्थमितरेष्वपि ग्रन्थेषु सर्वसमधिकतयैव श्रीनन्दवधूस्तनन्धयस्य त्रिविधपरिच्छेदविरहित-सच्चिदानन्दघनस्य विकारविदूरत्वे सत्यौ× दार्यमाधुर्यमहोदधित्वमखिल-गुरुभिरेभिरभिनिवेशसहितमभिहितमवलोक्यते। अस्य च परमसिद्धा-न्तस्य समवधारणात्, स्वानुभवाच्च मूलकृतोऽपि "कृष्णात् परङ्किमपि तत्त्वमहन्न जाने" इत्यद्वैतानन्दभरमास्वादितवन्तः। १. तदिति। व्यापकं ब्रह्मेत्यर्थः।

---

नित्या, अधस्तनपादविभूतिः पुनरनित्या, तदन्तर्गतस्यानन्तकोटिब्रह्माण्ड-ब्रह्मकस्य पादविभूतिनारायणस्य (पादविभूत्यन्तर्गतो नारायण इति विग्रहात् समासश्शाकपार्थिवादिः) नेयकोटिप्रविष्टास्तत्तद्ब्रह्माण्डपरि-पालका नारायणा (विष्णवः) श्श्रुतिप्रसिद्धाः। तच्छ्रुतौ त्रिपाद्विभूति-महानारायणोपनिषत्त्वेन प्रथितायामथर्ववेदीयायाम्, अथातो महोपनिषदं व्याख्यास्यामस्तदाहुरेको ह वै नारायण आसीन्न ब्रह्मा नेशान इत्यादि-सामवेदीय"महोपनिष"त्प्रभृतिषु च बहुषु ग्रन्थेषु, परशिवाद्विविधयापि विविधशास्त्रेषु तोष्टूयमानो निरुक्तत्रिपाद्विभूतिमहानारायणस्तु समूलकस-कलसुरासुरमुखचराचरनिकरपर्यवसानभाजनभूतमतिविमलममलपशुपपालक-(अमलौ पशुपौ श्रीयशोदानन्दगोपौ पालकौ यस्य त, दमलानां वा पशुपानाम्पालकम्) मतुलसच्चिदानन्दघनविरहितविक्रियब्रह्मैवेति।

"पराकृतनमद्बन्धम्परब्रह्म नराकृति।
सौन्दर्यसारसर्वस्वं वन्दे नन्दात्मजम्महः"॥

×. औदार्यम् = सरलत्वन्दातृत्वम्महत्त्वञ्च।

किञ्चिद्व्याख्या

ति वाच्यम्, घटो मायिकत्वात् कल्पितः व्रजस्तु न तथा किन्तु तस्य देशविशेषत्वन्तथैति वैषम्यात्।[1] अथ जगद्ब्रह्मेति वाक्यबलादखिलमपि घटपटादिकम्ब्रह्मैवेति कुतस्तयोर्विषमते-ति[2] चेदियमविदितवेदान्तवृत्तान्तानां विभीषिकेत्यधिगच्छ।सच्चिदानन्दब्रह्मो[3]पादानकत्वप्रयुक्ततत्तादात्म्यमेव हि मिथ्याजडदुःखमये जगति तद्वाक्येन प्रतिपाद्यते न तु तदैक्यम्, सकलप्रमाणप्रकोपप्रसङ्गात्। यद्वा तत्र[4] सामानाधिकरण्यं बाधायाम्। ततश्च, यज्जगत्त्वेन ज्ञातन्तद्ब्रह्मैव न तु जगदिति तदर्थः। चतुर्धा हि सामानाधिकरण्यम्—अध्यास इदं रजतमित्यादौ, बाधायां स्थाणुः पुमानित्यादौ, विशेषणविशेष्यभावे नीलमुत्पलमित्यादौ, अभेदे तत्त्वमसीत्यादावि ति। अध्यासविषयीभूतं यदाधारारोप्ययोस्तादात्म्यं तद्बोधकनामद्वयमिहाध्यासपदेन विवक्षितम्। तथा चाध्यासे सामानाधिकरण्यमित्यस्याधारारोप्ययोस्तादात्म्यबोधकनामद्वयनिष्ठं सामानाधिकरण्यमित्यर्थः, सप्तम्या आधेयत्वाभि-

टिप्पणी

१. जगद्ब्रह्मेत्याप्तोक्तिमाकर्णितवान् कश्चित् पृच्छत्याक्षिपति वाऽथेति। गच्छति व्याप्नोतीति जगदिति व्युत्पत्तिरपि नासम्भविनी, व्रजिगम्योः पर्यायत्वादित्यप्याक्षेप्तुराशयः। २. तयोः = व्रजघटयोः। ३. ब्रह्मोपादानकत्वेति। यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत् प्रयन्त्यभिसंविशन्तीत्यादिश्रुते,र्जन्माद्यस्य यत इति न्यायाच्चेति भावः। तत्तादात्म्यमेवेति। "सर्वं खल्विदम्ब्रह्म" "इदं सर्वं यदयमात्मा" "सदेव सोम्येदमग्र आसी"दित्यादिश्रुतिभ्य,स्तदनन्यत्वमारम्भणशब्दादिभ्य इति न्यायाच्चेति भावः। ४. तत्र = जगद्ब्रह्मेत्यत्र

## किञ्चिद्व्याख्या

धायकत्वात्। इदं रजतमित्यत्रेदमंश आधारः। तदुक्तं सिद्धान्तलेशसङ्ग्रहे—शुक्त्यंशोऽधिष्ठानमिदमंश आधारः, सविलासाज्ञानविषयोऽधिष्ठानमतद्रूपोऽपि तद्रूपेणारोप्यबुद्धौ स्फुरन्नाधार इति सङ्क्षेपशारीरके विवेचनादिति। [1]तत्रातद्रूपोऽपीत्यादि। वास्तवतत्तादात्म्यशून्योऽपि तत्तादात्म्येन [2]भ्रमे भासमान आधार इत्यर्थः। एवञ्च सतोदंरजतयोस्तादात्म्यबोधकमिदं रजतमिति नामद्वयमाधारारोप्ययोस्तादात्म्यबोधकमित्यतस्तन्निष्ठसामानाधिकरण्यमध्यासे सामानाधिकरण्यमित्युच्यते। बाधायामित्यत्र बाधापदेन बाध्यमानतादात्म्योपलक्षिताधिष्ठानबोधकनामद्वयमाख्यायते। ततश्च बाधायां सामानाधिकरण्यमित्यस्य तादृशनामद्वयगतं सामानाधिकरण्यमित्यर्थः। बाध्यमानत्वञ्च स्वनिष्ठाभावप्रतियोगितया ज्ञायमानत्वम्। स्वपदमधिष्ठानपरम्। उपलक्षितत्वञ्च तत्सम्बन्धोत्तरकालीनतद्विरहवत्त्वम्। स्थाणुः पुमानित्यत्र स्थाणुपदं स्थाणुत्वेनज्ञातार्थकम्। पुमानिति सावधारणम्। इत्थञ्च, यस्स्थाणुत्वेन ज्ञातस्स पुमानेव न स्थाणुरित्यर्थः। तथा च तद्वाक्यात् पुंरूपाधिष्ठानात्मके स्थाणुतया ज्ञाते स्थाणुतादात्म्याभावबोधेन तत्तादात्म्यमधिष्ठाननिष्ठाभावप्रतियोगितया ज्ञायमानत्वाद्बाध्यमानं भवति। अयं स्थाणुरिति भ्रमसमये स्थाणुतादात्म्यस्य पुंसि जातत्वात् प्रस्तुतदशायामभावाच्च तत्तादात्म्योपलक्षितं पुंरूपमधिष्ठानम्। एवञ्च बाध्यमानतादात्म्योपलक्षिताधिष्ठान-

टिप्पणी

१. तत्र = सिद्धान्तलेशसङ्ग्रहे। २. आरोप्यबुद्धावित्यस्य विवरणं भ्रम इति।

किञ्चिद्व्याख्या

बोधकं तन्नामद्वयमतस्तद्वृत्तिसामानाधिकरण्यम्बाधायां सामानाधिकरण्यमिति निर्दिश्यते । विशेषणविशेष्यभावपदेनो-[1]क्तादात्म्यभिन्नतादात्म्यबोधकनामद्वयस्योपादानाद्विशेषणविशेष्यभावे सामानाधिकरण्यमित्यस्य तदेयं सामानाधिकरण्यमित्यर्थः । नीलोत्पलयोस्तादात्म्यस्य गुणगुणिभावप्रयुक्तस्य समवायस्थाने लाघवेन भाट्टसाङ्ख्यपातञ्जलादिभिरुररीकृतस्य निरुक्ततादात्म्यव्यतिरिक्तत्वात्तत्तादात्म्यबोधकं नीलमुत्पलमिति नामद्वयमतस्तन्निष्ठसामानाधिकरण्यं विशेषणविशेष्यभावे सामानाधिकरण्यमिति कथ्यते । अभेद इत्यत्राभेदबोधकनामद्वयमभेदपदस्यार्थः । बोध्यमानश्चाभेद ऐक्यापरपर्यायः । स च शुद्धव्यक्तिरेव, [2]भेदभ्रमप्रतिबन्ध-

टिप्पणी

१. उक्ततादात्म्यभिन्नेति । आधारारोप्ययोस्तादात्म्यं, बाध्यमानतादात्म्यञ्चेत्येताभ्यामुपदर्शितरूपाभ्यामतिरिक्तेत्यर्थः । २. भेदभ्रमेति । शुद्धव्यक्त्योर्भेदभ्रमेत्यर्थः । ननु नाहमीश्वर इत्यादौ विशिष्टयोरेव विषयत्वाच्छुद्धयोर्भेदभ्रमोऽप्रसिद्ध एवेति कथं शुद्धव्यक्तेर्भेदविरोधित्वम् । न च जीवत्वोपलक्षितव्यक्तिनिष्ठ*निरवच्छिन्नविशेष्यतानिरूपितभेदत्वावच्छिन्नप्रकारतानिरूपितप्रतियोगित्वसम्बन्धावच्छिन्नेश्वरत्वोपलक्षितव्यक्तिनिष्ठ + निरवच्छिन्नप्रकारताको यत्र किञ्चिज्ज्ञत्वकिञ्चिच्छक्तित्वादिकॅंप्यत्र च सर्वज्ञत्वसर्वशक्तित्वादिकं, तत्ततोऽन्यादित्याकारकः प्रसिद्ध एव स इति वाच्यम्, तथापि तस्य भेदांशे निर्धर्मितावच्छेदकतया तं प्रति तदंशे कस्यचिदपि ज्ञानस्याप्रतिबन्धकत्वादिति चेन्न, प्रतियोगित्व-

* न अवच्छिन्ना निरवच्छिन्ना । नित्यसमासः । + निरवच्छिन्नेति । धर्मानवच्छिन्नेत्यर्थः ।

## किञ्चिद्व्याख्या

कज्ञानविषयत्वरूपभेदविरोधित्वात्तस्याः। तथा च शुद्धव्य-

टिप्पणी.

सम्बन्धावच्छिन्नधर्मानवच्छिन्नेश्वरत्वोपलक्षितव्यक्तिनिष्ठावच्छेदकताकभेदत्वावच्छिन्नविशेष्यतानिरूपिता या निरूपितत्वसम्बन्धावच्छिन्नधर्मानवच्छिन्नजीवत्वोपलक्षितव्यक्तिनिष्ठप्रकारतानिरूपिताधेयत्वत्वावच्छिन्नप्रकारता, तन्निरूपकस्य यत्र जीवत्वँय्यत्र चेश्वरत्वं, तत्र तद्भेद इति भ्रमस्य जागरितृत्वात्। अनुगमस्तु सुगमः। एवँय्यत्र ब्रह्मत्वँय्यत्र च सत्यत्वं, तत्र तद्भेद इत्याद्याकारकं ब्रह्मत्वसत्यत्वाद्युपलक्षितशुद्धव्यक्त्योर्भेदभ्रमं "सत्यञ्ज्ञानमनन्तम्ब्रह्म, विज्ञानमानन्दम्ब्रह्म" त्यादिस्थलीयस्तादृशशुद्धव्यक्तेर्बोधः प्रतिबध्नाति। न चेदृशस्यापि भेदभ्रमस्य शुद्धयोरत्यन्ताभेदाद्घटो न घट इतिवदाहार्यत्वेनाप्रतिबध्यत्वमेवेति वाच्यम्, भिन्नधर्मोपहितयोरिव भिन्नधर्मोपलक्षितयोरपि भेदज्ञानस्याहार्यत्वविरहात्। न हि यत्र तत्ता यत्र चेदन्ता, तयोरेकत्रापरभेद इति ज्ञानमाहार्यतया व्यवह्रियते। तस्माद्युज्यत एव भेदविरोधितया शुद्धव्यक्तेर × भेदपदास्पदतेत्य + द्वैतसुधारसिकैरवसेयम्। किन्तु

× अभेदपदेति। एक्यपदेत्यपि द्रष्टव्यम्। + द्वयोर्भावो द्विता। द्वितैव द्वैतम्, अणस्स्वार्थिकत्वात्। द्वैतस्याभावोऽद्वैतम् = एकमेवास्ति न द्वे इति सिद्धान्तः तद्रूपसुधायां रसिकैः। त्रैविध्ये तु सत्तायाः, पारमार्थिकसत्त्वमेकमेव न द्वे इति राद्धान्तः। अद्वैतमेव दर्शितँय्योगीन्द्रवन्द्यश्रीशुकाचार्यचरणैः—

सर्वेषामपि वस्तूनाम्भावार्थो भवति स्थितः।
तस्यापि भगवान् कृष्णः, किमतद्वस्तु रूप्यताम्॥

(श्री० भा० १०।१४।५७).

**किञ्चिद्व्याख्या**

क्तिसमर्पकनामद्वयगतं सामानाधिकरण्यमभेदे सामानाधिकरण्यन्नाम । तत्त्वमसीत्यत्र भागत्यागलक्षणयेश्वरत्वजीवत्वोप-

**टिप्पणी**

"ईश्वरानुग्रहादेव पुंसामद्वैतवासना ।
महाभयकृतत्राणा द्वित्राणामेव जायते" ॥

अद्वैतमतमहामणिस्तम्भसंस्थापकमत्तमतङ्गजपुङ्गवानाम्मूलकृतामियमुपासना प्रसिद्धा—अहङ्कृष्णः, कृष्णोऽहम्, सर्वमपि कृष्ण इति । तत्राहङ्कृष्ण इति भावनया जीवस्य शोकादिनिवृत्तिः, कृष्णोऽहमिति भावनया च कृष्णस्य पारोक्ष्यनिवृत्तिर्भवतीत्यतो व्यतिहारः । इत्थमनेन प्रकारेणापि—कृष्णस्याहमिति, मम कृष्ण इति च । तथा चोक्तम्—

तस्यैवाह,म्ममैवासौ, स एवाहमिति त्रिधा ।
भगवच्छरणत्वं स्यात् साधनाभ्यासपाकतः ॥ इति ।

कृष्णाभिन्नस्यापि स्वस्य कृष्णीयता समुचितदृष्टान्तमेव भगवत्पादैर्दर्शिता—

सत्यपि भेदापगमे नाथ तवाह,न मामकीनस्त्वम् ।
सामुद्रो हि तरङ्गः, क्वचन समुद्रो न तारङ्गः ॥ इति ।

द्वितीयतृतीये अपि भगवच्छरणत्वे "मामेकं शरणं व्रजे"तिशास्त्रार्थोपसंहारविवरणावसरे मूलकृत्कृतगूढार्थदीपिकयोदाहरणाभ्यां विवृते स्तः ।

"× वंशीविभूषितकरान्नवनीरदाभात्
पीताम्बरादरुणबिम्बफलाधरोष्ठात् ।
पूर्णेन्दुसुन्दरमुखादरविन्दनेत्रात्
कृष्णात् परङ्किमपि तत्त्वमहन्न जाने" ॥

"सकलमिद,महञ्च वासुदेवः"

× अद्वैतप्रसङ्गादेव लिखति ।

## किञ्चिद्व्याख्या

लक्षितशुद्धव्यक्तेरेव बोधात्तत्रत्यसामानाधिकरण्यमभेदे सामानाधिकरण्यमिति व्यपदिश्यते। सर्वञ्चेदमागमबाधोद्धारलघुचन्द्रिकायां स्पष्टम्। अथवाऽध्यस आधारारोप्ययोस्तादात्म्यं, बाधा बाध्यमानतादात्म्योपलक्षितमधिष्ठानं, विशेषणविशेष्यभावस्तादृशतादात्म्याभ्यामन्यत्तादात्म्यं, अभेदश्शुद्धव्यक्तिः। सर्वत्र सप्तम्या बोधकत्वमर्थः। इत्थञ्चाध्यासे सामानाधिकरण्यमित्यादेराधारारोप्ययोस्तादात्म्यबोधकं सामानाधिकरण्यमित्यादिरर्थः। इयमपि सरणिरनुसरति लघुचन्द्रिकाम्। सन् घट इत्यादेस्सद्रूपाधारघटाद्यारोप्ययोस्तादात्म्यबोधकत्वात्तत्स्थलीयसामानाधिकरण्यमध्यासे सामानाधिकरण्यम्भवति। अखण्डार्थवादे तु तस्यां प्रातीतिकतादात्म्यबोधकनामद्वयमध्यासो, व्यावहारिकतद्बोधकतद्द्वयं विशेषणविशेष्यभाव इति प्रतिपादितम्। तत्पक्षे सद्रूपघटाद्योस्तादात्म्यस्य व्यावहारिकत्वात्तद्बोधकमुक्तस्थलीयसामानाधिकरण्यं विशेषणविशेष्यभावे, न पुनरध्यास इत्यास्तां विस्तरः। तस्माद्रज्जुसर्पदर्प सर्पकतैव[1] जगति भवदुदितवाक्यतस्सिध्यति। अत एव ब्रह्मस्तुतौ

तस्मादिदञ्जगदशेषमसत्स्वरूपं
स्वप्नाभमस्तधिषणम्पुरुदुःखदुःखम्।
त्वय्येव नित्यसुखबोधतनावनन्ते
मायात उद्य,दपियत् सदिवावभाति॥ इति।

टिप्पणी

१ सर्पकेति। सृपॢ गतावित्यस्माण्ण्यन्ताण्ण्वुल्। मिथ्यात्वेन जडत्वेन भयङ्करत्वेन च रज्जुसर्पसदृशत्वं तलन्तपदस्यार्थः। भवदुदितवाक्यतो जगद्ब्रह्मेत्यतः।

## किञ्चिद्व्याख्या

व्रजस्तु जगतो विविच्य निरुच्यते श्रीस्कान्दादौ—

व्रजनं व्याप्तिरित्युक्त्या व्यापनाद्व्रज उच्यते।
गुणातीतम्परम्ब्रह्म व्यापकं व्रज उच्यते॥ इत्यादि।

साधनभूमिर्बदरी
[1] व्रजता कृष्णेन मन्त्रिणे प्रोक्ता।
तत्राऽऽस्ते स तु साक्षा-
त्तद्वयुनङ्ग्राहयँल्लोकान्॥
[2] फलभूमिर्व्रजभूमि-
र्दत्ता तस्मै पुरैव सरहस्यम्।
फलमिह [3] तिरोहितं स-
त्तदिहेदानीं स उद्धवोऽलक्ष्यः॥
गोवर्धनगिरिनिकटे
सखीस्थले तद्रजःकामः।
तत्रत्याङ्कुरवल्ली-
रूपेणाऽऽस्ते स उद्धवो नूनम्॥

इत्युपक्रम्याप्यनन्यसामान्यस्सुगोप्यो व्रजमहिमा तत्र

टिप्पणी

१ व्रजता = तिरोभवता। प्रोक्ता = गन्तव्यत्वेन सनिर्बन्धमुक्ता। निर्बन्धाभावे तु ताम्प्रत्युद्धवो न गच्छेत्। २ फलभूमिरित्यादि। व्रजभुवि सततमेव स्वरसतो निवसतोऽप्युद्धवस्य योगबलाद्बदरीगमनम- पदोक्तमविरुद्धम्, यथा— द्रोणो बृहस्पतेरंश इत्याद्युक्त्या बृहस्पतिप्रभृतयो द्रोणादिरूपेण धरणिमागतास्तद्वदिति भावः। ३ तिरोहितम् = तिरोभूतम्, कञ्जनाभस्तिरोदध इत्यादौ तिरोदधातेस्तिरोभावे बहुशः प्रयोगदर्शनात्। सदिति। भवतीति शेषः। तत् = तस्मात्।

## किञ्चिद्व्याख्या

लक्षितशुद्धव्यक्तेरेव बोधात्तत्रत्यसामानाधिकरण्यमभेदे सामानाधिकरण्यमिति व्यपदिश्यते। सर्वञ्चेदमागमबाधोद्धारलघुचन्द्रिकायां स्पष्टम्। अथवाऽध्यस आधारारोप्ययोस्तादात्म्यं, बाधा बाध्यमानतादात्म्योपलक्षितमधिष्ठानं, विशेषणविशेष्यभावस्ताद्रूप्यतादात्म्याभ्यामन्यत्तादात्म्यं, अभेदश्शुद्धव्यक्तिः। सर्वत्र सप्तम्या बोधकत्वमर्थः। इत्थञ्चाध्यासे सामानाधिकरण्यमित्यादेराधारारोप्ययोस्तादात्म्यबोधकं सामानाधिकरण्यमित्यादिरर्थः। इयमपि सरणिरनुसरति लघुचन्द्रिकाम्। सन् घट इत्यादेस्सद्रूपाधारघटाद्यारोप्ययोस्तादात्म्यबोधकत्वात्तत्स्थलीयसामानाधिकरण्यमध्यासे सामानाधिकरण्यम्भवति। अखण्डार्थवादे तु तस्यां प्रातीतिकतादात्म्यबोधकनामद्वयमध्यासो, व्यावहारिकतद्बोधकतद्द्वयं विशेषणविशेष्यभाव इति प्रतिपादितम्। तत्पक्षे सद्रूपघटाद्योस्तादात्म्यस्य व्यावहारिकत्वात्तद्बोधकमुक्तस्थलीयसामानाधिकरण्यं विशेषणविशेष्यभावे, न पुनरध्यास इत्यास्तां विस्तरः। तस्माद्रज्जुसर्पदर्प[१] सर्पकतैव जगति भवदुदितवाक्यतस्सिध्यति। अत एव ब्रह्मस्तुतौ

> तस्मादिदञ्जगदशेषमसत्स्वरूपं
> स्वप्नाभमस्तधिषणम्पुरुदुःखदुःखम्।
> त्वय्येव नित्यसुखबोधतनावनन्ते
> मायात उद्यदपि यत् सदिवावभाति॥ इति।

टिप्पणी

१ सर्पकेति। सृप्लृ गतावित्यस्माण्ण्यन्ताण्ण्वुल्। मिथ्यात्वेन जडत्वेन भयङ्करत्वेन च रज्जुसर्पसदृशत्वं तलन्तपदस्यार्थः। भवदुदितवाक्यतो जगद्ब्रह्मेत्यतः।

किञ्चिद्व्याख्या

व्रजस्तु जगतो विविच्य निरुच्यते श्रीस्कान्दादौ—

व्रजनं व्याप्तिरित्युक्त्या व्यापनाद्व्रज उच्यते ।
गुणातीतम्परम्ब्रह्म व्यापकं व्रज उच्यते ॥ इत्यादि ।

साधनभूमिर्बदरी
[1]व्रजता कृष्णेन मन्त्रिणे प्रोक्ता ।
तत्राऽऽस्ते स तु साक्षा-
त्तद्वयुनङ्ग्राहयँल्लोकान् ॥
[2]फलभूमिर्व्रजभूमि-
र्दत्ता तस्मै पुरैव सरहस्यम् ।
फलमिह [3]तिरोहितं स-
त्तदिहेदानीं स उद्धवोऽलक्ष्यः ॥
गोवर्धनगिरिनिकटे
सखीस्थले तद्रजःकामः ।
तत्रत्याङ्कुरवल्ली-
रूपेणाऽऽस्ते स उद्धवो नूनम् ॥

इत्युपक्रम्याप्यनन्यसामान्यस्सुगोप्यो व्रजमहिमा तत्र

टिप्पणी

१ व्रजता = तिरोभवता । प्रोक्ता = गन्तव्यत्वेन सनिर्बन्धमुक्ता । निर्बन्धाभावे तु ताम्प्रत्युद्धवो न गच्छेत् । २ फलभूमिरित्यादि । व्रजभुवि सततमेव स्वरसतो निवसतोऽप्युद्धवस्य योगबलाद्बदरीगमनम-पदोक्तमविरुद्धम् , यथा— द्रोणो बृहस्पतेरंश इत्याद्युक्ता बृहस्पतिप्रभृतयो द्रोणादिरूपेण धरणिमागतास्तद्वदिति भावः । ३ तिरोहितम् = तिरोभूतम् , कज्जनाभस्तिरोदध इत्यादौ तिरोदधातेस्तिरोभावे बहुशः प्रयोगदर्शनात् । सदिति । भवतीति शेषः । तत् = तस्मात् ।

### किञ्चिद्व्याख्या

वर्णितः । तथाभूते श्रीव्रजे या देव्यः=दीव्यन्ति क्रीडन्ति [1]अखण्डचिदानन्दघनेन, [2]निरुपधिकनिरवधिकनिरतिशयगुणनिकरसुखसदन–[3]नतजलदरुचिनिचयरुचिरतर–मृदुहसितपरिलसितमुखकमल–गतसदृश[4]नरकळेबरेण सह कामपि कामक्रीडामनियन्त्रितमादधति अतो दीव्यन्ति मोदन्ते [5]विगतसमतातिशयविषयानन्दब्रह्मानन्दाभ्याम्परस्परविरुद्धाभ्यामपि सम्मिळितङ्कमपि भक्त्यानन्दमुपलभन्ते अतो दीव्यन्ते स्तूयन्ते विधिभवप्रभृतिभिरपीतीत्थम्भूताश्श्रीवल्लवीतल्लजा [6]इत्येषा दिक्, तास्वपरिमितसङ्ख्यासु रतिचतुष्टयं स्पष्टँय्यथा तथा दृष्टश्च शास्त्रे । चकारेण पूर्ववाक्यार्थसमुच्चयः । व्रजस्य व्यापकत्वान्न देवीसङ्ख्याया अ-

टिप्पणी

१ घनीभूतपरिपूर्णचित्सुखरूपेणेत्यर्थः । २ वस्तुतस्तु प्रस्तुतनिस्तुलविग्रहरामणीयकं सुरगुरुभिरपि सुदुरूहमथापि श्रीदशमस्कन्धद्वात्रिंशाध्यायद्वितीयपद्येन स्वामिश्रीचरणविवृतचरमचरणेन किञ्चिदिव सङ्क्षिप्तम् । ३ नतजलदेति द्वितीयार्थे बहुव्रीहिः । नतजलदेन रुचिनिचयेन हेतुभूतेन रुचिरतरेत्येकं विशेषणम् । ४ नरकळेबरेण सहेति । अत एव

"अनादिमादिं सर्वेषान्नन्दगोपप्रियात्मजम् ।

श्रुतिमृग्यमजन्नित्यङ्गोपीजनमनोहरम् ॥

परन्धाम परं रूपन्द्विभुजङ्गोकुलेश्वरम् ।

भावये" इति श्रीपाद्मे स्वाम्यन्यै श्रीशिवोपदेशः ।

५ विगतेत्यादिकं विषयानन्दविशेषणम् । इतरसुदुर्लभेत्यर्थः । विषयानन्दो ब्रह्मानन्दश्च भुक्तिमुक्त्यानन्दपदाभ्यामपि व्यपदिश्येते । तेन, भुक्त्यानन्दो मुक्त्यानन्दो भक्त्यानन्द इति विभागस्यान्यत्र दृश्यमानस्य न विरोधः । ६ व्रजदेवीपदमविवृतमित्याहेत्येषा दिगिति ।

किञ्चिद्व्याख्या

परिमितत्वक्षतिः। देवीषु काश्चित् प्रतिपाद्यमानस्य परब्रह्मणो नितान्तकमनीयगोपरूपतामवलोक्य गोपीत्वमापन्नाश्श्रुतयः, अपरास्तदापन्ना ऋषयः, अन्या दैववशादेव गोप्य इत्या[1]दयो विशेषा नेह प्रपञ्च्यन्ते। कामक्रीडा च [2]तासामनिर्वचनीया नारायणीये दिङ्मात्रतया दर्शितप्राया—

केशपाशधृतपिञ्छिकाविततिसञ्चलन्मकरकुण्डलं
हारजालवनमालिकाललितमङ्गरागघनसौरभम्।
पीतचेलधृतकाञ्चिकाञ्चितमुदञ्चदंशुमणिनूपुरं
रासकेळिपरिभूषितन्तव हि रूपमीश कलयामहे॥ १॥
तावदेव कृतमण्डने कलितकञ्चुळीककुचमण्डले
गण्डलोलमणिकुण्डले युवतिमण्डलेऽथ परिमण्डले।
[3]अन्तरा सकलसुन्दरीयुगळमिन्दिरारमण सञ्चरन्
मञ्जुळान्तदनु रासकेळिमयि कञ्जनाभ समुपादधाः॥ २॥
वासुदेव तव भासमानमिह रासकेळिरससौरभन्दूरतोऽपि खलु नारदागदितमाकलय्य कुतुकाकुला।

टिप्पणी

१ श्रीराधाभिधा तु गोपी साक्षात् पराशक्तिरेवेत्येवमादिप्रपञ्चमन्तर्निधायाऽऽदिपदोपादानम्। २ तासाम्=व्रजदेवीनाम्। ३ अन्तरेत्यादि। अत एव गीयते—

अङ्गनामङ्गनामन्तरे माधवो
माधवम्माधवञ्चान्तरेणाङ्गना।
इत्थमाकल्पिते मण्डले मध्यगः
सञ्जगौ वेणुना देवकीनन्दनः॥

इति। इयांस्तु विशेषः—अङ्गनानाम्परस्परम्भेदेऽपि भगवतस्तदानीम्मायबाऽनेकतया भानमेव न तु भेद इति।

## किञ्चिद्व्याख्या

वेषभूषणविलासपेशलविलासिनीशतसमावृता
नाकतो युगपदागता वियति वेगतोऽथ सुरमण्डली ॥३॥

वेणुनादकृततानदानकळगानरागगतियोजना-
लोभनीयमृदुपादपातकृतताळमेळनमनोहरम् ।
पाणिसङ्क्वणितकङ्कणञ्च मुहुरंसलम्बितकराम्बुजं
श्रोणिबिम्बचलदम्बरम्भजत रासकेळिरसडम्बरम् ॥४॥

श्रद्धया विरचितानुगानकृततारतारमधुरस्वरे
नर्तनेऽथ ललिताङ्गहारलुळिताङ्गहारमणिभूषणे ।
सम्मदेन कृतपुष्पवर्षमलमुन्मिषद्द्विविषदाङ्कुल-
श्चिन्मये त्वयि निलीयमानमिव सम्मुमोह सवधूकुलम् ॥५॥

स्विन्नसन्नतनुवल्लरी तदनु कापि नाम पशुपाङ्गना
कान्तमंसमवलम्बते स्म तव तान्तिभारमुकुळेक्षणा ।
काचिदाचलितकुन्तळा नवपटीरसारनवसौरभं
वञ्चनेन तव सञ्चुचुम्ब भुजमञ्चितोरुपुळकाङ्कुरम् ॥ ६ ॥

कापि गण्डभुवि सन्निधाय निजगण्डमाकुलितकुण्डल-
म्पुण्यपूरनिधिरन्ववाप तव पूगचर्वितरसामृतम् ।
इन्दिराविहृतिमन्दिरम्भुवनसुन्दरं हि नटनान्तरे
त्वामवाप्य दधुरङ्गनाः किमु न सम्मदोन्मददशान्तरम् ॥७॥

गानमीश विरतक्रमेण किल वाद्यमेळनमुपारत-
म्ब्रह्मसम्मदरसाकुलास्सदसि केवलन्ननृतुरङ्गनाः ।
नाविदन्नपिच नीविकाङ्क्षिमपि कुन्तळीमपिच कञ्चुळी-
ञ्ज्योतिषामपि कदम्बकन्दिवि विळम्बितक्रिमपरम्भुवे ॥८॥

मोदसीम्नि भुवनं विलाप्य विहृतिं समाप्य च ततो विभो
केळिसम्मृदितनिर्मलाङ्गनवधर्मलेशसुभगात्मनाम् ।

### किञ्चिद्व्याख्या

मन्मथासहनचेतसाम्पशुपयोषितां सुकृतचोदित-
स्तावदाकलितमूर्तिरादधिथ मारवीरपरमोत्सवान् ॥ ९ ॥
केळिभेदपरिलोळिताभिरतिलाळिताभिरबलाळिभि-
स्स्वैरमीश ननु सूरजापयसि चारु नाम विहृतिं व्यधाः ।
काननेऽपिच विसारिशीतळकिशोरमारुतमनोहरे
सूनसौरभमये विलेसिथ विलासिनीशतविमोहनम् ॥१०॥
कामिनीरिति हि यामिनीषु खलु कामनीयकनिधे भवान्
पूर्णसम्मदरसार्णवङ्कमपि योगिगम्यमनुभावयन्[1] ।
ब्रह्मशङ्करमुखानपीह पशुपाङ्गनासु बहुमानयन्
भक्तलोकगमनीयरूप कमनीय कृष्ण परिपाहि माम् ॥११॥
इति ।

"एवम्भक्तिस्सकलभुवने नेक्षिता न श्रुता वा
किं शास्त्रौघैः किमिह तपसा [2]गोपिकाभ्यो नमोऽस्तु" ।

टिप्पणी

१ योगीत्यतिशायन इनिप्रयोगात् क्लेशातिशयसम्पादितयोगातिशयेनैव पुंसा लब्धुं शक्यमपीममिमा × बलादनुभावयन्नित्यर्थः । निरुक्तविषयसुख-ब्रह्मसुखार्णवाभ्यां समाश्लिष्टस्य भक्तिसुखमहासुधाम्बुधेः पुनराभिरनुभूयमानस्य वर्णनमतिदविष्ठमहिपतेरपीति भावः । २ गोपिकाभ्यो नमोऽस्त्विति ।

वन्दे नन्दव्रजस्त्रीणाम्पादरेणुमभीक्ष्णशः ।

इति श्रीमद्भागवतशास्त्रम् ।

---

× बलादिति । स्वयं व्यवस्थापितमपि साध्यसाधनभावसहस्रमविचिकित्समतिलङ्घ्येत्यर्थः । अत एव गदितम्भगवन्नामकौमुद्याम् — दुर्वारमदनमहाग्रहगृहीततया समुल्लङ्घितसकलसेतूनाङ्गोकुलकामिनीनाम्मुक्तिसुखमनिवारितं वितरतो गोपालशिरोमणेरिति । एतत्सूचनार्थमेव नारायणीये कामिनीरित्येवङ्कामिनीपदप्रयोगः ।

### किञ्चिद्व्याख्या

मूले तच्चित्तेति । तासाम् = श्रीनन्दनन्दनरतिचतुष्टयपरमरुचिरहृदयकमलानां व्रजदेवीनां यच्चित्तं तदालम्बनत्वेन = स्वचित्तस्य तद्विषयकत्वेन । स्वचित्तकरणकेन तत्कर्तृकेण वा तदनुस्मरणेनेति यावत् । स्वचित्तं तादृशम् = तत्समानधर्मकं भवेत् । हेतौ तृतीया, हेतुमति लिङ् । यथा श्रीमत्सहस्रनामस्तोत्रप्रक्रमे

स्तुवन्तः क,ङ्कमर्चन्तः प्राप्नुयुर्मानवाश्शुभम् ।

इत्यत्र शतृप्रत्ययो हेतौ, हेतुमति लिङ् । तत्रत्यविवरणं प्राक्तनकूटल्लूराढ्यविद्वद्विप्रवरविरचितं लिख्यते—"लक्षणहेत्वोरिति स्तौत्यर्चत्योर्हेतौ शतृ, हेतुहेतुमतोरिति प्राप्नोतेर्हेतुमति लिङ् । यद्यप्यत्र सूत्रे पूर्वग्रन्थेषु हेतुहेतुमतोस्सहैव लिङु[1]दाहियते तथाप्युपसंवादाशङ्कयोरिति सूत्रे 'यदि मे भवानिदङ्कुर्यादहमपि भवत इदन्दास्यामी'ति वृत्तिग्रन्थात्, 'कुर्यादिति हेतौ लिङ् । विभाषया तु लिङिति दास्यामीति लृ'डिति हरदत्तादिव्याख्यानाच्च [2]पर्यायेणापि लिङ् प्रयोक्तव्य इति प्रतीयते" इति । कारिकायां तादृशमिति तत्पदेन वृत्त्यर्थैकदेशस्यापि तच्चित्तस्य बुद्धया विच्छिद्य परामर्शः । कामजरतेश्चतुष्टयान्तर्गततया श्रीराधाचन्द्रावलीप्रभृतीनामेवेहोपादेयत्वाद्व्रजदेवीष्वित्येव कथितन्न तु व्रज[3]देवेष्विति

टिप्पणी

१ उदाहरणञ्च—हरिम्भजेच्चेत् सुखंम्प्याप्यादिति । चेत्पदमिह लिङोऽनेकार्थकस्य प्रकृतार्थे तात्पर्यग्राहकम् । इत्थं वृत्तिग्रन्थे 'यदी'त्यपि । २ पर्यायेणापि = असाहित्येनापि । इति प्रतीयत इति । पूर्वग्रन्थेषु सहोदाहरणन्तु लाघवायेति भावः । ३ देव्यश्च देवाश्च देवा इति विरूपैकशेषः ।

रसान्तरविभावादिसङ्कीर्णा भगवद्रतिः ।
चित्ररूपवदन्यादृग्रसताम्प्रतिपद्यते ॥७१॥

किञ्चिद्व्याख्या

श्रीनन्दादिसाधारणतया ।

"सौरभ्यसीम सकलाद्भुतकेळिसीम
सौभाग्यसीम तदिदं व्रजभाग्यसीम" । ॥ ७० ॥

[1]निरवद्यनिरुपमसुखसंविद्रूपभक्तिरसीभवननिपुणत्वावि-शेषेऽप्यत्र कीदृशी भगवद्रतिरस्माभिर्विशिष्य परिशीलयि-तव्येति विचिकित्सन्तं प्रति, "सोपाधिर्मिश्रितोदिते"ति पूर्व-निर्दिष्टा त्रिविधाऽपि चित्ररसतामाप्नोति, शुद्धा पुन-

"एतदन्तं हि शास्त्रेषु साधनाम्नानमिष्यते"
"अनुपाधिः परानन्दमहिमैकनिबन्धने"-

ति च सङ्कीर्तिता प्रथमहर्षजा सर्वोत्तमरसतामित्येतादृ-शङ्कमपि विशेषमाचष्टे—रसान्तरेति द्वाभ्याम् । रसान्तर-स्य=भक्तिरसभिन्नरसस्य विभावादिभिः = [2]तुळसीचन्दना-दिव्यतिरिक्तोद्दीपनविभावप्रभृतिभिस्सह सङ्कीर्णा = कथितैक-ज्ञानविषयत्वेन[3] सम्बद्धा भगवद्रतिः चित्ररूपवत् = चित्र-रूपमन्यादृग्रूपतामिव अन्यादृग्रसताम् = क्लृप्तरसेभ्योऽन्यप्रका-

टिप्पणी

१ निरवद्यत्वनिरुपमसुखसंविद्रूपत्वञ्च भक्तिरसविशेषणम् ।

२ "या दृष्टा निखिलाघसङ्घशमनी स्पृष्टा वपुष्पावनी
रोगाणामभिवन्दिता निरसनी सिक्ताऽन्तकत्रासिनी ।
प्रत्यासत्तिविधायिनी भगवतः कृष्णस्य संरोपिता
न्यस्ता तच्चरणे विमुक्तिफलदा, तस्यै तुळस्यै नमः" ॥

३ धान्येन धनवानितिवदभेदस्तृतीयार्थः ।

रसान्तरविभावादिराहित्ये तु स्वरूपभाक् ।
दशमीमेति रसतां सनकादेरिवाधिकाम् ॥७२॥
रतिर्देवादिविषया व्यभिचारी तथाऽञ्जितः ।
भावः प्रोक्तो रसो नेति यदुक्तं रसकोविदैः ॥७३॥

किञ्चिद्व्याख्या

रो यो रसश्चित्ररसाख्यस्तत्ताम्प्रतिपद्यते ॥ ७१ ॥

रसान्तरविभावादिभीराहित्ये = असङ्कीर्णत्वे सति तु भगवद्रतिः स्वरूपभाक् = शुद्धसात्त्विकीत्वात् स्वाभाविकमेव तत्ताद्रूप्यमाकारम्भजमाना सती सनकादेरिवाधिकाम् = सकलरसेभ्यश्श्रेष्ठां शृङ्गारादिनवरसापेक्षया दशमीं रसताम् = रसस्य भावं एति । अधिकत्वदशमत्वयोस्तलर्थविशेषणीभूते रसपदार्थे पर्यवसानादधिको दशमश्च यो रसस्तत्तामिति फलितम् । वस्तुतस्तु रसतानामेव रसान्तरगतानामधिकत्वदशमत्वे प्रत्यवधित्वं विवक्षितमतो न रसविशेषणत्वमन्तयोः । अत एव षट्षष्टितम्यां द्विधा पूर्वोक्तां रसतां यातीत्येव न तु द्विधा पूर्वोक्तो रसो भवतीति । शुद्धरतेर्व्रजदेवेषु स्पष्टतया दृष्टत्वेऽपि मिश्रितरतेरपि तेषु तथात्वात् सनकादेरेव शुद्धरतिमत्तया प्रसिद्धिरिति तस्य दृष्टान्तता ॥ ७२ ॥

[1] ननु रसाचार्यैर्भरतादिभिर्भगवद्रतेर्भावतैव न रसतेत्यु-

टिप्पणी

१. रतिर्देवादिविषयेत्यादिरसाचार्यवचनघटकदेवपदस्य देवदेवभगवत्साधारण्य × भ्रममूलकशङ्कानिरासकतया मूलमवतारयति—नन्विति ।

× तस्मिन्नपि तात्पर्यमस्तीति भ्रमेत्यर्थः ।

देवान्तरेषु जीवत्वात् परानन्दाप्रकाशनात्।
तद्योज्य,म्परमानन्दरूपे न परमात्मनि ॥७४॥

### किञ्चिद्व्याख्या

दितत्वात् कथमत्र तस्या रसतया कथनमित्याशङ्कां तदुक्त्याशयवर्णनेन निराकरोति—रतिरित्याद्याभिश्चतसृभिः। देवादिविषया रतिः, अञ्जितः = व्यञ्जितः = व्यञ्जनया प्रकाशितः व्यभिचारी = निर्वेदग्लान्यादिः तथा = च भावः प्रोक्तो रसो नेति रसकोविदैः = रसज्ञैर्यदुक्तं भवति, तत् [1] परमात्मनि = भगवति न योज्यम् = योजयितुमनर्हम्। एवमपि रसकोविदोक्तेर्नाप्रामाण्यप्रसङ्ग इत्याह—देवान्तरेषु तद्योज्यं। कुतः? परानन्दाप्रकाशनात् = तेषु विषये परमसुखास्फुरणात्। तदपि कुतः? तेषां जीवत्वात् = मलिनसत्त्वप्रधानाविद्योपाधिकत्वात्। परमात्मनि विषये परानन्दप्रकाशनन्दर्शयितुं तं विशिनष्टि—परमानन्दरूप इति। तत् [2] देवान्तरेषु जीवत्वात् परानन्दाप्रकाशनाद्योज्यम्, परमानन्दरूपे परमात्मनि तु न योज्यमिति कारिकान्वयः॥ ७३—७४॥

### टिप्पणी

१. परमात्मनि भगवतीति। यदुक्तम्प्रथमस्कन्धे—

वदन्ति तत्तत्त्वविदस्तत्त्वँय्यज्ज्ञानमद्वयम्।
ब्रह्मेति परमात्मेति भगवानिति शब्द्यते॥ इति।

किन्तु देवान्तरेषु जीवत्वोक्त्या तद्वैलक्षण्यमतिस्फुटयितुम्मूले परमात्मपदप्रयोगः। २. देवान्तरेष्वित्यस्य योज्यमित्यत्रान्वयोऽनुपदन्दर्शितः। जीवत्वादित्यस्य परानन्दाप्रकाशने।

कान्तादिविषया वा ये रत्याद्यास्तत्र नेदृशम् ।
रसत्वम्पुष्यते पूर्णसुखास्पर्शित्वकारणात् ॥ ७५ ॥
परिपूर्णरसा क्षुद्ररसेभ्यो भगवद्रतिः ।
खद्योतेभ्य इवाऽऽदित्यप्रभेव बलवत्तरा ॥ ७६ ॥

किञ्चिद्व्याख्या

प्रत्युत कान्तादिगोचररत्यादिष्वेव भगवद्गोचरेषु रसत्वस्य पूर्णत्वाभावः। भगवद्रतेस्तु पूर्णरसतैवेति सहेतुकं सदृष्टान्तञ्च दर्शयन् कल्पान्तरमाह—कान्तादिविषया वेति द्वाभ्याम्। वा = अथवा ये रत्याद्याः = रतिहासादयः कान्तादिविषयाः, तत्र = तेषु पूर्णसुखास्पर्शित्वकारणात् = पूर्णानन्दाव्यञ्जकत्वरूपहेतोः रसत्वं ईदृशम् = परमानन्दरूपभगवद्गोचररतिनिष्ठरसत्वपुष्टिसदृशं यथा तथा न पुष्यते ॥ ७५ ॥

परिपूर्णो रसः = सुखं यस्या हेतोः सा परिपूर्णरसा। परिपूर्णसुखाभिव्यञ्जिकेत्यर्थः। भगवद्रतिः आदित्यप्रभेव क्षुद्ररसेभ्यः = क्षुद्रसुखव्यञ्जकेभ्यः कान्तादिगोचररत्यादिभ्यः खद्योतेभ्य इव बलवत्तरा = अतिशयितकार्यक्षमताका। परिपूर्णरसीभवनकुशलतातिशयशालिनीत्यर्थः। [१]अनेकेवेयमुपमा। अत्र क्षुद्ररसेषु खद्योतै,र्भगवद्रतावादित्यप्रभया च सादृश्यं वाच्यवृत्त्यैव बोध्यते। इवस्यैकत्वे तु बिम्बप्रतिबिम्बभावमहिम्ना तद्गम्यमिति विशेषः ॥ ७६ ॥

टिप्पणी

१. अनेकौ इवौ = इवशब्दौ यस्यां साऽनेकेवा। एकेवोपमायां विशेषमाहेवस्यैकत्वे त्विति। बिम्बप्रतिबिम्बभावेति। वस्तुतो भिन्नयोरप्युपमानोपमेयधर्मयोः परस्परसादृश्यादभिन्नयोः = अभेदेनाध्यवसितयोः

क्रोधशोकभयादीनां साक्षात्सुखविरोधिनाम्।
रसत्वमभ्युपगतन्तथानुभवमात्रतः ॥ ७७ ॥
इहानुभवसिद्धोऽपि सहस्रगुणितो रसः।
जडेनेव त्वया कस्मादकस्मादपलप्यते ? ॥ ७८ ॥

इति श्रीपरमहंसपरिव्राजकाचार्यवर्य-विश्वविश्रुतसर्वतन्त्रस्वतन्त्रताक-श्रीमधुसूदनसरस्वतीयतिवरविरचिते श्रीभगवद्भक्तिरसायने भक्तिविशेषनिरूपणन्नाम द्वितीय उल्लासः।

किञ्चिद्व्याख्या

रसत्वानर्हेषु क्रोधशोकादिषु सुखहेतुत्वानुभवोऽस्तीति कृत्वा रसत्वाभ्युपगन्तुस्सर्वानुभवसिद्धापरिमितसुखसाधनीभूतभगवद्रतौ रसत्वापलापोऽनुचित इत्याह—क्रोधेत्यादि। येन (कर्त्रा) साक्षात्सुखविरोधिनां क्रोधशोकभयादीनां तथानुभवमात्रतः = रसत्वेनानुभवमेवावलम्ब्य न तु सुखहेतुत्वेनानुभवं, रसत्वमभ्युपगतं भवति, इह = भगवद्रतौ सहस्रञ्च ते गुणाः = आवृत्तयः "पेरुकम्" इति लौकिकभाषायाङ्ख्याताः च सहस्रगुणाः। सप्तर्षिशब्दवदनेकवद्भावो द्विगुः। तेऽस्य सञ्जाता इति सहस्रगुणितः। सहस्रस्य गुणानां समाहारस्सहस्रगुणमित्येकवद्भावो वा। तदस्य सञ्जातमिति तथा।

टिप्पणी

पृथगुपादानम्बिम्बप्रतिबिम्बभाव इत्यालङ्कारिकाः। तादृश उपमेयस्य धर्मो बिम्ब इत्युच्यते, प्रतिबिम्ब इत्युपमानस्य। प्रकृते च भगवद्रतिनिष्ठबलवत्तरत्वनिरूपितमवधित्वम्बिम्बम्, आदित्यप्रभागततन्निरूपितन्तत् प्रतिबिम्बम्। एवङ्क्षुद्ररसापेक्षया बलवत्तरत्वम्बिम्बम. खद्योतावधिकन्तत प्रतिबिम्बम्।

किञ्चिद्व्याख्या

यद्वा सहस्रेण गुणितः = आहतः "पेरुक्कप्पेट्टत्" इति तद्भाषायाम्। अपरिमित इति यावत्। रसः = सुखं अनुभवसिद्धस्सन्नपि तेन त्वया जळेनेव = जळबुद्धिनेव। विशेषज्ञानशून्येनेवेत्यर्थः। कस्माद्धेतोः अकस्मात् = कारणं विना रसत्वमपलप्यते = निह्नूयते ? तथा च निस्तुलसुखसमभिव्यञ्जिकायाम्भगवद्रतौ रसत्वन्दुरपह्नवमिति भावः। नन्वनपलप्यस्यापि भक्तिरसस्य कथं ब्रह्मास्वादसहोदररसान्तरादाधिक्यमुपवर्णितङ्घटत इति चेज्जानीहि—लोकसमतीतयोगिवरसाध्यब्रह्मास्वादतस्सुतरामल्पत्वादेव लौकिकरसस्य जाड्यविमिश्रितस्य लौकिकसुखचक्रवर्तित्वात् प्रशंसनार्थमलङ्कारग्रन्थेषु तत्साहोदर्योक्तिः। अपिच—

ब्रह्मास्वादो भवेदेष चेत् परार्धगुणीकृतः।
नैति भक्तिसुखाम्भोधेः परमाणुतुलामपि ॥

इति हरिभक्तिरसामृतसिन्धुः। निषेधस्थले प्रतियोगिप्रसक्तेरावश्यकत्वादुद्दिश्य ताङ्क्लिश्यते—परार्धगुणीकृतो भवेच्चेदिति ॥ ७७ ॥ ७८ ॥ मूले विश्वविश्रुतेति विवृतचरम्। अग्रेऽपि नैतद्विस्मरणीयम्।

मुरळीनादपीयूषपरिस्रावितगोकुले।
चिन्मये परमानन्दे रमतान्नितराम्मनः ॥

इति "पोल्पाक्करमनय्कत् अनुजन्नम्पूतिरिप्पाट्, दामोदरन्नम्पूतिरिप्पाट्" इति वा निगद्यमानेन [1]समस्तशास्त्र-

टिप्पणी

१. समस्तशास्त्रसमुपकारकेति। अत एव स्वग्रन्थस्योपादेयता-

किञ्चिद्व्याख्या

समुपकारकतर्कशास्त्रप्रभृतौ श्रीपरीक्षिदित्यपरनामविराजमान—महामहामहिम—श्रीरामवर्मनामधेय—गोश्रीमहाराज,-महामहोपाध्याय—भट्ट—श्रीगोदवर्मनामक —कोटिलिङ्गराज,-शाब्दिकतिलक— श्रीमदय्याशास्त्रिमहीसुरमहोदयादिशिष्येण वेदान्तितिलकबिरुदभाजा श्रीदामोदरशर्मणा विरचिता श्रीभगवद्भक्तिरसायनद्वितीयोल्लासस्य किञ्चिद्व्याख्या ।

॥ श्रीकृष्णार्पणमस्तु ॥

टिप्पणी

¹निवेदयितुम्

"नास्ति तर्के दृढाभ्यास इति चिन्त्यन्न पण्डितै"-

रिति शब्देन्दुशेखरोक्तः ।

निर्विकारपरब्रह्म नन्दजायास्तनन्धयम् ।

कोटिकन्दर्पलावण्यन्धाम श्यामळमाश्रये ॥

॥ श्रीकृष्णार्पणमस्तु ॥



# अथ तृतीय उल्लासः ।

ननु कोऽयं रसो नाम ? किन्निष्ठो वा भवेदसौ ? ।
अस्य प्रत्यायकः को वा ? प्रतीतिरपि कीदृशी ? ॥ १ ॥

किञ्चिद्व्याख्या

अपारकरुणामयी विपुलतापविध्वंसिनी
सुपीतवसनज्वलच्चिरविसारिसौदामनी ।
सदा परिलसन्मृदुस्मितरसामृतस्यन्दिनी
मरुत्पुरविराजिनी जयति कापि कादम्बिनी ॥

प्रथमद्वितीयोल्लासाभ्यां भगवद्भक्तिं सामान्येन विशेषेण च निरूप्य तत्स्थायिकभक्तिरसतात्पर्येण सामान्यतो रसस्य निरूपकं तृतीयोल्लासमारभमाणस्तस्य स्वरूपमाधारं प्रतीतिहेतुं प्रतीतिप्रकारञ्च पृच्छति—ननु कोऽयमिति । केचित् केवलसङ्कीर्णा इत्यारभ्य रससामान्यस्य पूर्वं विभागेन निरूपितत्वेऽपि [1] तद्विभागस्य तात्पर्येण स्थायिभावविभागत्वात्, स्वरूपादीनाञ्चतुर्णां रसीयानामधस्तादकलितत्वाच्च नैतदुल्लासेन पुनरुक्तिः । नन्वित्यामन्त्रणे = सम्बोधने = आचार्यम्प्रति शिष्यसम्बुद्धौ । ननु = भो आचार्याः रसो नाम = रस इति प्रसिद्धः अयम् = प्रस्तुतः पदार्थः स्वरूपेण कः ? । किंस्वरूप इत्यर्थः । असौ किन्निष्ठः = कस्मिन्निष्ठा यस्येति विग्रहात्

टिप्पणी

१ तद्विभागस्येत्यादि । केचित् केवलसङ्कीर्णानां रसानां स्थायिनः, केचित् सङ्कीर्णमिश्रितानां, केचित् केवलमिश्रितानां, केचिच्छुद्धानाञ्चेत्येवं स्थायिभावाश्चतुर्विधा इत्यत्रैव तद्विभागस्य तात्पर्यादित्यर्थः ।

विभावैरनुभावैश्च व्यभिचारिभिरप्युत।
स्थायिभावस्सुखत्वेन व्यज्यमानो रसस्स्मृतः॥ २॥

किञ्चिद्व्याख्या

किमाधारः वा भवेत्? वेति पादपूरणे वितर्के वा, वा स्याद्विकल्पोपमयोर्वितर्के पादपूरण इति मेदिन्युक्तेः। एवमग्रेऽपि। अस्य प्रत्यायकः=प्रतीतेर्जनकः को वा? अस्य प्रतीतिरपि कीदृशी=किम्प्रकारा? प्रतीतिप्रकारोऽपि क इत्यर्थः। अपिना स्वरूपाधारप्रत्यायकास्समुच्चिताः॥ १॥

प्रथमोल्लासनवमकारिकाविवरणभणितमर्यादारीत्या प्रथमप्रश्नस्योत्तरमाह—विभावैरिति। विभावैः अनुभावैश्च व्यभिचारिभिरप्युत सुखत्वेन व्यज्यमानः=व्यञ्जनया बोध्यमानः स्थायिभावः रसस्स्मृतः। भरतादिभिः रसाचार्यैरिति शेषः। व्यभिचारिणामतिस्फुटतया व्यञ्जकत्वेन विशेषन्द्योतयितुम्पृथगपिशब्दप्रयोगः। उतेति पादपूरणे। यद्वा समुच्चय एव, द्योतकयोर्मेळनस्य दृष्टत्वात्। [1]स्थायिनं विभावयन्ति=रसास्वादाङ्कुरयोग्यतान्नयन्तीति विभावाः। तमनुभावयन्ति = प्रकटीकुर्वन्तीत्यनुभावाः। कार्याणि हि रोमाञ्चादीनि स्वकारणमाधिक्येन व्यञ्जयन्ति। विशेषेण= [2]पोषकतया अभितः=सर्वाङ्गेषु=सर्वाङ्गव्यापितया काव्ये

टिप्पणी

१ अलौकिकानां विभावानुभावव्यभिचारिशब्दानाम्मूलगतार्थंयोगम्दर्शयति—स्थायिनमित्यादि। रसास्वादाङ्कुरेति। ईषदास्वादेत्यर्थः।
२. पोषणं स्थायिनः कार्यसमर्थीकरणम्। व्यभिचरन्तीति प्रसिद्धकल्पे तु मुहुर्मुहुरभिव्यञ्जनमेव तस्य पोषणम्।

## किञ्चिद्व्याख्या

तञ्चारयन्ति=मुहुर्मुहुरभिव्यञ्जयन्ति, विशेषेण आभिमुख्ये-न=कटाक्षादिकार्यजनन आनुकूल्येन तम्प्रति चरन्ति न तु तिष्ठन्तीति वा व्यभिचारिणः। [1]तदुक्तम्—

विशेषादाभिमुख्येन चरन्तो व्यभिचारिणः।
स्थायिन्युन्मग्ननिर्मग्नाः कल्लोला इव वारिधौ॥ इति।

स्थायिनि समुद्रप्राये उन्मग्ना उद्गताः निर्मग्ना निलीनाः। [2]अत एवानियतत्वादपि व्यभिचारिण इति ज्ञेयम्। [3]अत एवोक्तम्—

ये तूपकर्तुमायान्ति स्थायिनं रसमुत्तमम्।
उपकृत्य च गच्छन्ति, ते मता व्यभिचारिणः॥ इति।

एवञ्च विभावैरीषद[4]भिव्यक्तिः अनुभावैस्फुटा व्यभिचारिभिस्फुटतरेति समुदयजन्याभिव्यक्तिरेव रसत्वापादिका॥ २॥

### टिप्पणी

१ तदुक्तमिति। विशेषेणाऽऽभिमुख्येन चरणमुक्तमित्यर्थः। विशेषादित्यादि। इदमुपलक्षणम्।

वीत्यभीत्युपसर्गौ द्वौ विशेषाभिमुखार्थयोः।
विशेषेणाऽऽभिमुख्येन चरन्ति स्थायिनम्प्रति॥
उन्मज्जन्तो निमज्जन्तस्थायिन्यम्बुनिधाविव।
ऊर्मिवद्वर्धयन्त्येनँय्यान्ति तद्रूपताञ्च ते॥

इत्यपि द्रष्टव्यम्। २ अत एव=उन्मग्ननिर्मग्नत्वादेव। ३ अत एव=अनियतत्वादेव। ४ अभिव्यक्तिरिति। सुखत्वेन स्थायिनो व्यक्तिरित्यर्थः। अत एव मूले सुखत्वेन व्यज्यमानस्य स्थायिभावस्य रसत्वमुक्तम्।

सुखस्यात्मस्वरूपत्वात्तस्याधारो न विद्यते ।
तद्व्यञ्जिकाया वृत्तेस्तु सामाजिकमनो भवेत् ॥ ३ ॥

काव्यार्थनिष्ठा रत्याद्यास्थायिनस्सन्ति लौकिकाः ।
तद्बोद्धृनिष्ठास्त्वपरे तत्समा अप्यलौकिकाः ॥ ४ ॥

### किञ्चिद्व्याख्या

आधारप्रश्नस्य प्रतिवचनं—सुखस्येति । सिद्धान्ततया सुखं, पक्षान्तरतया तद्व्यञ्जकमनोवृत्तिश्च रसत्वेन वक्ष्यते । तत्र सिद्धान्ताभिप्रायकमत्र प्रथमार्धम् । परपक्षपरमपरार्धम् । सुखस्यात्मस्वरूपत्वात् तस्याधारो न विद्यते । तद्व्यञ्जिकाया वृत्तेस्तु सामाजिकानाम् = नाट्यद्रष्टृसभ्यानां मनः आधारो भवेत् । सामाजिकपदेन काव्यश्रोतारोऽप्युपलक्षिताः । एवमग्रेऽपि ॥ ३ ॥

ननु रसाधारप्रश्ने सुखस्याधारासत्त्वकथनं, तद्व्यञ्जकवृत्तिं प्रति मनस आधारत्वोक्तिश्चाऽऽम्रान् पृष्टः कोविदारानाचष्ट इति न्यायमनुकरोतीत्यविज्ञाताभिसन्धेश्शङ्कां व्युदसितुं विभावादित्रितयसंसृष्टस्थायिभावावगाहिसमूहालम्बनात्मकसात्त्विकमत्यभिव्यक्तसुखस्य सिद्धान्तत्वेन, तादृशामतेः परमतरीत्या च रसतां प्रतिपादयिष्यंस्तदुपयोगितया, प्रथमप्रश्नोत्तरश्रवणाज्जिज्ञासितत्वेन च स्थायिभावादिचतुष्टयन्दर्शयंस्तदधीनसुखाभिव्यक्तिप्रकारमाह—काव्यार्थनिष्ठा इति नवकेन । तत्राद्यकारिकया स्थायिभूतानां रतिहासादीनामाश्रयभेदेन द्वैविध्यमाह—काव्यस्यार्थः = तत्प्रतिपाद्यो

बोध्यनिष्ठा यथास्वन्ते सुखदुःखादिहेतवः ।
बोद्धृनिष्ठास्तु सर्वेऽपि सुखमात्रैकहेतवः ॥ ५ ॥
अतो न करुणादीनां रसत्वम्प्रतिहन्यते ।
भावानाम्बोद्धृनिष्ठानान्दुःखाहेतुत्वनिश्चयात् ॥ ६ ॥

किञ्चिद्व्याख्या

नायकादिः । [1]काव्येति नाट्यस्याप्युपलक्षणम् । तदर्थः = [2]अनुकार्यो दुष्यन्तादिः तन्निष्ठाः स्थायिनो रत्याद्याः लौकिकाः = लोकप्रसिद्धास्सन्ति । तद्बोद्धृनिष्ठाः अपरे रत्याद्यास्तु समानविषयकत्वादिना तत्समा अप्यलौकिका भवन्ति । तत्पदेनादिमेन काव्यार्थस्यान्तिमेन तन्निष्ठलौकिकरत्यादीनाञ्च परामर्शः ॥ ४ ॥

लौकिकालौकिकानां रत्यादीनाङ्कार्यभेदन्दर्शयति — बोध्यनिष्ठा इति । बोध्यः = काव्यार्थः तन्निष्ठास्ते = रत्यादयः यथास्वम् = यथायोग्यं सुखदुःखादिहेतवः । बोद्धृनिष्ठास्सर्वेऽपि ते तु सुखमात्रैकहेतवः । मात्रैकपदयोः प्रत्येकन्तत्तदर्थान्तरसाधारण्यात् स्पष्टार्थमुभयोपादानम् ॥ ५ ॥

[3]अलौकिकभावानान्तथात्वेन फलितमर्थम्प्रकटयति — अत इति । अत इत्यस्यैव विवरणमुत्तरार्धम् । अतः = बोद्धृनिष्ठानाम्भावानान्दुःखाहेतुत्वनिश्चयात् करुणादीनां रस-

टिप्पणी

१ काव्येतीति । एवमुपरिष्टादपि द्रष्टव्यम् । २ अनुकार्यः = अभिनेयः । ३ अलौकिकभावानां यत् तथात्वम् = सुखमात्रैकहेतुत्वं तेन हेतुना फलितम् ।

तत्र लौकिकरत्यादेः कारणं लौकिकन्तु यत् ।
काव्योपदर्शितन्तत्तु विभाव इति कथ्यते ॥ ७ ॥
लौकिकस्यैव रत्यादेर्लोके यत् कार्यमीक्षितम् ।
काव्योपदर्शितन्तत्स्यादनुभावपदास्पदम् ॥ ८ ॥
लौकिकस्यैव रत्यादेर्ये भावास्सहकारिणः ।
काव्योपदर्शितास्ते तु कथ्यन्ते व्यभिचारिणः ॥ ९ ॥

किञ्चिद्व्याख्या

त्वञ्च प्रतिहन्यते=प्रतिहतिञ्च प्राप्नोति । कर्मकर्तरि लकारः ॥ ६ ॥

"गळसीमलसच्चारुतुळसीदामभूषणम् ।
व्रजसीमन्तिनीपुण्यमतसीमेचकम्भजे" ॥

स्थायिभावन्दर्शयित्वा विभावानुभावव्यभिचारिभावान् क्रमतो दर्शयति—तत्रेति त्रयेण । तत्र=तयोर्लौकिकालौकिकरत्याद्योर्मध्ये लौकिकरत्यादेः लौकिकङ्कारणन्तु यत्, काव्योपदर्शितन्तत्तु=तदेव विभाव इति कथ्यते । रसशास्त्रकारैरिति शेषः ॥ ७ ॥

लोके लौकिकस्यैव रत्यादेर्यत् कार्यमीक्षितम्भवति, काव्योपदर्शितन्तद् अनुभावपदास्पदं स्यात् ॥ ८ ॥

ये भावाः=चित्तवृत्तयो निर्वेदादिरूपाः लौकिकस्यैव रत्यादेस्सहकारिणः=तद्भिन्नास्तत्कार्यकारकाः, काव्योपदर्शितास्ते तु व्यभिचारिणः कथ्यन्ते ॥ ९ ॥

अलौकिकस्य रत्यादेस्सामाजिकनिवासिनः ।
उद्बोधे कारणञ्ज्ञेयन्त्रयमेतत् समुच्चितम् ॥ १० ॥

ज्ञातस्वपरसम्बन्धादन्यं साधारणात्मना ।
अलौकिकम्बोधयन्ति भावम्भावास्त्रयोऽप्यमी ॥११॥

भावत्रितयसंसृष्टस्थायिभावावगाहिनी ।
समूहालम्बनात्मैका जायते सात्त्विकी मतिः ॥ १२ ॥

किञ्चिद्व्याख्या

मिळितस्य विभावादित्रयस्यालौकिकरत्याद्युद्बोधकत्वमाह—अलौकिकस्येति । सामाजिकनिवासिनः अत एवालौकिकस्य रत्यादेरुद्बोधे=लौकिकाद्विविच्य बोधे एतत्त्रयं समुच्चितम्=मिळितं सत् कारणं ज्ञेयम् ॥ १० ॥

उद्बोधनप्रकारमेवाह—ज्ञातेति । अमी मिळितास्त्रयो भावा अप्यलौकिकं भावं ज्ञातस्वपरसम्बन्धाद्भावादन्यं सन्तं साधारणात्मना=सामान्यतः पुरुषनिष्ठस्त्रीगोचररतित्वादिरूपेण बोधयन्ति । ज्ञातः स्वपरयोः=दुष्यन्तशकुन्तळाद्योः=दुष्यन्तत्वशकुन्तळात्वादिरूपविशेषधर्मावच्छिन्नयोः सम्बन्ध आधेयत्वमयो विषयित्वलक्षणश्च यस्मिंस्तस्माद्भावाल्लौकिकादन्यादृशत्वेन बोधस्य प्रकार एव साधारणात्मनेत्यनेन दर्शितः । स्वपदस्यात्मीयार्थकत्वाल्लौकिकभावाश्रयीभूतदुष्यन्तादिग्राहकत्वम् ॥ ११ ॥

विभावादित्रयमिळितस्थायिभावगोचरा समूहालम्बनात्मिकोद्रिक्तसत्त्वमयी काचन मनोवृत्तिरुदेतीत्याह—भावत्रि-

साऽनन्तरक्षणेऽवश्यं व्यनक्ति सुखमुत्तमम् ।
तद्रसः, केचिदाचार्यास्तामेव तु रसं विदुः ॥ १३ ॥

तेषाम्प्रत्येकविज्ञानङ्कारणत्वेन तैर्मतम् ।
स्थायिभावो रस इति प्रयोगस्तूपचारतः ॥ १४ ॥

### किञ्चिद्व्याख्या

तयेति । भावत्रितयसंसृष्टस्थायिभावावगाहिनी समूहालम्बनात्मा सात्त्विक्येका मतिर्जायते । पानकरसास्वादस्थल इवेति भावः । विभावादित्रितयसंसृष्टता च स्थायिभावस्य त्रितयेन सहैकज्ञानविषयीभवनपूर्वकैकचमत्कृत्याधायकता ॥ १२ ॥

उक्तमत्याऽभिव्यक्तस्य सुखस्य सिद्धान्ततया रसत्वं, तस्या एव तत्त्वं मतान्तरतया चाचष्टे—सेति । सा अनन्तरक्षणे = अव्यवहितोत्तरक्षणे उत्तमं सुखं अवश्यं व्यनक्ति = व्यञ्जनया बोधयति । तत् रसो भवति । केचिदाचार्यास्तु तामेव रसं विदुः ॥ १३ ॥

सुखस्य रसत्वमते मतेरेव तस्या रसस्वरूपव्यञ्जकता, तस्या एव रसत्वे तु तद्ग्रथनकमाह—तेषामित्यर्धेन । तैः = केचित्कारैः तेषाम् = विभावानुभावव्यभिचारिभावस्थायिभावानां प्रत्येकविज्ञानं कारणत्वेन = रसस्वरूपाभिव्यक्तौ हेतुत्वेन मतम् = स्वीकृतम्भवति । उक्तमतद्वयेऽपि पूर्वोक्तिविरोधम्परिहरति—स्थायीति । स्थायिभावो रस इति प्रयोगस्तु उपचारतः = उपचारहेतुकः । उपचारो लक्षणा ॥ १४ ॥

एवमव्यवधानेन क्रमो यस्मान्न लक्ष्यते ।
असल्लँक्ष्यक्रमव्यङ्ग्यन्ध्वनिन्तस्मादिमं विदुः ॥ १५ ॥

व्यवधानात् क्रमो लक्ष्यो वस्त्वलङ्कारयोर्ध्वनौ ।
लक्ष्यव्यङ्ग्यक्रमन्तस्माद्ध्वनिमेतम्प्रचक्षते ॥ १६ ॥

## किञ्चिद्व्याख्या

प्रसङ्गात् रसव्यञ्जकस्योक्तमत्या[1]देरसल्लँक्ष्यक्रमव्यङ्ग्यध्वनित्वेन व्यवहारमुपपादयति—एवमिति । यस्मात् एवं यद्-व्यवधानम्=उक्तमत्यादेरसाभिव्यक्तेश्च व्यवधानाभावस्तेन हेतुना क्रमः=तयोः पौर्वापर्यं न लक्ष्यते किन्तु केवलमनुमीयते, तस्मात् इमम्=उक्तमत्यादिं असल्लँक्ष्यः=सल्लँक्षयितुमशक्यः क्रमः=उक्तमत्याद्युत्तरोत्पत्तिकाभिव्यक्तिकता यस्य रसस्य सोऽसल्लँक्ष्यक्रमः स व्यङ्ग्यो येन सोऽसल्लँक्ष्यक्रमव्यङ्ग्यः तन्ध्वनिं विदुः । असल्लँक्ष्यक्रमव्यङ्ग्यो ध्वनिरिति ध्वनिविदो विदुरित्यर्थः ॥ १५ ॥

ध्वनिप्रसङ्गात् सल्लँक्ष्यक्रमव्यङ्ग्यध्वनिन्दर्शयति—व्यवधानादिति । यस्मादित्यादिः । यस्मात् वस्त्वलङ्कारयोर्ध्वनौ विषये व्यवधानात् क्रमः=तयोरभिव्यञ्जकस्य चाभिव्यक्तेश्च पौर्वापर्यं लक्ष्यः=स्फुटसंवेद्यः, तस्मात् एतन्ध्वनिं लक्ष्यो व्यङ्ग्यस्य क्रमो यस्मिन् स तथा तम् । सल्लँक्ष्यक्रमव्यङ्ग्यमित्यर्थः । प्रचक्षते=वदन्ति ॥ १६ ॥

### टिप्पणी

१ केचित्कारमते यत् विभावानुभावव्यभिचारिभावस्थायिभावानां प्रत्येकविज्ञानमनन्तरक्षणे रसं व्यनक्ति, तत्सद्भावक्रमादिपदम् । एवमग्रेऽपि ।

रसभावतदाभासभावशान्त्यादिरक्रमः ।
अनन्तरक्षणे यस्माद्व्यज्यतेऽवश्यमेव सः ॥ १७ ॥
श्रुतिदुष्टादयो दोषा ये रसप्रतिबन्धकाः ।
तदभावोऽपि सामग्र्यान्निविष्टोऽनिष्टहानिकृत् ॥ १८ ॥
या रीतयो ये च गुणास्तज्ज्ञानमपि कारणम् ।
अलङ्काराश्च विज्ञाता भवन्ति परिपोषकाः ॥ १९ ॥

किञ्चिद्व्याख्या

न परं रसात्मकव्यङ्ग्यस्यैवासल्लँक्ष्यक्रमत्वं अपितु स्थाय्यादिरूपव्यङ्ग्यानामपीत्याह—रसेति । रसश्च भावश्च तदाभासौ च भावशान्तिश्चादयो यस्य समुदायस्य स तथा । आदिना भावोदयो भावसन्धिर्भावशबलता च । अक्रमः = क्रमरहितः । असल्लँक्ष्यक्रम इति यावत् । यस्मात् सः = रसभावादिः अनन्तरक्षण एव = तत्तद्व्यञ्जकाव्यवहितोत्तरक्षण एवावश्यं व्यज्यते । स्थायिनि रसपदस्यैव प्रयुक्तत्वाच्चतुर्दशकारिकायाङ्कथितस्योपचारस्य लक्षणावृत्तिरूपस्य निरूढता दृढीकृता ॥ १७ ॥

तृतीयप्रश्नोत्तरतया गुणादिविशिष्टशब्दस्य रसप्रतीतिसामग्रीभावमभिधास्यन् सामग्रीकोटौ तत्प्रतीतिप्रतिबन्धकदोषाभावोऽपि निवेशनीय इत्याह—श्रुतिदुष्टेति । श्रुतिदुष्टादयो ये दोषा रसस्य = तत्प्रतीतेः प्रतिबन्धकाः, तदभावोऽपि तस्यास्सामग्र्यान्निविष्टस्सन्ननिष्टहानिकृत् । निवेशनस्य विधेयतयोक्त्या तस्यानिष्टहानिकृत्त्वं पर्यवस्यति । अनिष्टश्चेहान्वयव्यभिचाररूपम् ॥ १८ ॥

रसप्रत्यायने शब्दस्य सहकारिणो भावरूपान्दर्शयति—

गुणालङ्काररीतीनाम्भावानाञ्च निवेदकः ।
तस्य प्रत्यायकश्शब्दो वृत्त्या व्यञ्जनरूपया ॥ २० ॥
वृत्तिः कार्याऽपरोक्षाऽस्य शब्दस्य सुखगर्भिणी ।
दशमस्त्वमसीत्यादिवाक्योत्थमतिशक्तिवत् ॥ २१ ॥

किञ्चिद्व्याख्या

या रीतय इति । या रीतयः = वैदर्भीगौडीपाञ्चाल्यः ये गुणाः = माधुर्यप्रसादादयश्च सन्ति तज्ज्ञानमपि रसप्रतीतेः कारणम् । अलङ्काराश्चानुप्रासादय उपमामुखाश्च विज्ञातास्सन्तः परिपोषकाः = स्फुटतया रसव्यञ्जका भवन्ति ॥ १९ ॥

अस्य प्रत्यायकः को वेति तृतीयप्रश्नमुत्तरयति—गुणेति । गुणालङ्काररीतीनां, भावानाम् = विभावानुभावव्यभिचारिभावस्थायिभावानाञ्च निवेदकः = बोधकः । दोषरहित इत्यपि ज्ञेयम् । तच्च निवेश्यतया निवेदितचरत्वादिह नोदितम् । तथाविधश्शब्दः व्यञ्जनरूपया वृत्या तस्य प्रत्यायकः । रसविषयकवैयञ्जनिकप्रत्ययजनक इत्यर्थः । इदञ्च काव्यस्थले, नाट्यस्थले तु नाट्यस्यैव रसप्रत्यायकत्वमवगन्तव्यम् ॥ २० ॥

ननु रसस्वरूपभूतसुखव्यक्तेश्शाब्दत्वे कथमनुभवसिद्धमपरोक्षत्वमित्याशङ्क्य दृष्टान्तेन तदुपपादयति—वृत्तिरिति । सुखगर्भिणी = सुखमेव गर्भस्सुखगर्भस्तद्वती । सुखविषयिकेत्यर्थः । अभेदार्थकतृतीयाघटितस्सुखेन गर्भिणीति तु विग्रहस्समासासम्भवान्न सम्भवति । न कर्मधारयान्मत्वर्थीयो बहुव्रीहिश्चेत्तदर्थप्रतिपत्तिकर इति पुनः [1] प्रायिकम् । अस्य = र-

टिप्पणी

१ प्रायिकमिति । भूमादेरपि क्वचिन्मत्वर्थीयार्थत्वादिति भावः । प्र-

नित्यं सुखमभिव्यक्तं "रसो वै स" इति श्रुतेः ।
प्रतीतिस्स्वप्रकाशस्य निर्विकल्पसुखात्मिका ॥ २२ ॥
कार्यज्ञाप्यादिवैधर्म्यं यत्तु कैश्चिन्निरूपितम् ।
तदप्येतेन मार्गेण योज्यं शास्त्राविरोधतः ॥ २३ ॥

किञ्चिद्व्याख्या

सप्रत्यायकस्य शब्दस्य कार्या वृत्तिः दशमस्त्वमसीत्यादि-वाक्योत्थमतिवृत्तिवदपरोक्षा ॥ २१ ॥

प्रतीतिरपि कीदृशीति चरमप्रश्नस्योत्तरं सोपपत्तिक-माह—नित्यमिति । यत् सुखं "रसो वै स" इति श्रुतेः=आत्मनो रसपदवाच्यसुखस्य चाभेदनिवेदकवेदाद्धेतोः अहमाकारेण नित्यमभिव्यक्तं भवति, स्वप्रकाशस्य तस्या-परोक्षवृत्तिरूपा काव्यजन्या वैयञ्जनिकी प्रतीतिः निर्विकल्प-सुखात्मिका=निर्गतो विकल्पो विविधकल्पना यस्मात्ताहृ-शानन्दरूपा ॥ २२ ॥

घटादिरूपं यत् दण्डादिकार्यं यच्च वह्न्यादिलक्षणं धूमा-दिज्ञाप्यं तदादितो रसस्य वैलक्षण्यं पूर्वाचार्या निरूपित-वन्तः । तदपि नास्माकं प्रतिकूलमित्याह—कार्येति । कैश्चित्तु रसस्य यत् कार्यज्ञाप्यादिवैधर्म्यंनिरूपितमस्ति तदपि शा-स्त्राविरोधतः=शास्त्राविरोधं सम्पाद्य एतेन मार्गेण नित्यस्वप्रकाशात्मरूपत्वाभ्युपगमरूपेण योज्यम्=योजयितुं शक्यम् ॥ २३ ॥

टिप्पणी

कृते च सुखरूपस्य विषयस्य प्राशस्त्यमतिशयितत्वं वा विवक्षितम् ।

परमानन्द आत्मैव रस इत्याहुरागमाः ।
शब्दतस्तदभिव्यक्तिप्रकारोऽयम्प्रदर्शितः ॥ २४ ॥
अर्थवादाधिकरणे, वनशैलादिवर्णनम् ।
श्रोतॄणां सुखमात्रार्थमिति भट्टैरुदाहृतम् ॥ २५ ॥
कार्यान्वितत्ववादेऽपि न विरोधोऽस्ति कश्चन ।
यस्मात् कृतीप्सितत्वेन कार्यं सुखमपीष्यते ॥ २६ ॥

किञ्चिद्व्याख्या

सिद्धान्ततया प्रतिपादितस्य सुखरूपरसस्य शब्दादभिव्यक्तेः प्रकारमुपसंहरति—परमेति । परमानन्द आत्मैव रसः इति आगमाः "रसो वै सः, रसं ह्येवायं लब्ध्वाऽऽनन्दी भवती"त्यादिरूपाः आहुः । शब्दतो या तस्याभिव्यक्तिस्तस्याः प्रकारः अयं प्रदर्शितः ॥ २४ ॥

शब्दस्य सुखाभिव्यञ्जकत्वं नास्माकमेव मते अपितु पूर्वतन्त्रवार्तिककृद्भिः कुमारिलभट्टैरप्यङ्गीकृतमित्याह—अर्थेति । काव्यादाविति शेषः । काव्यादौ वनशैलादिवर्णनं श्रोतॄणां सुखमात्रार्थम् = सुखैकप्रयोजनकं इति भट्टैः प्रथमाध्याये द्वितीयपादे प्राथमिकेऽर्थवादाधिकरण उदाहृतमस्ति । मात्रपदेन प्रवृत्तिनिवृत्त्योर्व्यावृत्तिः ॥ २५ ॥

कार्यान्वित एवार्थे पदानां शक्तिरिति गुरुमतस्यापि नास्मासु प्रातिकूल्यमित्याह—कार्येति । कार्यान्वितत्ववादेऽपि = उक्तमतेऽपि कश्चन विरोधो नास्ति, यस्मात् कृतीप्सितत्वेन = कृत्याऽऽप्तुमिष्टत्वेन हेतुभूतेन सुखमपि कार्यमिष्यते

अलौकिकनियोगे तु न किञ्चिन्मानमीक्ष्यते ।
लोके वाचाञ्च सर्वासान्तत्परत्वन्न युज्यते ॥ २७ ॥
प्रयोजनवदज्ञातज्ञापकत्वञ्च मानता ।
शब्दस्य कार्यपरता त्वाचार्यैरेव खण्डिता ॥ २८ ॥

## किञ्चिद्व्याख्या

=अङ्गीक्रियते। [1]एवञ्च रसपरवाक्यस्थपदानामपि व्यञ्जकत्वेन सुखात्मककार्यसम्बन्धिनि विभावादिरूपार्थे शक्तिसत्त्वान्न विरोध इति भावः ॥ २६ ॥

उक्तरीत्या सिद्धपराणामपि वाक्यानाम्प्रामाण्यमस्तीत्यायातम् । ये तु न पूर्वोक्तङ्कार्यं अपितु कृत्या यागादिकलञ्जभक्षणाद्यन्यतरद्वारा जन्यन्नियोगापरपर्यायं लिङाद्यर्थभूतमपूर्वाख्यमलौकिकम्, साक्षात् परम्परया वा तदन्वित एवार्थे पदानां शक्तिः, रसपदार्थभूतसुखस्य पुनरतथात्वान्न शब्दप्रत्याय्यत्वमिति वदन्ति, तान् प्रत्याह—अलौकिकेति । अलौकिकनियोगे तु विषये किञ्चिन्मानं नेक्ष्यते। तमभ्युपेत्याप्याह—लोके सर्वासां वाचां तत्परत्वन्न युज्यते च ॥२७॥

[2]कार्यपरस्यैव वाक्यस्य प्रामाण्यन्न सिद्धपरस्येति वादिनाम्मतं प्रामाण्यस्यान्याद्दृशत्वप्रदर्शनपूर्वकम्प्रत्याचष्टे—प्रयोजनेति । प्रयोजनवदज्ञातज्ञापकत्वञ्च मानता । अज्ञातेत्यने-

### टिप्पणी

१ एवञ्च=सुखस्यापि कार्यत्वे च । रसपरेत्यादेश्शक्तिसत्त्वादित्यन्वयः । २ कार्यपरस्यैवेति । प्रवृत्तिनिवृत्त्यन्यतरपरस्यैवेत्यर्थः ।

देवताधिकृतिन्यायात् पदैरन्यपरैरपि ।
प्रयोजनवदज्ञाताबाधितार्थमतिर्भवेत् ॥ २९ ॥
तस्मादन्यपरत्वे वा स्वातन्त्र्ये वा पदानि नः ।
व्यञ्जयन्ति परानन्दं सहकार्यानुरूप्यतः ॥ ३० ॥

इति श्रीपरमहंसपरिव्राजकाचार्यवर्य-विश्वविश्रुतसर्वतन्त्र-

किञ्चिद्व्याख्या

नाबाधितेत्यपि द्रष्टव्यम् । तच्चोत्तरकारिकायां व्यक्तम् । [1]एवकारार्थकचकारेण कार्यप्रतिपादकत्वस्य मानतात्वनिरासः । प्राभाकरैः कार्यप्रतिपादकत्वरूपस्यैव प्रामाण्यस्याभ्युपगतत्वात्तदेवाङ्गीक्रियतामित्यत आह—शब्दस्येति । शब्दस्य कार्यपरता तु आचार्यैरेव=लोकगुरुभिर्भगवत्पूज्यपादैरेव खण्डिता भवति । तथा च नास्माभिस्तत्खण्डने प्रयत्यते पिष्टपेषणन्यायापत्तेरिति भावः ॥ २८ ॥

ननु प्रामाण्यस्यैतादृशत्वे किञ्चिदर्थतात्पर्येण प्रयुक्तस्य शब्दस्य तात्पर्याविषयीभूतार्थान्तरेऽपि प्रामाण्यमापद्यत इत्याशङ्कां [2]सदृष्टान्तमिष्टापत्त्या परिहरति—देवताधिकृतीति । देवताधिकृतिन्यायात्=शारीरकमीमांसायाः प्रथमाध्याये तृतीयपादे देवताधिकरणे नवमतया प्रवृत्ते सूत्रभाष्यकृदादिभिः प्रतिपादितन्यायमनुसृत्य अन्यपरैरपि=स्वार्थभिन्नार्थपरैरपि पदैः प्रयोजनवदज्ञाताबाधितार्थमतिर्भवेत् ॥ २९ ॥

उक्तरीत्या शब्दस्य रसप्रत्यायकतायान्न काचिदप्यनुप-

टिप्पणी

१ एवकारः=तस्यार्थः एवार्थो यस्येति विग्रहः । यद्वा चकारैवकारयोर्भिन्नतया तदर्थयोरौपाधिकभेदमादाय गजवदनादिवद्विग्रहः । २ सदृष्टान्त-

स्वतन्त्रताक-श्रीमधुसूदनसरस्वतीयतिवरविरचिते श्रीभगवद्भक्तिरसायने भक्तिरसनिरूपणं नाम तृतीय उल्लासः ।

### किञ्चिद्व्याख्या

पत्तिरतस्तस्य तत्प्रत्यायकत्वं सिद्धमिति प्रतिपादयन् भक्तिरसतात्पर्यकं रसनिरूपणमुपसंहरति—तस्मादिति । अन्यपरस्यापि शब्दस्य प्रयोजनवदज्ञाताबाधितस्वार्थप्रमापकत्वादित्यर्थः । नः=अस्माकम् । अस्मन्मत इति यावत् । पदानि अन्यपरत्वे वा स्वातन्त्र्ये=स्वार्थपरत्वे वा सति सहकार्यानुरूप्यतः=सहकारिणा[1]मानुरूप्यमवाप्य । तत्तद्रसानुरूपान्दोषाभावगुणादिरूपसहकारिणः प्राप्येति यावत् । आनुरूप्यमानुकूल्यम् । परानन्दं व्यञ्जयन्ति । विभावादिबोधनद्वारेति भावः । स्वातन्त्र्ये वेति दृष्टान्तार्थम् । प्रत्येकं वाकारप्रयोगस्समप्राधान्यद्योतकः ॥ ३० ॥

[2]राजीवराजनयनं रमणीयरूपं
राधापयोधरसरोरुहराजहंसम् ।
काशीशमानससरोवरवासशीलं
वातालयेशमनिशं शरणं व्रजामः ॥

टिप्पणी

मिति । स्वार्थेऽपि प्रमाणत्वेन देवताधिकरणे साधितं "वज्रहस्तः पुरन्दर" इत्यादिवाक्यं दृष्टान्तः । किञ्चिदर्थतात्पर्यकशब्दस्यान्यार्थेऽपि प्रामाण्यं सम्भवति, यथा वज्रहस्तः पुरन्दर इत्यादेरित्येवन्तस्य दृष्टान्तता ।

१ आधेयत्वरूपस्सम्बन्धष्षष्ठ्यर्थः । २ राजीवराजे ( विषये ) नयनं यस्येत्यपि विग्रहः ।

## किञ्चिद्व्याख्या

भक्त्यैव भवजय [1] इति कलिसमयेऽस्मिन्नसौ रसग्रन्थः।
विवृतो मया नियोगा [2] दखिलजगद्वासिवासुदेवस्य ॥
न हि मे विवृतौ शक्तिर्न च शास्त्रेषु निर्णयः।
इति [3] साधुषु सन्तिष्ठे विषयेष्वखिलेष्वपि ॥

### टिप्पणी

१ इतिर्हेतौ। अन्वयश्चास्य विवृत इत्यत्र। कदा विवृतः? अस्मिन् कलिसमये = अत्यन्तघोरतयाऽनुभूयमाने कलिकाले। इत्यस्मिन् कलिसमय इत्यपि प्रकाररूपमितिपदार्थम्दिनमयसमयञ्चादाय योज्यम्, १८४४४१४ तमे हि कलिदिने विवृतिरतीता।

२ कस्य भक्त्या, कस्य वा नियोगादित्यपेक्षायामाहाखिलेत्यादि।

यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ।
तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः ॥
धर्मस्सत्यदयोपेतो विद्या वा तपसाऽन्विता।
मद्भक्त्याऽपेतमात्मानञ्च सम्यक् प्रपुनाति हि ॥

इत्येतत्प्रभृतयश्श्रुतिस्मृतयोऽत्र स्मर्तव्याः।

शुध्यति हि नान्तरात्मा कृष्णपदाम्भोजभक्तिमृते।
वसनमिव क्षारोदैर्भक्त्या प्रक्षाल्यते चेतः ॥

इत्येवमाद्या भगवत्पादानाम्प्रकरणभणितयश्च। वासुदेवो बृहद्भानुः, वसुप्रदो वासुदेवः, भूतावासो वासुदेव इत्यत्र च तेषां वासुदेवनामविवरणान्यपि भाष्यपतानि ग्रहीतव्यानि।

३ साधुषु सन्तिष्ठे = सज्जनान्निर्णेतृतया सम्यगाश्रये। स्थेयत्वेन

किञ्चिद्व्याख्या

अपि गुणपरमाणुस्पर्शहीनं समन्ता-
[1] दितरगिरिपरीतं लेखनम्मामकीनम् ।
[2] व्रजगतजनमित्रन्तत् कुचेलोपनीत-
ङ्कुचिपिटमिव चीवत्वादरादानतोऽस्मि ॥

इति "पोल्पाक्करमनक्कल् अनुजन्नम्पूतिरिप्पाट्, दामोदरन्नम्पूतिरिप्पाट्" इति वा निर्दिश्यमानेन समस्तशास्त्रसमुपकारकन्यायशास्त्रप्रभृतौ श्रीपरीक्षिदित्यपरनामविराजमान-महामहामहिम-श्रीरामवर्मनामधेय-गोश्रीमहाराज,महामहोपाध्याय-भट्ट-श्रीगोदवर्मनामक-कोटिलिङ्गराज,शाब्दिकतिलक-श्रीमदय्याशास्त्रिमहीसुरमहोदयादिशिष्येण वेदान्तितिलकविरुदभाजा श्रीदामोदरशर्मणा विरचिता श्रीभगवद्भक्तिरसायनतृतीयोल्लासस्य किञ्चिद्व्याख्या ।

॥ श्रीकृष्णार्पणमस्तु ॥

टिप्पणी

× संशयस्थलेनिर्णायकत्वरूपेण तेषामाश्रयणं हि तेषु स्थितिः । यथा—
संशय्य कर्णादिषु तिष्ठते यः । इत्यादौ ।

१ इतरगिरिपरीतम् = दोषपर्वतैर्व्याप्तम् । ईदृशमपि मामकीनं लेखनङ्कुचेलोपनीतङ्कुचिपिटमिव चीवत्विति सम्बन्धः । २ व्रजगतजनमित्रमिति चीवने कर्तृतयाऽऽनतौ कर्मतया चान्वेति । तदिति । अतिललितबालगोपालतया *विलसत्, पारमैश्वर्यपरमकारुणिकत्वाद्यनन्तकल्याण-

× संशयस्थलेनिर्णायकत्वेति । यद्विषयकस्संशयस्तन्निर्णायकत्वेत्यर्थः,
विवादपदनिर्णेता स्थेय इत्यभिधीयते । इत्युक्तेः ।

* विशेषेण = अव्याजरमणीयतया लसत् = क्रीडत्, नन्दयशोदादींश्च श्रीदामस्तोककृष्णप्रमुखांश्च राधाचन्द्रावलीप्रभृतीश्च तत्तद्रीत्याऽऽखिङ्कत्,

टिप्पणी

गुणगणसुमधुरमहोदधिरिति च प्रसिद्धमित्यर्थः। ×यद्वा तत् = ब्रह्म। ननु मित्रत्वन्नाम शत्रुत्वमिव शारीरो धर्मविशेषः शरीरञ्च ब्रह्म न भवतीति कथमत्र तत्पदस्य "तत्त्वमसी"त्यादाविव ब्रह्मार्थ इति चेत् +सत्यम्, जाग्रति हि—

"अहो भाग्यमहो भाग्यन्नन्दगोपव्रजौकसाम्।
यन्मित्रम्परमानन्दम्पूर्णम्ब्रह्म सनातनम्" ॥

---

शोभमानमित्यपि। क्रीडनश्लेषणदीप्त्यो हि लसधात्वर्थतया धातुरूपादर्शादौ दर्शिताः। श्लेषणमालिङ्गनमिति धात्वर्थप्रकाशिका। दीप्तिश्शोभा। अत एव "शुभ दीप्ता"विति धातुपाठः।

× भगवद्गुणानाञ्चिन्मयानान्न निर्गुणत्वेन मायिकगुणविरहरूपेण विरोध इति दर्शयन् प्रकारान्तरेण तत्पदं विवृणोति—यद्वेति। चिदेव हि तत्तद्गुणत्वेन (पारमैश्वर्यत्वपरमकारुणिकतात्वादिना) स्फुरती भगवतश्चिद्रूपस्य गुणताम्भजत इति भक्तिरसिकैरवसेयम्।

श्रुतिभिर्महापुराणैस्सगुणगुणातीतयोरैक्यम्।
यत् प्रोक्तङ्गूढतया, तदहं वक्ष्येऽतिविशदार्थम् ॥

(प्रोक्तम् = परमतात्पर्येणोक्तम्भवति) इति प्रतिज्ञाम्पुरस्कृत्य प्रवृत्तो भगवत्पादोपदेशश्रीपशुपकुलतिलकविविधलीलामयस्सदुपपत्तिसमुदयस्सविस्तरोऽत्र विस्तरभयादेव न लिख्यते। ये पुनररसिकशिरोमणयश्श्रीमद्भागवतशास्त्रमपरिशीलयन्तश्शुष्कवेदान्तिनस्सगुणनिर्गुणयोर्भेदं वदन्ति, तैस्सोऽयं वेदान्तगुरुवरनीराजितपदाम्बुजानां सारोपदेशस्स्वयम्पुस्तकसङ्ग्रहतो द्रष्टव्यः।

+ सत्यमित्यर्धाङ्गीकारे। मित्रत्वस्य शरीरधर्मत्वमितरशरीरस्य ब्रह्मव्यतिरिक्तत्वञ्च वयमुररीकुर्मो न पुनरवशिष्टमित्यर्थः। तत्र हेतुर्जाग्रति

टिप्पणी

"कृष्णमेनमवेहि त्वमात्मानमखिलात्मनाम् ।
जगद्धिताय सोऽप्यत्र देहीवाऽऽभाति मायया" ॥

इत्येवमाद्या ब्रह्मसाक्षात्कर्तृसार्वभौमश्रीशुकोक्तिकोटयः । कृष्णो ब्रह्मैव शाश्वतमित्यादिश्रुतिशतानि च । अत्र जगद्धिताय मायया कयापि शरीरत्वेन भासमानं सच्चिदानन्दघनं श्रीकृष्णस्वरूपभूतम्परब्रह्मैव श्रीकृष्ण-

---

हीत्यादि । ब्रह्मसाक्षात्कर्तृसार्वभौमेति । अत एव विजृम्भते तदीयमुक्तधुरन्धरत्वप्रदर्शिनी "शुको मुक्तो वामदेवोऽपि मुक्त" इति श्रुतिः । शरीरत्वेन भासमानमिति । दर्शितञ्च कतिपयपद्यैरिन्द्रियसामान्यम्प्रति तद्विशेषान् प्रति च गोचरत्वं वेदान्तनितान्तनिष्णातैर्भगवत्पादैः—

दौर्भाग्यमिन्द्रियाणाङ्कृष्णे विषये हि शाश्वतिके ।
क्षणिकेषु पापकरणेष्वपि सज्जन्ते यदन्यविषयेषु ॥

( इन्द्रियभागधेयभूताच्छाश्वतिकात् कृष्णादतिरिक्तत्वे तु परब्रह्मणोऽद्वैतविलोप आपद्येत )

कन्दर्पकोटिसुभगं वाञ्छितफलदन्दयार्णवङ्कृष्णम् ।
त्यक्त्वा कमन्यविषयन्नेत्रयुगन्द्रष्टुमुत्सहते ॥
पुण्यतमामतिसुरसाम्मनोभिरामां हरेः कथान्त्यक्त्वा ।
श्रोतुं श्रवणद्वन्द्वङ्ग्राम्यङ्कथमादरम्भवति ॥

इत्यादि । पुण्यतमामित्यदृष्टम्मनोभिरामामिति दृष्टञ्च फलातिशयन्दर्शयति । रसिकान् ग्राहयितुमाहातिसुरसामिति । अतिशयिता लौकिकरसानरसीकुर्वन्तश्शोभना निरुपमपुमर्थभूता रसाश्शृङ्गारादिप्रेयोन्तमिळिता नव, शुद्धश्च भक्तिरसा यस्यां साऽतिसुरसा, तां श्रीमद्रासविहरणादिकथाम् । समुदाहृतञ्च हर्षप्रकरणे तेषामेव भाषणम्—कृष्णकथासंश्रवणे महोत्सव इति । ग्राम्यम् = अश्लीलम् = दूरेहरित्वादफलकं विपरीतफलकञ्च वचः । आदरम्भवति = उत्सहते ।

टिप्पणी

शरीरत्वाम, न पुनरितरशरीरवत् प्राकृतमिति प्रथमोक्तिभिरतिसुलभम् । विवेचितश्चैतदद्वैतमतस्थापकमकुटमण्डनमहामणिभिर्मूलकृद्भिरेव विकसितभगवद्गीतासरसिजसमास्वादनसरसपरमहंसवतंसैः । इत्थञ्च सति कृष्णो ब्रह्मैव शाश्वतमित्येतत्प्रभृतीनामपि श्रीकृष्णविग्रहैकपरता निरुपद्रवस्पर्शा भवति । सङ्गच्छते च

अहं सर्वस्य प्रभवो मत्तस्सर्वम्प्रवर्तते ।

इति श्रीमुखोक्तेर्भाष्ये भगवत्पादीये "अहम् = परम्ब्रह्म वासुदेवाख्यम्" इति विवरणम् ।

कृषिर्भूवाचकश्शब्दो णश्च निर्वृतिवाचकः ।
तयोरैक्यम्परम्ब्रह्म कृष्ण इत्यभिधीयते ॥

इति स्मृतेरपि तद्विग्रहपरत्वमनपायमेव । अपि च—"कृष्णः परमसुन्दरः" "सर्वज्ञो भगवान् कृष्णः" इत्यत्रत्ययोः कृष्णपदयोर्नार्थभेदः । ज्ञानरूपस्य विग्रहस्य ज्ञानकर्तृता पुनरौपचारिकी । यथा सविता प्रकाशत इत्यत्र सवितुः प्रकाशकर्तृत्वम् । अन्यच्च—

सदा सेव्यः कृष्णस्सजलघननीलः करतले
दधानो दध्यन्नन्तदनु नवनीतम्मुरळिकाम् ।
कदाचित् कान्तानाङ्कुचकलशपत्रालिरचना-
समासक्तस्स्निग्धैस्सह शिशुविहारं विरचयन् ॥

इत्येवमखिलगोकुलकामिनीकदम्बककुचकन्दुककेळिकरकरकमलजलधरसहोदरमनोहरकळेबरनिरन्तरनिषेवणनिरतानान्निखिलपरमहंससमुदयसततसेवितचरणनळिनयुगळानां स्वामिश्रीशङ्करभगवत्पूज्यपादानान्न ब्रह्मनिष्ठत्वभङ्गस्य विटसङ्गस्य वा प्रसङ्गः । ( कान्ताकुचकलशगोचरमखिलेत्यादिकमसत्यमितरेषामपि दध्यन्नादीनाञ्चतुर्णामुपलक्षणम् । निरन्तरेति सदे

टिप्पणी

त्यस्य विवरणम् । सेवनस्य सार्वदिकत्वादेव तेषामेषा नमस्कृतिः—

सदैव पादपङ्कजम्मदीयमानसे निज-
न्दधानमुत्तमाळकन्नमामि नन्दबालकम् । इति ।)

उपदिश्यते च तैरितरेभ्यः—

स्नानव्याकुलयोषिद्वस्त्रमुपादायागमुपारूढं
व्यादित्सन्तीरथ दिग्वस्त्रा दातुमुपाकर्षन्तन्ताः ।
निर्धूतद्वयशोकविमोहम्बुद्धम्बुद्धेरन्तस्थं
सत्तामात्रशरीरम्प्रणमत गोविन्दम्परमानन्दम् ॥

इति रीत्या पुरुतरप्रकारैः । अपरञ्च—निश्शेषनिगमनिचयसारसर्व-स्वभूतश्रीमन्नामाष्टोत्तरशतान्तर्गतस्य सच्चिदानन्दविग्रहनाम्नो मुख्यार्थपर-ताऽपि परिपालिता भवतीति सकलमपि सुभगम् । चीवत्विति । चीवृ-आदानसंवरणयोरिति धातुपाठः । आदानङ्ग्रहणं, संवरणं स्वीकार इति धात्वर्थप्रकाशिका । आद्रादिति देहळीदीपन्यायेनान्वेति ।

मृदुसुरभिसमीरे सूरजातीरदेशे
नवकुसुमसुभूषञ्चारुपिञ्छावतंसम् ।
स्मितमधुरमुखाब्जं रासलीलाविलोल-
ङ्कलय कलय चेतो गोपिकाभागधेयम् ॥

इति साङ्गटिप्पणीकं सविवृतिकश्रीभगवद्भक्तिरसायनम् । शुभं स्यादिति मूलकारिकासङ्ख्या ।

"श्रीकृष्ण गोविन्द हरे मुरारे
हे नाथ नारायण वासुदेव" ।

॥ श्रीकृष्णार्पणमस्तु ॥